मूले पाशुपतादीत्यादिपदग्रहणेऽप्यत्र तदग्रहणं त्वेकदाऽनेकैर्वादिभिः सह कथाऽसंभवादेकैकेनैव कथामभिप्रेत्य । कारणमित्यस्य विवरणं प्रमाणमिति । लिङ्गमित्यर्थः ॥ आशयादिदोषवशादिति ॥ बुध्यादिदोषवशादित्यर्थः । आदिपदेन कर्णदोषपरिग्रहः । द्विषदन्नभोजननिषेधपरस्याप्याप्तोक्तस्य विषं भुंक्ष्वेति वाक्यस्य हालाहलाशनरूपोऽन्योर्थो बुद्धिदोषवशात्कदाचित्प्रतीयते । न च तत्रार्थे वाक्यस्य तात्पर्यमस्ति । तथा घटानयनपरतया प्रयुक्तस्य घटमानयेति वाक्यस्य कदाचित् श्रोतुः श्रोत्रदोषात् घटानयनरूपोऽर्थः प्रतीयते । न च तत्रार्थे वाक्यस्य तात्पर्यमस्तीति भावः । नन्वदुष्टकरणजन्यप्रतीतेरेव वाक्यतात्पर्यलिङ्गताङ्गी-कारान्नोक्तव्यभिचार इत्यतः स्थलान्तरे व्यभिचारमभिप्रेत्याह । कचित्तुल्यवदिति ॥ तुलया संमिते तुल्ये । तयोरिव तुल्यवदित्यर्थः । तुलाशब्दात् 'संमितार्थे नौवयोधर्मविषमूलशीततुलाभ्यस्तार्य- तुल्यप्राप्यवध्यानाम्यसमसंमितसंमितेष्विति यत्प्रत्यये तुल्यमिति रूपम् । ततस्तत्र तस्यैवेति षष्ठ्यन्ताद्वतिप्रत्यये तुल्यवदिति रूपं ज्ञेयम् । अर्थद्वयमिति ॥ यथा राजा कुवलयबन्धुरिति वाक्यस्य इन्दुः कुमुदबन्धुरिति, सार्वभौमो भूमण्डलबन्धुरिति चार्थद्वयं शक्तिवृत्त्यैव प्रतीयते । अन्यतरस्मिंस्तात्पर्येण प्रयुक्ते च तत्रान्यतरस्मिन्नर्थद्वये वा तात्पर्याभावाद्व्यभिचार इति भावः ।

शास्त्रतात्पर्यनिर्णय इति ॥ ननु शक्त्यतिरिक्तं किं तात्पर्यं, तात्पर्यवृत्तेरतिरिक्ताया अन्यत्र निराकृतत्वादिति चेदत्राहुः । सत्यमेव तथापि तयोरस्ति भेदः । पदस्य सामान्यतः इतरान्विते या वृत्तिः सा शक्तिः । तस्याः एव पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानं वा तदाहितशक्त्यन्तरं वा तात्पर्यमिति । तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यमिति । व्याख्यानं प्रतीतिं च विनेति ॥ पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यामित्यत्र पृथग्विनानानाभिरिति योगविभागः कर्तव्यः । पृथगादिशब्दयोगे द्वितीयाविभक्तिर्भवतीत्येतदर्थमिति वृत्त्यादावुक्त-त्वादिह विनाशब्दयोगे व्याख्यानं प्रतीतिं चेति द्वितीयाविभक्तिः साधुः । एतच्चेति ॥ उपक्रमादेः वाक्यतात्पर्यनिर्णये लिङ्गत्वं चेत्यर्थः । लौकिकपरीक्षकेति ॥ अस्मिन् ग्रामे मन्त्री वर्तते स एव राजा किं राज्ञेत्याप्ततमप्रयुक्तवाक्येषु



कुशाग्रीयबुद्धेः श्रोतुरुपक्रमवाक्यस्य द्वितीयादिवाक्येषूपचरितार्थपरत्व-निर्णायकत्वमनुभवसिद्धम् । एवं भोजनकाले प्रयुक्तस्य सैन्धवमानयेति वाक्यघटकसैन्धवपदस्य लवणतात्पर्यकतानिर्णायकत्वं प्रकरणस्य लौकिकानु-भवसिद्धमित्यर्थः । परीक्षकानुभवसिद्धत्वं तु शास्त्रे तत्र तत्र विक्षिप्योक्तम् । चन्द्रिकायां चात्राधिकरणे संगृह्योक्तं द्रष्टव्यम् ॥

## ईक्षत्यधिकरणम् I-1-5

**न्या.वि. — न च तस्यावाच्यत्वं श्रुत्यभिप्रायः । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिसहितानुभवस्य बलवत्त्वात् ॥**

**टीका—** ॐ ईक्षतेर्नाशब्दम् ॐ ॥ न ब्रह्मणो मुख्यया वृत्त्या शास्त्रप्रतिपाद्यत्वं युक्तम् । 'यतो वाचः' इत्यादिश्रुत्या तस्यावाच्यत्वोक्तेरिति प्राप्ते प्रतिविधत्ते ॥ न चेति ॥ स्यादेवं यदि तस्य ब्रह्मणोऽवाच्यत्वं 'यतो वाचः' इत्यादिश्रुत्यभिप्रायः स्यात् । न चैवम् । किं तर्हि । अप्रसिद्धत्वमेव । ईक्षणीयत्वश्रवणात् । ननूपपत्तिः कथं श्रुतिबाधनायालमित्यत आह ॥ सर्व इति ॥ अनुभवस्य ब्रह्मविषयस्येक्षणस्य । यद्यपि केवलमनुमानं न श्रुतितो बलवत् तथापि श्रुतिसहितस्य केवलश्रुतितो बलवत्त्वाद्युक्तं तेन श्रुतिबाधनमिति भावः ॥ ५ ॥

**प्रबोधिनी—** ॐ ईक्षतेर्नाशब्दं ॐ । तत् ब्रह्म अशब्दं शब्दावाच्यं न किं तु वाच्यमेव । कुतः ईक्षतेः । पुरुषमीक्षत इतीक्षणकर्मत्वव्यपदेशादिति सूत्रार्थः । अप्रसिद्धत्वमेवेति ॥ साकल्येनागोचरत्वमेवेत्यर्थः । उपपत्तिः ईक्षणीयत्वरूपा युक्तिर्यतो वाचो निवर्तन्त इति श्रुतिबाधनाय कथमलं समर्थेत्यर्थः । ब्रह्मविषयस्येक्षणस्येति ॥ विषयतासम्बन्धेनेक्षणमेवेक्षणीयत्वमिति भावः । सर्वे वेदा यत्पदमित्यादिश्रुत्यर्थस्त्वस्मत्कृतश्रीमद्भाष्यश्रुत्याद्यर्थरत्नावल्यां द्रष्टव्यः। अनुमानमिति ॥ ईक्षणीयत्वरूपोपपत्तिरित्यर्थः ॥

**न्या.वि. — न चावयवत्वविरोधः। 'नेह नानास्ति किञ्चन' इति श्रुतेरवयवाद्यभेदात् ॥ ६ ॥**

## आनन्दममयाधिकरणम् I-1-6

**टीका —** ॐ आनन्दमयोऽभ्यासात् ॐ ॥ न चावयवत्वेति ॥ ब्रह्म पुच्छमित्युक्तम् । ब्रह्म तावत्परमेश्वरः । 'असन्नेव स भवति' इत्यादिना तदवगमात् । आनन्दमयोऽपि चेत्परमेश्वरः स्यात्तदा स्वयमेव स्वस्यावयव इत्युक्तं स्यात् । स्वस्य स्वावयवत्वं च विरुद्धम् । यो यस्यावयवः स तस्माद्भिद्यत इति तयोर्भिन्नयोरेव दर्शनात् । न च ब्रह्मणोऽन्यावयवत्वमयुक्तम् । कोशाद्यानन्दमयाश्रयो ब्रह्मेत्यर्थाङ्गीकारात् । एकस्याश्रयाश्रयिभावोऽपि विरुद्ध एवेति ॥ नेहेति ॥ अवयवाद्यभेदादिति ॥ अवयवावयविनोर्भेदाभावात् । अयमाशयः । परमेश्वरे हि भेदं निराकुर्वती श्रुतिः प्राप्तिमपेक्षते । प्राप्तिश्चावयवावयव्यादिभावेनैव । अन्यथा निरवयवत्वाद्येव ब्रूयात् । तथा च अवयवावयव्यादिभावमङ्गीकृत्य निराकुर्वती तस्य विरोधमपि निराकरोतीति ॥ ६ ॥

**प्रबोधिनी —** ॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ आनन्दमय इत्युपलक्षणम् । अन्नमयादयः पञ्च ब्रह्मैव । अभ्यासात् ब्रह्मशब्दाभ्यासादिति सूत्रार्थः । यद्यप्येकविषयासकृदुक्तिर्मुख्योऽभ्यासः । न चैवमत्रास्ति । तथाप्यसकृदुक्ति-मात्रमत्राभ्यासपदेन विवक्षितमिति व्यक्तं सुधायाम् । चन्द्रिकायां त्वात्मशब्दाभ्यासादिति वृत्त्यन्तरमुक्तम् । इत्यादिनेति ॥ आदिपदेन 'अस्ति ब्रह्मेति चेद्वेद' इत्यस्य ग्रहः ॥ तदवगमादिति ॥ परमेश्वरत्वावगमादित्यर्थः ॥ तयोरिति ॥ भिन्नयोरेव तयोरवयवावयविनोरिति सामानाधिकरण्यम् । दर्शनादिति ॥ अनुभवादित्यर्थः । एतच्च तार्किकरीत्येति ज्ञेयम् ।

नन्वानन्दमयस्याब्रह्मत्वेऽप्यानन्दमयं प्रति ब्रह्मणः पुच्छत्वमयुक्तम् । तथा सति ब्रह्मणः स्वप्राधान्यं न स्यात् । तस्य च ब्रह्मणः सत्यं ज्ञानमनन्तं ब्रह्मेति स्वप्रधानतया प्रकृतत्वादित्याशंक्य निषेधति ॥ न चेति ॥ अन्यावयवत्वं आनन्दमयस्य पुच्छत्वम् । कोशादीति ॥ आनन्दमयस्य ब्रह्मपुच्छं पुच्छवत् पुच्छमाश्रयः इति श्रुत्यर्थाङ्गीकारान्न ब्रह्मणः स्वप्राधान्यभङ्ग इति भावः । व्यक्तमेतत्सुधायाम् । ननु तथापि ब्रह्मानन्दमययोरभेदः किं न स्यादित्यत



आह । एकस्येति । अवयवावयव्यादिभावेनेति । आदिपदेन तेनैष पूर्णः इत्युक्ताश्रयाश्रयीभावपरिग्रहः ।

## अन्तःस्थत्वाधिकरणम् I-1-7

**न्या.वि. — न च 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्' इत्यादिशब्दानामन्यविषयत्वम् ॥ श्रुतिसन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः ॥ ७ ॥**

**टीका — ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥** न च ब्रह्मेति ॥ अन्तःस्थपुरुष-विषयतया हीन्द्रादिशब्दाः श्रूयन्ते । तथा हि । जगतः प्रतिष्ठां आश्रयम् । चतुर्होतारं अन्तःकरणचतुष्टये विषयाणां होतारम् । प्रदिशः प्रतिदिशं, अनुक्लृप्तं व्यवस्थितम् । वाचो वेदस्य, वीर्यं सारं, मुख्यार्थम् । इन्द्रं, अग्निं, दिवो देव्या, आत्मानं स्वामिनं, वायुं, सवितारं, बृहस्पतिं, ब्रह्मा हिरण्यगर्भः तपसा अन्वविन्दल्लब्धवानिति । आदिशब्देन भाष्योदाहृतानां ग्रहणम् । इन्द्रादिशब्दानां च भगवदन्यविषयत्वं रूढ्या योगेन च प्रसिद्धमेव । न चात्र तत्त्यागे बाधकं किञ्चित् । एकोऽन्तःस्थो बहव इन्द्रादय इति चेन्न । तेषां परमेश्वरविभूतित्वेन भेदाभावात् । अत एवादृश्यत्वमपि तेषु युज्यते । न चैवं विनिगमने कारणाभावः । कार्यावस्थायाः कारणेऽभावात् । अतोऽन्तःस्थत्वमिन्द्रादीनामेवेति कुतो नेति चेत् समुद्रान्तःस्थत्वादिभगवल्लिङ्गश्रवणात् ॥ ननु श्रुतिभिर्लिङ्गैश्च पूर्वपक्षिते कथं लिङ्गेन निर्णयः । श्रुत्यपेक्षया लिङ्गस्य दुर्बलत्वाल्लिङ्गापेक्षया समबलत्वात् । न हि दुर्बलं प्रबलस्य बाधकं भविष्यति । नापि समबलं समबलस्येत्यत आह ॥ श्रुतीति ॥ श्रुतिग्रहणं लिङ्गस्याप्युपलक्षकम् । श्रुतौ विषये, श्रुत्या सन्देहः श्रुतिसन्देहः । इन्द्रादिश्रुतयो हि पुरन्दरादीनामिव भगवतोऽपि वाचकाः । 'स ब्रह्मा स शिवः स इन्द्र' इत्यादिवैदिकशब्द-प्रयोगबलेन रूढत्वसिद्धेः । परमैश्वर्यादिमत्त्वेन योगस्यापि सम्भवात् । लिङ्गं च सप्ताश्वयुक्तरथवत्त्वादिकं सूर्याद्यधिष्ठानस्य भगवतोऽपि सम्भवत्येव । ततश्चोभयसाधारणे श्रुत्यादौ किमिह पुरन्दरादि विषयमुत भगवद्विषयमिति सन्देह

एव स्यात्। साधारणेन वा श्रुत्यादिना किमत्र विवक्षितमिति सन्देह एव स्यात्। समुद्रान्तःस्थितत्वादिकं तु लिङ्गमनन्यथासिद्धं भगवन्निष्ठत्वादन्येन प्रकारेणान्यनिष्ठतया न प्रमितम् । निरवकाशेन दुर्बलेनापि सावकाशस्य प्रबलस्यापि बाधः प्रसिद्ध एव । अतः श्रुतिसन्देहे, अनन्यथासिद्धेन लिङ्गेन निर्णय उपपद्यते। श्रुत्यादिकं भगवत्येव मुख्यममुख्यं पुरन्दरादिषु। परमैश्वर्यादिकं हि तत्प्रवृत्तिनिमित्तम् । ईश्वरे निरवधिकमपराधीनं च । पुरन्दरादिषु तु तत्सावकाशं ईश्वरायत्तं च । रूढिरपि तेषु मुख्यार्थभगवत्सन्निधाननिमित्तमुख्यैव। न च भगवत्यन्यनिमित्ता। अत्र चानेके श्रुतिसंवादाः साक्षिणः। मुख्यामुख्ययोश्च मुख्ये संप्रत्ययः । सति चैवमभ्युपगमवादेनैव 'तद्धर्मोपदेशात्'इत्युक्तमिति ॥ ७ ॥

**प्रबोधिनी** — ॐ अंतस्तद्धर्मोपदेशात् ॐ ॥ अन्तः प्रविष्टमित्यादावन्तःप्रविष्टतया श्रुतो विष्णुरेव। तस्य ब्रह्मणो धर्माणां समुद्रस्थत्वब्रह्माण्डवीर्यत्वादीनां अन्तः श्रुते अन्तः समुद्रे यस्याण्डकोशमित्यादिनाऽभिधानादिति सूत्रार्थः। अन्तःस्थपुरुषविषयतया हीति ॥ अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तमित्युपक्रम्येति भावः । प्रतिष्ठामित्यस्यार्थः आश्रयमिति । चतुर्होतारमित्यस्य व्याख्यानं अन्तःकरणचतुष्टय इत्यादि । ज्ञानेच्छाद्वेषप्रयत्नेष्वित्यर्थः । प्रदिश इत्यस्य प्रतिदिशमिति व्याख्यानम् । अनुक्लृप्तमित्यस्य व्यवस्थितमिति विवरणम् । दिवो देव्याः, आत्मानं स्वामिनं, वायुमिति भारतीपतिमित्यर्थः, तत्त्याग इति ॥ प्रसिद्धार्थेन्द्रादित्याग इत्यर्थः ॥ विभूतित्वेनेति । अवतारत्वेनेत्यर्थः । तदुक्तं सुधायाम् । न च स्वतन्त्रानधिकैश्वर्यादिकमन्येषां विरुद्धमिति वाच्यम् । इन्द्रादीनां परमेश्वरात्मकत्वात् । स एव हि कार्यवशात्तत्तदुपाधिभेदभिन्नस्तास्ताः संज्ञा लभत इति । अत एवेति ॥ परमेश्वराद्भेदाभावादेवेत्यर्थः । तेषु युज्यत इति ॥ अदृश्येऽनात्म्ये इत्यानन्दमये उक्तमदृश्यत्वं युज्यत इत्यर्थः । नन्विन्द्रादीनां परमेश्वरापरपर्यायेण विष्णुनैक्ये सति तस्याप्यन्तःस्थत्वसम्भवादिन्द्रादीनामेवान्तस्थत्वमित्यत्र किं नियामकमित्याशङ्क्य निषेधति । न चैवमिति ॥ कार्यावस्थाया इति । कार्याणां कल्पितभेदानामिन्द्रादीनामवस्थायाः



अन्तस्थःत्वस्य कारणे शुद्धे परमेश्वरापरपर्यायविष्णावसम्भवादित्यर्थः । तथा च स्वरूपाभेदेऽपि विष्णोरिन्द्रादीनां चाविद्यकभेदस्यापि सत्वेन विष्णोरन्तःस्थत्वं नेति निषेधोपपत्तेरिति भावः । तदुक्तं सुधायाम् ॥ न चैवं सति विनिगमने कारणाभावः । अनुपहितधर्माणामुपहितेसम्भवात् । वैपरीत्यस्यासम्भवात् । तस्मादिन्द्रादय एवान्तःप्रविष्टत्वेन प्रतिपाद्यन्त इति ।

विनिगमने इन्द्रादिरेवेत्यत्र विनिगमने । उपहिते उपाधिविशिष्टे इति सुधावाक्यार्थः । इत्यादिवैदिकप्रयोगबलेनेति ॥ अत्रादिपदेन इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः इत्यादिपरिग्रहः । लिङ्गश्चेति ॥ सत्प्रयुञ्जन्ति रथमेकचक्रमिति श्रुत्युक्तं सूर्यलिङ्गमित्यर्थः । अस्याः श्रुतेर्वेदभाष्ये माधवकृतापव्याख्यानापहासस्त्वस्मत्कृतमारुतसूक्तविवृतौ द्रष्टव्यः । किमत्र विवक्षितमिति ॥ अत्र श्रुतावन्तःस्थतया विवक्षितं किमिन्द्रादिरुत विष्णुरिति सन्देह इत्यर्थः ॥ प्रसिद्ध एवेति ॥ श्येनेनाभिचरन्यजेतेत्यत्रेत्यर्थः । तत्र हि श्येनशब्दः किं गुणविधिः किं वा कर्मनामेति विषये लोके श्येनशब्दस्य द्रव्यविशेषपरत्वेनात्यंतनिरूढत्वाज्ज्योतिष्टोम आभिचारार्थो गुणविधिरिति पूर्वपक्षे प्राप्ते गुणविधौ तस्यैव स्तोतव्यत्वात् स्वस्य स्वात्मना सादृश्यायोगेन यथा वै श्येनो निपत्यादत्ते एवं द्विषंतं भ्रातृव्यं निपत्यादत्त इति वाक्यशेषात् कर्मनामत्वमेवेत्याद्याध्याये नामपादे तद्व्यपदेशं चेति चतुर्थे नये सिद्धान्तितत्वादिति भावः । श्रुतिस्मृतिसंवादा इति ॥ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्ति । अग्निं यमं मातरिश्वानमाहुः । यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । सोंऽतकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशः । नामानि सर्वाणि यमाविशन्ति । तं वै विष्णुं परममुदाहरन्ति । यो देवानां नामधा एक एव । वृत्रं यदिन्द्र शवसावधीरहमादित्सूर्यं दिव्यारोहयो दृशे । यत्सूर्यस्य परितः पतन्तीः पुरःसती रूपश एतसेकः । सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि । चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । यः सूर्यं य उषसंजजान यो अपां नेता सजनास इन्द्रः । उद्वेति प्रसवीता जनानां महान्केतुरर्णवस्सूर्यस्य । येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमंतः समुद्रे कवयो

वयंति तदक्षरे परमे प्रजाः । तमेताः पञ्चदेवताः परिम्रियंते विद्युद्वृष्टिश्चन्द्रमा आदित्योग्निः । ते येश्च शतम् ।

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
न तस्येशे कश्चन तस्य नाम महद्यशः ।
न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ॥
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ।
चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति ॥
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
विशेषनामानि ददौ स्वकीयान्यपि केशवः ॥
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं किंचिदुपाश्रितः ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥
तापनी पाचिका चैव शोषणी च प्रकाशिनी ।
नैव राजन्रवेः शक्तिः शक्तिर्नारायणस्य सा ।
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।

नास्ति नारायणसमं न भूतं न भविष्यति ॥ इत्यादय इत्यर्थः । नन्वेवं श्रुत्यादिभिर्मुख्यार्थस्य विष्णोरेव ग्रहणे सिद्धे सूत्रे निरवकाशलिङ्गोक्तिर्व्यर्थेत्यतः आह । सति चैवमित्यादिना ॥ ७ ॥

## आकाश-प्राण-ज्योति-गायत्र्यधिकरणम् I-1-8-11

**न्या.वि.** - अधिभूताध्यात्माधिवेदगतानामपि शब्दानामचेतनत्वजीवान्वयव्यतिरेकित्वनित्यत्वेषु विद्यमानेष्वपि भगवद्विषयत्वमेवानन्यथासिद्धलिङ्गैः ॥ 'तावानस्य महिमा ततो ज्यायाँश्च पुरुषः' इत्यादिशब्दसहितलिङ्गैश्च ॥ सन्दिग्धश्रुतिलिङ्गाभ्यामुक्ताभ्यामपि असन्दिग्धयोः केवलयोरेव बलवत्त्वात् ॥ ११ ॥



**टीका**— ॐ आकाशस्तल्लिङ्गात् ॥ ॐ ॥ ॐ अत एव प्राणः ॐ ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ एतानि चत्वार्यतिदेशाधिकरणानि । अत्र पूर्वपक्षेऽधिकाशङ्का दर्शनीया । ज्योतिरधिकरणे तु भाष्यादेव साधिता । यदाह– 'अग्निसूक्तत्वात्' इति । अतस्तद्विहायान्यत्र भाष्याद्यनवगताधिकाशङ्काप्रदर्शनेन लाघवायैकोक्त्या न्यायविवरणं क्रियते । तत्र तावदाकाशो भूताकाश एव भवेत् । आकाशशब्दस्य तत्र योगरूढिभ्यां प्रवृत्तत्वात् । न च पूर्ववत्सावकाशत्वादिन्यायः । भगवद्विषयस्य निरवकाशप्रमाणस्याभावात् । नापि मुख्यत्वादिन्यायः । इन्द्रादयो हि चेतनाः परमैश्वर्यादिशब्दगतया आगन्तुकया वर्षणादिकया चेष्टाया प्रवृत्तिनिमित्तेनेन्द्रादिशब्दवाच्याः । सम्भवति चेतनानां चेष्टानां परायत्तत्वं राजपुरुषादिषु दर्शनात् । आकाशस्त्वचेतनः । तदीयं चाकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वादिकं स्वभाव एव न त्वागन्तुकम् । तत्कथं पराधीनं स्यादिति । तथा प्राणोऽपि मुख्यप्राण एव । प्राणशब्दस्य तत्र प्रसिद्धेः । न च निरवकाशत्वं बाधकमस्ति । नापि प्राणशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वम् । यद्धि यत्र न सम्भवति तत्तत्र दृश्यमानमन्याधीनं कल्प्यते । सम्भवति च तन्मुख्ये जीवनस्य तदन्वयव्यतिरेकानुविधायित्वात् । तत्प्रमाणकत्वाच्च हेतुहेतुमद्भावस्येति ।

एवं गायत्र्यपि देवविशेष एव । तच्छब्दस्य तत्र प्रसिद्धत्वात् । बाधकाभावाच्च । न च गायत्रीशब्दप्रवृत्तिनिमित्तस्य वाचकत्वापरपर्यायस्य गानस्यान्याधीनता सम्भवति । येन मुख्यामुख्यन्यायावकाशः । वाचकत्वस्य शब्दस्वभावत्वात् । आगन्तुकस्यैव पराधीनत्वात् । न चाकाशन्यायः । तस्योत्पत्तिमतोऽवकाशत्वसहितस्यैव परायत्तत्वोपपत्त्या तदुपपत्तेः । वेदस्य तु नित्यत्वेनानादित्वात् । न चाकाशो नित्यः, भूताकाशस्य तत्र पूर्वपक्षितत्वात् । तच्च 'सर्वाणि ह वा इमानि भूतानि' इति भूतोत्पत्तिस्थितिलयकारणत्वभूतज्यायस्त्वलिङ्गादवगम्यते । भूतानि च महाभूतान्येव । 'अस्य लोकस्य का गतिरित्याकाश इति होवाचे'त्युक्तपृथिवीगतित्वोपपादनार्थत्वादिति ॥ एवं प्राप्ते प्रतिविधत्ते ॥ अधिभूतेति ॥ अत्र भूताकाशमुख्यप्राणच्छन्दोविशेषेति वक्तव्ये

अधिभूतेत्यादिवचनमाकाशादिशब्दाः सौत्राः सजातीयोपलक्षणपराः इत्यस्य ज्ञापनार्थम् । एतदधिकरणान्तरेऽपि समानम् । तत्राकाशशब्दोऽधिभूतगतानां पृथिव्यादिशब्दानामुपलक्षकः । प्राणशब्दोऽध्यात्मगतानां चक्षुरादिशब्दानाम्, गायत्रीशब्दोऽधिवेदगतानामुष्णिगादिशब्दानाम् । अत्र विभक्त्यर्थेऽधिकरणत्वमात्रेऽव्ययं समस्तम् । ततश्चाधिभूतं भूतेष्वित्यर्थः । आत्मशब्दश्चेन्द्रियप्राणशरीरवचनः । अध्यात्ममात्मनीत्यर्थः । वेदशब्देन चावान्तरभेदा जगत्यादय उच्यन्ते । अधिवेदं वेदेष्वित्यर्थः । सर्वत्र विषयसप्तमी । गतानामवगतानां प्रसिद्धानाम् । अव्ययीभावद्वन्द्वगर्भः सप्तमीसमासः । अथवाऽधिकर्तव्यप्रधानेऽधिकरणेऽधिशब्दः । तथा चाधिभूतं भूतेषु वर्तमानः । एवमुत्तरत्र । एतच्च शब्दानां विशेषणम् । अव्ययीभावद्वन्द्वगर्भः कर्मधारयश्च समासः । यद्वा अधिभूतादि-शब्दैराकाशादीन्युच्यन्ते । समुदायैकदेशाश्रयणेनाधिकरणाधिकर्तव्यतोपपत्तेः ।

'गत'शब्दश्च प्राप्त्यर्थो विषयीकारिपरः । अव्ययीभावद्वन्द्वगर्भो द्वितीयासमासः । अचेतनत्वादीनां त्रयाणां यथासङ्ख्यं सम्बन्धः । आकाशप्राणगायत्रीणामिति शेषः । जीवो जीवनं, तस्यान्वयव्यतिरेकौ । स्वान्वयव्यतिरेकाभ्यां तत्करत्वमिति यावत् । अनन्यथासिद्धलिङ्गैः परोवरीयस्त्वश्रीलक्ष्मीपतित्व-गान-त्राणकर्तृत्वा द्यैर्निश्चीयत इति वाक्यशेषः । गायत्र्यधिकरणेऽधिकमपि प्रमाणमाह ॥ तावानस्येति ॥ पुरुषश्रुतिसहितपुरुषसूक्तोक्तत्वभूतपादत्वादिलिङ्गैश्चेत्यर्थः । न केवलं लिङ्गैः श्रुत्या चेति भावः । अत्राप्यनन्यथासिद्धत्वं ग्राह्यम् । तथापि कथं निर्णय इत्यत आह ॥ सन्दिग्धेति ॥ आकाशप्राणगायत्रीश्रुतयस्तावत् परमेश्वरेऽपि वाचकत्वशक्तियुक्तत्वेन अत्र किम्परा इति सदिग्धाः । अचेतनत्वादीनि च लिङ्गानि अनुव्याख्यानोक्तरीत्या न मुख्यामुख्यन्यायविघातायालमिति सन्दिग्धान्युच्यन्ते । परोवरीयस्त्वलिङ्गानि पुरुषश्रुतिश्चेत्येतानि भगवदेकनिष्ठत्वादसन्दिग्धानि । सावकाशेभ्योऽनेकेभ्योऽपि निरवकाशस्यैकस्यैव प्राबल्यान्निरवकाशद्वितीयश्रुतिसहितस्य सुतरां बलवत्त्वात् । मुख्यामुख्यन्यायस्याप्यनपाकृतत्वाद्युक्तो निर्णयः । एतेनानन्यथासिद्धेत्युक्तस्य प्रयोजनं दर्शितम् । केवलयोः श्रुतिलिङ्गयोः ॥



**प्रबोधिनी — ॐ आकाशस्तल्लिङ्गात् ॐ ।** आकाश इति होवाचेत्याकाशशब्दवाच्यो विष्णुरेव । स एष परोवरीयानुद्गीथः । स एषोऽनन्त इत्यादिना श्रुतपरोवरीयस्त्वादिलिङ्गादिति सूत्रार्थः । आकाशशब्दार्थस्तु आसमन्तात् काशनादाकाशः । आसमन्तात्कमश्नातीति वेति छान्दोग्यभाष्याद्युक्तदिशा ध्येयः ।

**ॐ अत एव प्राणः ॐ ।** तद्वै त्वं प्राणोऽभव इति तैत्तिरीयश्रुत्युक्तप्राणो विष्णुरेव । श्रीश्चते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे इति श्रीलक्ष्मीपतित्वलिङ्गादेवेति सूत्रार्थः । अवधारणेन तु लिङ्गस्य निरवकाशत्वमुक्तमित्याहुः ।

**ॐ ज्योतिश्चरणाभिधानात् ॐ ।** ज्योतिर्हृदय इत्युक्तं ज्योतिर्ब्रह्मैव । विमे कर्णेत्यादिना कर्णादीनां विरुद्धचरणाभिधानात् । कर्णादिसर्वेन्द्रियविदूरत्वलिङ्गादिति सूत्रार्थः । यद्यप्यत्र ज्योतिःप्रति कर्णादीनां विरुद्धाचरणरूपं करणादिविदूरत्वं वक्तुं विचरणाभिधानादिति वक्तव्यम् । तथाप्युपसर्गस्य द्योतकत्वमात्रम् । धातोरेव तु विचरणाभिधायकत्वमिति प्रदर्शनार्थं सूत्रस्य श्रुत्यनुगमप्रदर्शनार्थं च चरणाभिधानादित्युक्तम् । विचरणाभिधानादित्युक्तौ हि श्रुतौ वीत्यनेन चरतीत्यस्य मे मनः इति पदद्वयव्यवहितत्वाच्छ्रुत्यनुगमो न ज्ञायेतेति बोध्यम् ।

**ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ।** गायत्री वा इदं सर्वमित्युक्तगायत्री छन्दोविशेष एव । गायत्रीपदेन छन्दसोऽभिधानात् । तस्मान्न विष्णुरिति चेन्न । किं तु ब्रह्मैव गायत्री । कुतः हि यस्मात्तथा दर्शनम् । गानत्राणकर्तृत्वलिङ्गबोधक गायति त्रायति चेति श्रुतिरस्ति तस्मादित्यर्थः । विष्ण्वादिप्रसिद्धपदानि विहायाप्रसिद्धगायत्रीपदेन निर्देशे किं निमित्तमित्यत उक्तम् ॥ तथेति ॥ गानादिकर्तृत्वगुणविशिष्टतया चेतस्यंतःकरण अर्पणार्थं निगदात् गायत्री वा इदं सर्वमिति कथनादिति सूत्रार्थः । अतिदेशाधिकरणानीति । पूर्वसिद्धान्तस्योपरि तदनिवर्त्यामाशंकां कृत्वा तदुपपादनपूर्वकं निरवकाशलिङ्गेन सावकाशश्रुतिबाधरूपन्यायाति-देशादिति भावः । एतेनातिदेशिकी सङ्गतिरुक्ता भवति । तदुक्तं ''कृत्वा त्वभ्यधिकाशंकां

पूर्व एवातिदिश्यते । तत्रातिदेशिकी प्रोक्ता'' इति ॥ यद्यप्यत एव प्राणः इत्याद्यधिकरणत्रयेऽप्यंतरधिकरणन्यायातिदेशः तथाप्यभ्यधिकाशङ्काक्रमात्तत्क्रमः । शङ्काक्रमश्चोत्तरत्र स्फुटीभविष्यति ।

अधिगतेति ॥ ज्ञातेत्यर्थः । अनेन युक्तः प्राणाधिकरणे वायुसूक्तस्थस्य प्राणश्रुतिमात्रस्य निरवकाशविष्णुलिङ्गैर्बाधः । अत्र तु ज्योतिःश्रुतेर्न बाधः । प्रकरणरूपेण सूक्तेनानुगृहीतत्वादिति पूर्वपक्षोत्थानात्पूर्वाधिकरणेनैतदधिकरणस्यानन्तरसङ्गतिरुक्ता भवति ॥ भाष्यादीति ॥ आदिपदेन सूत्राणुभाष्यपरिग्रहः । पूर्ववदिति ॥ अन्तस्तद्धर्मोपदेशादित्यत्र प्रबलानामपीन्द्रादिश्रुतीनां हरौ सावकाशतया दुर्बलेनापि निरवकाशेन समुद्रांतःस्थत्वादिलिङ्गेनेन्द्रादौ बाध इवात्राप्याकाशनाम्नो हरौ सावकाशतया निरवकाशेन परोवरीयस्त्वादिलिङ्गेनाकाशनाम्नो भूताकाशे बाधः शङ्कनीय इति भावः । आदिपदेन लिङ्गस्य निरवकाशत्वग्रहः । निरवकाशप्रमाणस्येति ॥ हरावाकाशपदशक्तिग्राहकनिरवकाशप्रमाणाभावादित्यर्थः । उपलक्षणमेतत् । सुधोक्तरीत्या न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादित्यपि द्रष्टव्यम् । नामानि सर्वाणीत्यादिश्रुतिस्तु सङ्कुचितार्थेष्टव्येति भावः । नन्वाकाशस्य भगवदधीनत्वेन तत्रैवाकाशशब्दस्तदधीनत्वन्यायेन मुख्य इति स एवात्राकाशः इत्याशङ्क्य निषेधति ॥ न च मुख्यत्वादिन्याय इति ॥ मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इत्यर्थः । परमैश्वर्यादिरिति शब्दो यस्याः सा तथेत्यादीनां तृतीयांतशब्दानां पञ्चानामपि सामानाधिकरण्यम् । परायत्तत्वमिति ॥ तदुक्तं सुधायाम् । ऐश्वर्यं हि वर्षणशासनपालनादिरूपा चेतनसबन्धिनी चेष्टा । सा चागन्तुकज्ञानेच्छाकारणसंव्यपेक्षत्वात्स्वयमागन्तुकत्वाच्च कारणद्वारा स्वरूपतश्च परमेश्वरप्रसादायत्तेति युज्यत इति । तत्प्रमाणकत्वादिति ॥ अन्वयव्यतिरेकलिङ्गकत्वादित्यर्थः । एतेन पूर्वाधिकरणेनैतदधिकरणस्यातिदेशिक्यवांतरसङ्गतिरुक्ता भवति । गानस्येति ॥ गै शब्द इत्यतः गः स्थकन् ण्यु ट्चेति कर्तरि ण्युट् । इदमुपलक्षणम् । त्राणस्येत्यपि ग्राह्यम् । तदुक्तं सुधायाम् । गायत्रीशब्दप्रवृत्तिनिमित्तं हि गानत्राणकर्तृत्वम् । यथाह श्रुतिः । गायति च त्रायति चेति तस्माद्गायत्रीति । गानकर्तृत्वं नामार्थप्रतिपादकत्वम् ।



त्राणकर्तृत्वं चाध्येतॄणां पापाद्रक्षणशक्तिः । तदुभयं केन प्रकारेण हरेरधीनं स्यादिति ।

न चाकाशन्याय इति ॥ आकाशस्येव गायत्र्या भगवदधीनत्वेन गायत्रीश्रुतेर्भगवत्येव मुख्यत्वमित्यर्थः । नित्यत्वेनानादित्वादिति ॥ एतेन नित्यत्वादेव शब्दस्येत्यनुव्याख्याने नित्यत्वादित्यनादित्वसाधनायैवोक्तमिति ज्ञेयम् । अन्यथोत्पत्तावीश्वराधीनत्वापरिहारात् । ननु कृतक-क्रमविशिष्ट-वर्णसमुदायरूपस्य वेदस्य कथमनादित्वमिति चेदत्राहुः । भूतभविष्यद्भिः अखिलैः अध्यापकैरेकप्रकारेण पठ्यमानत्वरूपं नियतैकप्रकारत्वमेवानादित्वं विवक्षितम् । उक्तं हि तत्वनिर्णयटीकायां स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यत इति । एतदेव चानादिनित्यत्वमिति च ॥ न तु कूटस्थत्वादिरूपं मुख्यमनादित्वम् । येन क्रमस्य कृतकत्वेऽपीत्यादिटीकाविरोधः स्यात् । उक्तं च तर्कताण्डवे । ईश्वरोऽप्यस्मन्मते महोपाध्याय एवेति । यथा प्रत्यहमुपाध्यायबुध्युपाधिकः क्रमो वर्णेषु जायते एवमीश्वरबुध्युपाधिकः क्रमोऽपि वर्णेषु जायत एवेति तद्वाक्यार्थः । न च वाच्यमस्मदादिवदीश्वरस्यापि कथंचिद्भेदजनकत्वात्तत्स्वभावस्य तदधीनतापत्तिरिति । एतावता नियतैकप्रकारशब्दस्वभावभूतार्थप्रतिपादनादिशक्तेः पराधीनत्वासम्भवेनेश्वराधीनत्वविघटनोपपत्तेः । अन्यथाऽस्मदाद्यधीनत्वस्याप्यापातात् । स्वातन्त्र्यस्य चेश्वरेऽप्यभावात् । न चैवंविधमनादित्वमाकाशादीनामिति तदुक्तेरभ्यधिकाशंकाप्रदर्शकत्वमपीति न काचिदुपपत्तिरिति । नन्वेवं सत्यत्र नित्यत्वं नाम कूटस्थतयाऽऽद्यंतशून्यत्वम् । तच्च वेदानां नित्या वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमिति तत्वसंख्यानटीकाविरोधः । तत्र वेदानां निर्विकारत्वे सत्याद्यन्तशून्यत्वरूपमुख्यानादित्वस्यैव प्रतीतेरिति चेत् । सत्यम् । नित्या वेदा इति तत्त्वसंख्यानगतवेदशब्देन जहल्लक्षणया पञ्चाशद्वर्णानामेव ग्रहणेन तेषामेवोक्तमुख्यानादित्वस्याभिधानेन क्रमविशेषविशिष्टवर्णात्मकस्य वेदस्य नियतैकप्रकारत्वरूपपारिभाषिकानादित्वाभिधानं प्रत्युदाहततत्त्वसंख्यानटीकावाक्यस्याविरोधित्वात् ।

पूर्वं एवातिदिश्यते । तत्रातिदेशिकी प्रोक्ता'' इति ॥ यद्यप्यत एव प्राणः इत्याद्यधिकरणत्रयेऽप्यंतरधिकरणन्यायातिदेशः तथाप्यभ्यधिकाशङ्काक्रमात्तत्क्रमः । शङ्काक्रमश्चोत्तरत्र स्फुटीभविष्यति ।

अधिगतेति ॥ ज्ञातेत्यर्थः । अनेन युक्तः प्राणाधिकरणे वायुसूक्तस्थस्य प्राणश्रुतिमात्रस्य निरवकाशविष्णुलिङ्गैर्बाधः । अत्र तु ज्योतिःश्रुतेर्न बाधः । प्रकरणरूपेण सूक्तेनानुगृहीतत्वादिति पूर्वपक्षोत्थानात्पूर्वाधिकरणेनैतदधिकरणस्यानन्तरसङ्गतिरुक्ता भवति ॥ भाष्यादीति ॥ आदिपदेन सूत्राणुभाष्यपरिग्रहः । पूर्ववदिति ॥ अन्तस्तद्धर्मोपदेशादित्यत्र प्रबलानामपीन्द्रादिश्रुतीनां हरौ सावकाशतया दुर्बलेनापि निरवकाशेन समुद्रांतःस्थत्वादिलिङ्गेनेन्द्रादौ बाध इवात्राप्याकाशनाम्नो हरौ सावकाशतया निरवकाशेन परोवरीयस्त्वादिलिङ्गेनाकाशनाम्नो भूताकाशे बाधः शङ्कनीय इति भावः । आदिपदेन लिङ्गस्य निरवकाशत्वग्रहः । निरवकाशप्रमाणस्येति ॥ हरावाकाशपदशक्तिग्राहकनिरवकाशप्रमाणाभावादित्यर्थः । उपलक्षणमेतत् । सुधोक्तरीत्या न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादित्यपि द्रष्टव्यम् । नामानि सर्वाणीत्यादिश्रुतिस्तु सङ्कुचितार्थेष्टव्येति भावः । नन्वाकाशस्य भगवदधीनत्वेन तत्रैवाकाशशब्दस्तदधीनत्वन्यायेन मुख्य इति स एवात्राकाशः इत्याशङ्क्य निषेधति ॥ न च मुख्यत्वादिन्याय इति ॥ मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इत्यर्थः । परमैश्वर्यादिरिति शब्दो यस्याः सा तथेत्यादीनां तृतीयांतशब्दानां पञ्चानामपि सामानाधिकरण्यम् । परायत्तत्वमिति ॥ तदुक्तं सुधायाम् । ऐश्वर्यं हि वर्षणशासनपालनादिरूपा चेतनसबन्धिनी चेष्टा । सा चागन्तुकज्ञानेच्छाकारणसंव्यपेक्षत्वात्स्वयमागन्तुकत्वाच्च कारणद्वारा स्वरूपतश्च परमेश्वरप्रसादायत्तेति युज्यत इति । तत्प्रमाणकत्वादिति ॥ अन्वयव्यतिरेकलिङ्गकत्वादित्यर्थः । एतेन पूर्वाधिकरणेनैतदधिकरणस्यातिदेशिक्यवांतरसङ्गतिरुक्ता भवति । गानस्येति ॥ गै शब्द इत्यतः गः स्थकन् ण्यु ट्चेति कर्तरि ण्युट् । इदमुपलक्षणम् । त्राणस्येत्यपि ग्राह्यम् । तदुक्तं सुधायाम् । गायत्रीशब्दप्रवृत्तिनिमित्तं हि गानत्राणकर्तृत्वम् । यथाह श्रुतिः । गायति च त्रायति चेति तस्माद्गायत्रीति । गानकर्तृत्वं नामार्थप्रतिपादकत्वम् ।



त्राणकर्तृत्वं चाध्येतॄणां पापाद्रक्षणशक्तिः । तदुभयं केन प्रकारेण हरेरधीनं स्यादिति ।

न चाकाशन्याय इति ॥ आकाशस्येव गायत्र्या भगवदधीनत्वेन गायत्रीश्रुतेर्भगवत्येव मुख्यत्वमित्यर्थः । नित्यत्वेनानादित्वादिति ॥ एतेन नित्यत्वादेव शब्दस्येत्यनुव्याख्याने नित्यत्वादित्यनादित्वसाधनायैवोक्तमिति ज्ञेयम् । अन्यथोत्पत्तावीश्वराधीनत्वापरिहारात् । ननु कृतक-क्रमविशिष्ट-वर्णसमुदायरूपस्य वेदस्य कथमनादित्वमिति चेदत्राहुः । भूतभविष्यद्भिः अखिलैः अध्यापकैरेकप्रकारेण पठ्यमानत्वरूपं नियतैकप्रकारत्वमेवानादित्वं विवक्षितम् । उक्तं हि तत्वनिर्णयटीकायां स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यत इति । एतदेव चानादिनित्यत्वमिति च ॥ न तु कूटस्थत्वादिरूपं मुख्यमनादित्वम् । येन क्रमस्य कृतकत्वेऽपीत्यादिटीकाविरोधः स्यात् । उक्तं च तर्कताण्डवे । ईश्वरोऽप्यस्मन्मते महोपाध्याय एवेति । यथा प्रत्यहमुपाध्यायबुध्युपाधिकः क्रमो वर्णेषु जायते एवमीश्वरबुध्युपाधिकः क्रमोऽपि वर्णेषु जायत एवेति तद्वाक्यार्थः । न च वाच्यमस्मदादिवदीश्वरस्यापि कथंचिद्भेदजनकत्वात्तत्स्वभावस्य तदधीनतापत्तिरिति । एतावता नियतैकप्रकारशब्दस्वभावभूतार्थप्रतिपादनादिशक्तेः पराधीनत्वासम्भवेनेश्वराधीनत्वविघटनोपपत्तेः । अन्यथाऽस्मदाद्यधीनत्वस्याप्यापातात् । स्वातन्त्र्यस्य चेश्वरेऽप्यभावात् । न चैवंविधमनादित्वमाकाशादीनामिति तदुक्तेरभ्यधिकाशंकाप्रदर्शकत्वमपीति न काचिदुपपत्तिरिति । नन्वेवं सत्यत्र नित्यत्वं नाम कूटस्थतयाऽऽद्यंतशून्यत्वम् । तच्च वेदानां नित्या वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमिति तत्वसंख्यानटीकाविरोधः । तत्र वेदानां निर्विकारत्वे सत्याद्यन्तशून्यत्वरूपमुख्यानादित्वस्यैव प्रतीतेरिति चेत् । सत्यम् । नित्या वेदा इति तत्त्वसंख्यानगतवेदशब्देन जहल्लक्षणया पञ्चाशद्वर्णानामेव ग्रहणेन तेषामेवोक्तमुख्यानादित्वस्याभिधानेन क्रमविशेषविशिष्टवर्णात्मकस्य वेदस्य नियतैकप्रकारत्वरूपपारिभाषिकानादित्वाभिधानं प्रत्युदाहृततत्त्वसंख्यानटीकावाक्यस्याविरोधित्वात् ।

ननु तर्हि तत्वसंख्यानटीकायां वर्णनित्यत्वसमर्थनाय नित्या वेदा समस्ताश्चेति तत्वनिर्णयोदाहृतप्रमाणोदाहरणमसङ्गतम् । न हि तत्र वर्णानां कूटस्थताघटितं नित्यत्वमुक्तम् । अपि तु वेदानां सर्वदैकप्रकारत्वरूपमेव नित्यत्वम् । न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः । किन्तु शब्दतोऽर्थतश्च सर्वदैकप्रकारतामेवेति तत्वनिर्णयटीकायां व्याख्यानादिति चेत् मैवम् । तत्रैव न च वर्णपदादीनाम-नित्यत्वं वक्तुं युक्तमिति वाक्यव्याख्यानावसरे न केवलं वर्णमात्रम् । नापि पदमात्रम् । किन्तु समस्ताश्च यथायोगं शाश्वता इति प्रकारान्तरेणाप्यस्य व्याख्यातत्वेन वर्णानां कूटस्थत्वस्याप्येतत्प्रमाणार्थत्वेन विवक्षितत्वात् । न त्वेतद्व्याख्यानमभिप्रेत्यात्रोक्तप्रमाणोदाहरणे काप्यसङ्गतिरित्यलम् ।

चन्द्रिकायां तु यद्यपि कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नानादित्वम् । तथापीश्वरबुद्धिघटितस्य तथात्वेन कृत्वाचिन्तया वाऽनादित्वोक्तिरित्यभि-प्रेत्योक्तम् । एतेनाव्यवहितपूर्वाधिकरणसङ्गतिरप्युक्ता भवति । भूतोत्पत्तिस्थितीति ॥ सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यंत्याकाशो ह्येवैभ्यो ज्यायानिति श्रुतेरिति भावः । आकाशो ह्येभ्यश्चतुर्भ्यो ज्यायान् श्रेष्ठ इत्यर्थः । नन्विमानि भूतानीत्यत्र भूतपदस्य प्राणिपरत्वं किं न स्यादित्यत आह ॥ भूतानि चेति । न चास्य लोकस्येत्यपि प्राणिनिकायाभि-धानम् । येन सर्वभूतशब्दोऽपि तत्परः स्यात् । न प्रतिष्ठां लोकमतिनयेदिति पृथिव्या एव प्रकृतत्वादिति भावः । प्रतिष्ठां लोकं सर्वाधारं पृथिवीलोकमतिक्रम्यान्यं न जानीयादिति श्रुत्यर्थः । एतदिति ॥ सजातीयोपलक्षकत्वमित्यर्थः । तदुक्तमनुव्याख्याने उपलक्षणत्वं ''शब्दानामानन्दमयपूर्विणाम्'' इति । अत एव तत्रैवाधिकरणोपाधिं तद्भावाभिधं लिङ्गं क्रियालिङ्गे ततःपरं इत्यादिनाऽभ्यधाद्भगवान् भाष्यकारः ।

अधिभूतेत्यादिपदानि त्रेधा व्याख्याति । अत्रेत्यादिना । विभक्त्यर्थ इति ॥ अव्ययं विभक्तीत्यादिना विभक्त्यर्थेऽव्ययीभावविधानादिति भावः । समस्तमिति ॥ अधिभूतादिपदत्रयमित्यर्थः । अध्यात्ममिति । अव्ययीभावादनश्चेति समासांतष्टच् । नस्तद्धित इति टिलोपः । अधिकरणत्वमत्र विषयत्वमित्यभिप्रेत्याह । सर्वत्र विषयसप्तमीति ॥ गतानामिति ॥



गत्यर्थानामवगत्यर्थत्वादिति भावः ॥ अव्ययीभावेत्यादि ॥ तथा च भूतेष्वधिभूतम् । आत्मन्यध्यात्मम् । वेदेष्वधिवेदमित्यव्ययीभावः । अधिभूतं च अध्यात्मं च अधिवेदं च अधिभूताध्यात्माधिवेदमिति । ततो द्वन्द्वः । अधिभूताध्यात्माधिवेदङ्गतास्तेषामिति । ततः सप्तमीतत्पुरुषसमासः । अधिभूतादिषु गतानामवगतानां प्रसिद्धानां शब्दानामित्यर्थः । नन्वधि-भूतादिशब्दात् कुतः सप्तमी । सप्तम्यर्थस्याधिनैव बोधनात् । यदि चाव्ययीभावसमासात्प्रातिपदिकसंज्ञया सप्तमीमुत्पाद्य तस्या लोपोऽभिप्रेयते तर्हि तस्या विभक्तेर्वैय्यर्थ्यमित्यरुच्या पक्षान्तरमाह ॥ अथवेति ॥ अधिकर्तव्येति ॥ आधेयप्रधानेऽधिकरण इत्यर्थः । भूतले घट इत्यत्राधिकरणवृत्तित्वस्यापि सप्तम्यर्थतयाऽनुभवादत्रापि तदर्थेनाधिशब्देनात्राव्ययीभावसमास इति भावः । अत एव प्रागधिकरणमात्र इत्युक्तम् । ननु भूतादिषु वर्तमानत्वस्य गतेषु विरुद्धत्वात् कथमधिभूतादिशब्दानां गतविशेषणत्वमित्यत आह । एतच्चेति । चशब्दाद्गतपदपरिग्रहः । ननु शब्दशब्दस्य समासाघटकस्य कथमेतद्विशेषणमिति मन्दाशङ्कापरिहाराय समासमाह ॥ अव्ययीभावेत्यादिना ॥ प्राग्वद-व्ययीभावत्रयम् । ततः अधिभूताध्यात्माधिवेदं च ते गताः प्रसिद्धाश्चेति बहुलग्रहणाद्विशेषणसमास इत्यविरोधः । तथा चाधिभूतादिषु वर्तमानतया प्रसिद्धानामाकाशादिशब्दानामित्यर्थः । अत्र गतशब्दस्य वैय्यर्थ्यमित्यरुच्या पक्षान्तरमाह ॥ यद्वेति ॥ आकाशदीनीति ॥ अधिभूतशब्देनाकाशादीनि पञ्चभूतानि, अध्यात्मशब्देनेन्द्रियादीनि, अधिवेदशब्देन ऋगादीन्युच्यन्त इत्यर्थः । प्रथमकल्प इवाव्ययीभावसमासेनेति भावः ।

ननु कथमाकाशेन्द्रियाद्यधिकरणत्वमाकाशादीनामित्यत आह । समुदायैक-देशाश्रयणेनेति ॥ भावे ल्युट् ॥ समुदायस्यैकदेशाश्रयत्वस्य वने चूत इत्यादिप्रयोगसिद्धत्वाद्भूतादीनामाकाशादीनां चाधाराधेयभावो युज्यत इति भावः । ननु कथं तर्ह्यधिभूतादिशब्दानां गतशब्देन सप्तमीसमासः कर्मधारयो वा असामर्थ्यादित्यतो द्वितीयाश्रितातीतपतितगतेति सूत्रेण द्वितीयासमासः इत्यभिप्रेत्याह । अव्ययीभावेत्यादि ॥ व्याख्यातप्रायमेतत् । परोवरीयस्त्वेति ॥ परोवरीयस्त्वं सर्वोत्तमत्वम् । परोवरीयःशब्दार्थस्तु

परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परो वरं ततस्तस्मात् प्रोक्तं पारोवरीयकम् ॥

इति छान्दोग्यभाष्योक्तस्मृत्यनुसारेण ज्ञेयः । श्रीलक्ष्मीपतित्वेति ॥ यद्यप्यद्भ्यः सम्भूत इत्यनुवाके श्रीश्चते लक्ष्मीश्चेति वाक्यं, भर्ता सन्भ्रियमाणः इत्यनुवाके च तद्वै त्वं प्राण इति वाक्यं पठ्यते । ततश्च न श्रीलक्ष्मीपतित्वलिङ्गं विषयवाक्यसंनिहितवाक्ये श्रूयमाणम् । तथाप्यनुवाकद्वयस्यैकार्थतयैकवाक्यत्वादेवमुक्तम् । कथमन्यथा श्रीश्च त इति युष्मच्छब्देनोक्तस्य तद्वै त्वं प्राण इत्यत्रापि युष्मच्छब्देन परामर्श इत्याहुः । वस्तुतस्तु प्रसिद्धशाखायां ह्रीश्च त इत्येव पाठो दृश्यते न तु श्रीश्च त इति पाठ इति श्रीश्च त इत्यादिभाष्यस्य शाखान्तरपाठमाश्रित्य प्रवृत्तत्वस्यावश्यवक्तव्यतया तत्र शाखान्तरे श्रीश्च त इति वाक्यस्य तद्वै त्वं प्राण इति वाक्यसन्निहितत्वाभिप्रायेणैतल्लिङ्गोक्तिरिति प्रतिभाति । इदमुपलक्षणम् । प्रसिद्धशाखायामपि भर्ता सन्नित्यत्र तमेव मृत्युममृतं तमाहुस्तम्भर्तारं तमु गोप्तारमाहुः । यस्तद्वेद यत आबभूव । सन्धां च या सन्दधदे ब्राह्मणैष रमत इत्यादिनोक्तानि मारकत्वामृतत्वभर्तृत्वगोप्तृत्वमुक्तिहेतुवेदनविषयत्वादीनि लिङ्गानि ग्राह्याणि । एतदेवाभिप्रेत्य भाष्ये इत्यादितल्लिङ्गादेवेत्यादावादिशब्दः । गानत्राणकर्तृत्वाद्यैरिति ॥

अनेन गै शब्द इत्यस्मात् श्याद्व्धेति सूत्रेणाकारांतत्वाण्णप्रत्यये आतो युक् चिणि कृतोरिति युगागमे अजाद्यतष्टाबिति टापि गायेति रूपम् । तथा त्रैङ् पालन इत्यस्माद्धातोरौणादिके किप्रत्यये कृदिकारादक्तिन इति ङीषि त्रीति रूपम् । एवं च गाया च सा त्री चेति विग्रहे पुंवद्भावे च गायत्रीति रूपं सूचितम् । ननु गै शब्द इत्यस्मात् गस्थकन् ण्यु ट्चेति विशेषे विहिताभ्यां थकन्ण्युड्भ्यां भवितव्यम् । न तु णप्रत्ययेन । मैवम् । वा सरूपोऽस्त्रियामित्यपवादस्योत्सर्गबाधकत्वाभिधानात् । आद्यशब्देन वाग्वै गायत्रीत्युक्तवक्तृत्वरूपवाक्त्वादिग्रहः । पुरुषश्रुतिसहितेति ॥ पुरुषशब्दसहितेत्यर्थः । भूतपादत्वादीति ॥ पादोऽस्य विश्वा भूतानीत्युक्तभूतपादत्वादीत्यर्थः । आदिपदेन एतामेव नातिशीयंत इत्युक्तसर्वोत्तमत्वपरिग्रहः ॥ तथापीति



॥ गायत्रीश्रुतेर्लिङ्गापेक्षया प्रबलत्वात् पुरुषश्रुतेश्च साम्यादिति भावः । अनुव्याख्यानोक्तरीत्येति ॥ नभो ददाति श्वसतां मार्गं यन्नियमादद इत्यनुव्याख्यानोक्तरीत्येत्यर्थः । एतेनेति ॥ आकाशप्राणगायत्रीश्रुतयस्तावदित्यारभ्य युक्तो निर्णय इत्यंतेन ग्रन्थेनेत्यर्थः । अन्यथा लिङ्गानां श्रुतितो दुर्बलत्वेनानिर्णायकत्वापत्तेरिति भावः । अभ्यधिकशङ्कापरिहारस्तु यथा नादीनां गुणादीनां गुण्यादितंत्रता तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रतेति । तदुक्तं सुधायाम् । तादृशी खल्वीश्वरशक्तिर्यन्नित्यानित्यस्वभावास्वभावविषया । अन्यथा सर्वेश्वरत्वहानेरित्यादि ॥

## पादान्त्यप्राणाधिकरणम् I-1-12

**न्या.वि.— न चानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेः ॥ १२ ॥**

**इति प्रथमाध्यायस्य प्रथमः पादः ॥**

**टीका—** ॐ प्राणस्तथाऽनुगमात् ॐ ॥ ननु गतार्थमिदमधिकरणम् । सर्वासां प्राणविद्यानां 'अत एव प्राणः' इत्यनेनैव भगवद्विषयतायाः समर्थितत्वात् । मैवम् । विद्याविशेषेऽधिकाशङ्कया पुनः प्रत्यवस्थानात् । तर्हि तदनन्तरमेवेदं पठितव्यम् । मैवम् । गायत्र्यधिकरणसिद्धान्तन्यायावलम्बेनात्र पूर्वपक्षोत्थानादित्याशयवान् पूर्वपक्षन्यायं विवृण्वन् प्रतिषेधति ॥ न चानन्यथेति ॥ अन्यत्र भगवतोऽन्यविषयस्य श्रुत्यादेः । अनन्यथासिद्धत्वं निरवकाशत्वम् । कथं, इन्द्रश्रुतिस्तावन्निरवकाशा । 'इन्द्रो वै वृत्रं हत्वा महानभूत्' इति प्रकृतस्यैव 'विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद' इत्यनुसन्धानात् । वृत्रहननं महाव्रतयाजित्वं च लिङ्गं निरवकाशम् । यथेन्द्रियैः सहाभिधानम् । प्राणसंवादादिकं च निरवकाशम् । तत्समभिव्याहृतप्राणश्रुतिरप्येवमेव । शतायुष्ट्वादिलिङ्गं च निरवकाशम् । तत्सहचरिता पुरुषश्रुतिरपि तथैव । आदिपदेन 'प्राणो वा अहमस्मी'ति वाक्यं गृह्यते । तस्य च निरवकाशत्वमुक्तश्रुतिलिङ्गसाहचर्याद्गम्यते । कुतोऽनन्यथासिद्धत्वमित्यत आह ॥ अन्यगतेति ॥

इन्द्रादिगतानामपि लिङ्गादीनां वृत्रवधादीनां मुख्यतस्तदन्तर्यामिभगवत्सम्बन्धित्वात् तदपेक्षया सावकाशत्वात् । तथा चोक्तं 'शास्त्रदृष्ट्या'इति । 'उपासात्रैविध्यादि'ति च । प्राक् श्रुतिलिङ्गादेरित्युक्तम् । तत्प्राबल्यापेक्षया इदानीं लिङ्गादीनामिति वचनं लिङ्गनिरवकाशतयैव श्रुत्यादिनिरवकाशता पूर्वपक्ष इति सूचनार्थम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितन्यायविवरणपञ्चिकायां जयतीर्थमुनिविरचितायां प्रथमाऽध्यायस्य प्रथमः पादः ॥

**प्रबोधिनी — ॐ प्राणस्तथानुगमात् ॐ ।** यथा तद्वै त्वमित्ययं प्राणो विष्णुस्तथैतरेये श्रुतप्राणो विष्णुरेव । ब्रह्मशब्द देवेपास्यत्वादि तच्छ्रुतिलिङ्गानामस्मिन्प्रकरणे अनुगमादनुवृत्तेरिति सूत्रार्थः । पूर्वपक्षोत्थानादिति ॥ इन्द्रवायुजीवविषयकपूर्वपक्षोत्थानादित्यर्थः । अन्यत्रेति विषयसप्तमीत्यभिप्रेत्याह ॥ अन्यविषयकश्रुत्यादेरिति । इन्द्रियैः सहाभिधानादिति ॥ चक्षुःश्रोत्रंमनोवाक्प्राण इति चक्षुरादीन्द्रियैः सहाभिधानमिन्द्रजीवमुख्यप्राणानां साधारणम् । इन्द्रस्य हस्ताधिष्ठातुरिन्द्रियत्वात् । जीवस्य चेन्द्रियजन्यफलाश्रयत्वात् । मुख्यप्राणस्य च सर्वेन्द्रियस्वामित्वात् । विष्णौ तु सर्वप्रधाने निरवकाशमिति भावः । प्राणसंवादादीति ॥ ता अहिंसंत अहमुक्थमस्म्यहमुक्थमस्मीत्युक्तप्राणविवादादीत्यर्थः । ताश्चक्षुरादिदेवता अहमुक्थं श्रेष्ठोऽस्मीत्यहिंसंत विवादमकुर्वतेति श्रुत्यर्थः । आदिपदेन प्राण उदक्रामत्तत्प्राण उत्क्रान्ते पद्यतेत्याद्युक्तोत्क्रमणप्रवेशादिलिङ्गपरिग्रहः । प्राणो मुख्यवायुर्विराड्देहादुत्क्रान्तः । प्राणे उत्क्रान्ते सति तच्छरीरं पतितमित्यर्थः । निरवकाशमिति ॥ मुख्यप्राणलिङ्गं विष्णौ निरवकाशमित्यर्थः । शतायुष्ट्वादिलिङ्गमिति । एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्तीत्युक्तजीवलिङ्गमित्यर्थः ।

एष प्राण इमं लोकं ब्रह्मादिशरीरं पुरुषरूपेण अभ्यार्चत् प्रविवेश । तदेव कार्यलिङ्गेन दर्शयति ॥ य एष आदित्ये स्थित्वा तपतीति ॥ यस्मादयं प्राणस्तं देहं शतं वर्षाण्याभ्यर्चत् । तस्मात् पुरुषायुषः आयूंषि शतं वर्षाणीति प्रसिद्धानि



भवन्तीति श्रुत्यर्थः । पुरुषश्रुतिरिति ॥ पुरुषायुष इत्यत्र पुरुषशब्द इत्यर्थः । अहमस्मीत्यादीति ॥ प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मीति वाक्यमित्यर्थः । इदं विश्वामित्रं प्रतीन्द्रस्य वचनम् । श्रुतिलिङ्गसाहचर्यादिति ॥ तमिन्द्र उवाचेत्यादिश्रुतिमहाव्रताभिधमखयजमानत्वादीन्द्रलिङ्गसाहचर्याद्विष्णौ निरवकाशत्वं गम्यते इत्यर्थः । शास्त्रदृष्ट्येत्यादि ॥ तुरवधारणे । शास्तीति शास्ता अन्तर्यामी । स चासावश्च विष्णुश्च शास्त्रं तद्दृष्ट्या तदपेक्षयैवाहमस्मीत्युपदेशः न तु तादात्म्येन । वामदेववत् वामदेवोपदेशवत् । यथा वामदेव अन्तर्याम्यपेक्षया अहं मनुरभवं सूर्य इत्याह तद्वदित्यर्थः । एतेन शास्तुरन्तर्यामिण इत्यैतरेयभाष्यविरोध इति चोद्यानवकाशः । शतायुष्ट्वादिजीवलिङ्गादिन्द्रियसंवादादिमुख्यप्राणलिङ्गाच्च न प्राणो विष्णुरिति चेन्न । यस्माज्जीवमुख्यप्राणलिङ्गोपदेश अन्तर्याम्यपेक्षयैव युक्त इति पूर्वसूत्रमावृत्त्य योज्यम् । किमर्थमन्तर्याम्युक्तिरित्यत उक्तम् । उपासेत्यादि । अन्तर्व्याप्तत्वेन बहिश्चेति भेदेन ब्रह्मोपासायास्त्रैविध्येन त्रैविध्यस्य चेह प्रकरणे स एतमेव सीमानमित्यादिना आश्रितत्वादुक्तत्वादिति सूत्रार्थः । विशेषष्टीकातः प्रतिपत्तव्यः । पूर्वपक्षे श्रुतिलिङ्गादेरित्यभिधायाधुना लिङ्गादीनामिति लिङ्गस्यादौ ग्रहणेन सूचितमाशयमाह ॥ प्रागिति । श्रुत्यादीत्यादिपदेन प्राणो वा अहमस्मीत्यादिवाक्यपरिग्रहः ॥

**सन्न्यायविवृतेष्टीका निगूढार्थप्रबोधिनी ।**
**न्यगलदृद्वालरचिता ह्यादिलक्षणपद्धता ॥**

इति श्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रानुव्याख्यानन्यायविवरणटीकानिगूढार्थप्रबोधिन्याम् एरी अनन्ताचार्यपूज्यपादाराधकेन तत्तनूजेन बालनाम्ना विरचितायां प्रथमाध्यायस्य प्रथमः पादः ॥

# अथ द्वितीयः पादः

## सर्वगतत्वाधिकरणम् I-2-1

**न्या.वि. — बहुलिङ्गसहितश्रुतेरपि सावकाशायाः निरवकाश-श्रुत्यादीनामेव बलवत्त्वम् । बहवो ह्यत्रादित्यशब्दाः । क्षित्यादिपूक्त्वाऽऽदित्येऽनुक्तिरित्यादिलिङ्गं च । तथापि निरवकाशा एतमेवेत्यवधारणादयः ॥ १ ॥**

टीका — ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ 'एतं ह्येव बह्वृचा' इत्यादा-वादित्यः प्रतिपाद्यो भवितुमर्हति । तदीयश्रुतिलिङ्गानामत्र दर्शनात् । जीवो वा । जीवलिङ्गानां चक्षुर्मयत्वादीनां श्रवणात् । न च एतदन्तःस्थाधिकरणन्यायेन उपासात्रैविध्यादिति वा परिहृतमिति वाच्यम् । सम्भवति हीश्वरे कल्पनैषा । न चासावत्र सम्भवति । सर्वेषु भूतेष्वित्यल्पौकस्त्वश्रवणात् । ईश्वरस्य पूर्णतया ब्रह्मततमित्यङ्गीकृतत्वात् सम्भोगप्राप्तेश्च । न चेश्वरसाधकं प्रमाणमस्ति । ब्रह्मशब्दस्य जीवे सम्भवात् । मुख्यानुपपत्तावमुख्यस्वीकारस्य न्यायप्राप्तत्वादित्येवं प्राप्ते प्रतिविहितं– 'सर्वत्रोच्यमानो नारायण एव । ब्रह्मशब्दस्याश्रुतत्वादिलिङ्गानां च श्रवणात् । स्मृतिसमाख्यानाच्च । जीवस्य चाणोरेकस्य सर्वशरीरस्थ-त्वानुपपत्तेः । कर्मकर्तृव्यपदेशानुपपत्तेश्च' इति ।

तदिदमनुपपन्नम् । श्रुतिलिङ्गपरपक्षानुपपत्तिभिः पूर्वपक्षे सति, तावन्मात्रेण सिद्धान्तनिर्णयायोगात् । न हि समबलं बाधकं भवतीत्यत आह ॥ बहुलिङ्गेति ॥ 'परपक्षानुपपत्तेरपि'इत्यपि ग्राह्यम् । श्रुत्यादीनामित्यादिपदेन लिङ्ग-समाख्यापरपक्षानुपपत्तीनां परिग्रहः । यद्यपि पूर्वपक्षश्रुत्यादयः सन्ति सिद्धान्तेऽपि तथापि पूर्वपक्षस्थाः सावकाशाः, निरवकाशास्तु सिद्धान्तस्थाः । सावकाशाच्च निरवकाशस्य प्राबल्यं सिद्धमेवेति कथं निर्णयाभावः । 'बहुलिङ्गसहितश्रुते'-रित्युक्तं विवृणोति ॥ बहवो हीति ॥ यद्यप्यादित्यशब्द एक एव तथाप्यावृत्तिबहुत्वाद्बहव इत्युक्तम् । यद्वा आदित्यस्य प्रतिपादकाः शब्दा आदित्यशब्दाः । ते च 'यश्चासावादित्ये' 'सूर्य आत्मा जगतः' 'चक्षुर्मित्रस्य'



इत्यत्र बहवः सन्ति । 'एतमस्या'मित्यादिना, ''एतमादित्ये'' इत्ये(त्यनुक्तिरे) वमात्मकोऽयमादित्य इत्यत्र लिङ्गम् । सजातीयेषूक्त्वाऽत्रानुक्तेः कारणान्तराभावात् । आदिपदेन चक्षुर्मयत्वादिकं जीवलिङ्गं च । अत्र श्रुतेर्लिङ्गानां च बहुत्वोक्त्या, बह्वी च सा लिङ्गसहितश्रुतिर्बहुलिङ्गसहितश्रुतिः । बहुलिङ्गैः सहिता श्रुतिर्बहुलिङ्गसहितश्रुतिरिति समासद्वयस्यैकशेषनिर्देश इति सूचयति । बहुशब्दद्वयं वा तन्त्रेणोपात्तमिति ॥ बहुलिङ्गश्रुतेरित्येतद्व्याख्यायेदानीं समस्तं वाक्यं विवृणोति ॥ तथापीति ॥ यद्यपि पूर्वपक्षे श्रुतिलिङ्गपरपक्षासम्भवाः सन्ति तथापि ते सावकाशाः । तथा हि– आदित्यादिश्रुतिस्तावदन्तःस्थाधिकरणन्यायेन विष्णौ सावकाशा । आदित्येऽनुक्तिस्त्वसिद्धा । उपलक्षणतयोक्तत्वात् । चक्षुर्मयत्वादिकं च शतायुष्ट्वादिवदीश्वरे घटत एव । अल्पौकस्त्वादिकं च निचाय्यत्वादिना प्रत्युक्तम् । सिद्धान्तहेतवस्तु निरवकाशा इति निर्णयो युज्यत एवेति । निरवकाशब्रह्मशब्दादय इति वक्तव्ये 'एतमेव' इत्यवधारणादय इति वचनन्तु ब्रह्मशब्दस्यामुख्यवृत्त्या जीवेऽप्यवकाशोऽस्तीत्याशङ्कापरिहारार्थम् । ततश्चावधारणसहितब्रह्मशब्दादय इत्यर्थः ॥

**प्रबोधिनी** — ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ सर्वत्र पृथिव्यादिषूच्यमानं ब्रह्मैव । श्रुत्यादौ विष्णावेव प्रसिद्धब्रह्मशब्दस्य एतमेव ब्रह्मेत्याक्षत इत्यादिना तत्रोपदेशादिति सूत्रार्थः ॥ एतं ह्येव बह्वृचा इत्यादाविति ॥ एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्ये तं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इत्यैतरेयश्रुतावित्यर्थः । बह्वृचाः ऋग्वेदिनः एतमेव परमात्मानं महत्युक्थे तन्नाम्नि बृहतीसहस्रे मीमांसंत इत्यन्वयः । एवमग्रेऽपि ॥ तथा अध्वर्यवः याजुषाः अग्नौ । तथा छन्दोगाः सामगा महाव्रते महाव्रताभि-धमखाङ्गभूतस्तोत्रे मीमांसन्ते विचारयन्ति । अस्यां पृथिव्यां वनस्पतिषु वृक्षेषु भूतेषु प्राणिषु ब्रह्मेति पूर्णमेवेत्याचक्षते वदन्तीति श्रुत्यर्थः ॥ तदीयश्रुतिलिङ्गानामिति ॥ तस्यैतस्यासावादित्यो रसः । यश्चासावादित्य इत्याद्या आदित्यश्रुतयः । संवत्सर एव प्रध्वंसयन् तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीत्यादिना श्रुतानि संवत्सराधिपतित्वसर्वपुरुषाभिमुख्यादीन्यादित्यलिङ्गानि

तेषां दर्शनादित्यर्थः ॥ चक्षुर्मयत्वादीनामिति ॥ चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मेति चक्षुरादिप्राचुर्यरूपजीवलिङ्गानां श्रवणादित्यर्थः । अन्तःस्थाधिकरणन्यायेनेति ॥ तत्राधिदेवगतशब्दानां प्रवृत्तिनिमित्तानामनन्याधीनत्वादिना विष्णावेव मुख्यताया अभिप्रेतत्वादिति भावः । अल्पौकस्त्वेति ॥ अल्पस्थानस्थत्वेत्यर्थः । ब्रह्मततमिति ॥ ब्रह्मततममपश्यदिति श्रुतिशेषः । ततममतिशयेन व्याप्तं ब्रह्म पूर्णमपश्यदिति श्रुत्यर्थः । सम्भोगेति ॥ ईश्वरस्य सर्वेषु भूतेष्वित्युक्त- सर्वजीवशरीरस्थत्वे जीवसमानभोगप्रसङ्गादित्यर्थः । न हि दह्यमान गेहगतयोरन्यतरस्यैव दाह इति युक्तमिति भावः ।

अत्र संसमशब्दौ पर्यायौ । अतः समानभोग इत्यर्थे सम्भोग इति साधुः । अत एव संधिशब्दव्याख्यामरसुधालिङ्गाभट्टीयादिषु सन्धीयते समीक्रियते इति सन्धिरिति विवृतम् । प्रोपाभ्यां समर्थाभ्यामिति सूत्र इव समशब्दस्यैव शकंध्वादित्वेन पररूपत्वं वा । भट्टोजिना तत्र तथाभिधानात् । इममेवाभिप्रायं मनसि निधायात्मेशब्रह्मसम्भवामित्यत्र सम्भवपदं फलाध्यायसुधायां सह भवन्तीति सम्भवा इति विवृतम् । अत्र सुधाटिप्पण्यां तु अव्ययानामनेकार्थत्वात् समित्यस्य साहित्यार्थता युक्तैवेति ध्येयमित्युक्तम् । ब्रह्मशब्दस्येति ॥ एतमेव ब्रह्मेत्याचक्षत इति ब्रह्मशब्दश्रवणात् । स योऽतोऽश्रुतोऽगतोऽमतोनतोऽदृष्टोऽविज्ञातोऽनादिष्ट इत्यश्रुतत्वादिलिङ्गानां च श्रवणादित्यर्थः । अतः व्याप्तः । अन्यैः साकल्येनाश्रुतः । अगतः अप्राप्तः । अमतः अविचारितः । अनतः स्वतन्त्रः । अदृष्टः प्रत्यक्षेणाज्ञातः । अविज्ञातः विशेषज्ञानाविषय इति श्रुत्यर्थः । स्मृतिसमाख्यानाच्चेति । अहमात्मा गुडाकेश सर्वभूताशयस्थितः इति स्मृतिसमाख्यानादित्यर्थः । एतच्च गीतायामर्जुनं प्रति श्रीकृष्णस्य वचनम् । कर्मेति ॥ एतमस्यामित्यादिना सर्वत्रोच्यमानस्यात्मानमिति कर्मत्वेन शंसतीति जीवस्य कर्तृत्वेनात्मानं परस्मै शंसतीत्यादौ व्यपदेशाच्च जीवः सर्वगत इत्यर्थः । एकस्यां क्रियायां कर्मकर्त्रोरुत्सर्गतो भेदनियमादत्र चापवादकारणाभावादिति भावः । परपक्षानुपपत्तिभिरिति ॥ सर्वगत ईश्वर इति सिद्धान्तपक्षेऽल्पौकस्त्वानुपपत्तिभिरित्यर्थः । एवमग्रेऽपि । तन्मात्रेणेति ॥ श्रुतिलिङ्गपरपक्षानुपपत्तिमात्रेणेत्यर्थः । अत्र परपक्षानुपपत्तिस्तु जीवः सर्वगत- इति पूर्वपक्ष



एकस्याणोर्जीवस्य सर्वशरीरस्थत्वानुपपत्तिर्ज्ञेया । सिद्धमेवेति ॥ श्येनेनाभिचरन्यजेतेत्यत्र श्रुतेर्दुर्बलस्यापि लिङ्गस्य निरवकाशत्वेन प्राबल्यं पूर्वतन्त्रे सिद्धमित्यर्थः । प्रपञ्चितमेतदस्माभिरन्तस्थत्वनये । प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति प्राणब्रह्मणोरुपक्रमेऽपि श्रुतिलिङ्गादिना निरवकाशेन ब्रह्मोपक्रमेण प्राणोपक्रमबाधः प्रसिद्ध इत्यप्याहुः । एकशेषनिर्देश इति । सरूपाणामेकशेष एकविभक्तावित्येकशेषस्य निर्देश इत्यर्थः ।

तन्त्रेणेति ॥ सकृदुक्तमनेकोपकारकं तन्त्रम् । तेनेत्यर्थः । समस्तमिति ॥ सावकाशाया इत्यादि समस्तं वाक्यमित्यर्थः । अल्पौकस्त्वादिकमिति ॥ आदिपदेन सम्भोगप्राप्तिपरिग्रहः । प्रत्युक्तमिति ॥ किं ब्रह्मणोऽल्पौकस्त्वाद्युक्तिर्व्यर्थोतायुक्ता । आद्ये आह । निचाय्यत्वादिति ॥ अल्पौकस्त्वेन चक्षुर्मयत्वेन चोपास्यत्वान्न व्यर्था । द्वितीयं प्रत्याह । व्योमवच्चेति ॥ यथा व्याप्तस्याप्याकाशस्यैकदेशस्थत्वं तथा ब्रह्मणोऽपि युक्तमिति निचाय्यत्वादेव व्योमवच्चेति सूत्रखण्डार्थः । आदिपदेन वैशेष्यादिति सूत्रखण्डपरिग्रहः । जीवेश्वरयोरेकशरीरस्थत्वेऽपि सामर्थ्यविशेष्यादीश्वरस्य जीवसमानभोगाभावो युज्यत इति सूत्रखण्डार्थः । दह्यमानगेहगतयोरन्यतरस्याग्निस्तम्भविद्यावतो दाहाभाववदिति भावः । अवधारणसहितब्रह्मशब्दादय इति ॥ एतमेव ब्रह्मेत्याचक्षत इत्यत्रेति भावः । तथा च श्रुत्यन्तरम् । एष उ एव ब्रह्मैष उ एवात्मेत्यादि । एतेन शब्दविशेषादिति सूत्रं विवृतं भवति । परं ब्रह्म वेद ब्रह्मैव भवतीत्यत्र जीवव्यावृत्तये नपुंसकब्रह्मशब्दस्य परशब्देनेवेह सर्वेषु भूतेष्वित्यादिश्रुतौ ब्रह्मशब्दस्यावधारणेन विशेषणादिति तदर्थोऽभिनवचन्द्रिकायां व्यक्तः ॥

## अत्तृत्वाधिकरणम् I-2-2

**न्या.वि. — सन्दिग्धश्रुतिलिङ्गाभ्यां, निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वम् । सन्दिग्धा श्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं च ॥ ॥ २ ॥**

**टीका** — ॐ अत्ता चराचरग्रहणात् ॐ ॥ देवमातैवात्र प्रतिपाद्या तच्छ्रुतेः। न च श्रुतिरिन्द्रादिश्रुतिवद्विष्णौ सावकाशेति वाच्यम् । तत्रासम्भावितलिङ्गस्यापि सत्त्वादिति प्राप्ते चराचरात्तृत्वलिङ्गात्प्रकरणाच्च विष्णुरेवेति सिद्धान्तितम् । तदयुक्तम् । श्रुतिलिङ्गाभ्यां लिङ्गप्रकरण-योर्दुर्बलत्वादित्यत आह ॥ सन्दिग्धेति ॥ श्रुतिलिङ्गे हि सन्दिग्धे सावकाशत्वात् । लिङ्गप्रकरणे तु निश्चिते निरवकाशत्वात् । सन्दिग्धाच्च निश्चितं बलवत् । तत्कुतो निर्णयाभावः । के ते सन्दिग्धश्रुतिलिङ्गे इत्यत आह ॥ सन्दिग्धा श्रुतिरिति ॥ लिङ्गं च सन्दिग्धमिति ग्राह्यम् । यथासङ्ख्यं सम्बन्धः । भवत्वदितिशब्दो, देवमातुः श्रुतिः'अदितिर्देवतामयी'इत्यादौ प्रयोगात् विष्णौ सावकाशाच्च । अदितित्वं तु कथं लिङ्गं कथं च सावकाशमिति चेदुच्यते । अदितेरदितित्वं हि श्रूयते । 'त्व'प्रत्ययश्च जातेर्वाचकः । यथा पृथिवीत्वं गौत्वमित्यादौ । तदसम्भवे स्वरूपस्यैव । यथा आकाशत्वं चन्द्रत्वमित्यादौ । न चादितित्वं नाम जातिः सम्भवति व्यक्तेरभेदात् । ततोऽदितित्वमदितेः स्वरूपमेव । न च अदितिस्वरूपमीश्वरस्य सम्भवति । अत्यन्तभिन्नत्वात् । न च अदितिशब्दो भगवत्पर इत्यनुपपत्त्यभावः । अदितित्वेनादितिशब्दस्य तत्र विधित्सितत्वे-नानुवादानुपपत्तेः । अन्यथा अन्योन्याश्रयप्रसङ्गादिति पूर्वपक्षी मन्यते । सिद्धान्तिनस्त्वयमाशयः । भावे हि 'त्व' प्रत्ययः स्मर्यते । तद्धितभावश्च शब्दप्रवृत्तिनिमित्तम् । तच्च कचिज्जातिः कचित्क्रिया कचिद्गुणः कचिद्द्रव्यं कचित्स्वरूपम् । तत्र यत्सर्वात्तृत्वमुक्तं तददितित्वं अदितिशब्दप्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमस्योच्यते । अदितेरिति च भाविनी संज्ञा विज्ञायते । यथा– 'अस्य सूत्रस्य शाटकं वये'ति । अन्यथा परस्यापि दुर्घटमेतत् । अविवक्षित-निमित्तां प्रसिद्धिमाश्रित्य ममानुवाद इति चेन्ममापि तत्समम् । इयाँस्तु विशेषः । परस्य लौकिकी प्रसिद्धिर्मम तु वैदिकीति ॥ २ ॥

**प्रबोधिनी — ॐ अत्ता चराचरग्रहणात् ॐ ॥** सर्वं वा अत्तीत्यत्रोक्त अत्ता संहर्ता विष्णुरेव न त्वदितिर्देवमाता । सर्वं वा अत्तीति चेतनाचेतनजातस्य भक्ष्यतया ग्रहणात् अभिधानात् । न हि चराचरस्य सर्वस्यात्त्री देवमातेति सूत्रार्थः । अत्रेति ॥ स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति



तददितेरदितित्वमिति बृहदारण्यकश्रुतावित्यर्थः । स अदितिर्यद्यदसृजत तत्तदत्तुं भक्षणार्थं मन इति शेषः । अध्रियत दधार । तत आदच्चेति शेषः । कुतः सर्वात्त्री सा । स सर्वमत्तीति यत्तत्सर्वात्तृत्वमदितेरदिति शब्दार्थस्यादिति त्वमदितिशब्दप्रवृत्तिनिमित्तं यस्मादतः सा सर्वात्त्रीति श्रुत्यर्थः । अदित्यां स इति पुल्लिङ्गं च कूटस्थोऽक्षर उच्यत इत्यादिवदिति भाष्ये स्पष्टम् । लिङ्गस्यापीति । अदितित्वलिङ्गस्य श्रवणादित्यर्थः । न हि विष्णोरदितिभि-न्नस्यादितित्वमिति भावः । न केवलमदितिश्रुतेरित्यपिशब्दाशयः । प्रकरणाच्चेति ॥ अप्संवत्सरापरपर्यायचतुर्मुखसृष्ट्यादिना वैष्णवत्वेन निश्चितनैवेह किञ्चनाग्र आसीदित्यादिप्रकरणबलाच्च सर्वं वा अत्तीत्युक्त अत्ता विष्णुरेवेति सिद्धान्तितमित्यर्थः ॥ दुर्बलत्वादिति ॥

**श्रुतिर्लिङ्गसमाख्या च वाक्यं प्रकरणं तथा ।**
**पूर्वं पूर्वबलीयः स्यादेवमागमनिर्णयः ॥**

इति स्मृतेरिति भावः । यद्यपि लिङ्गं लिङ्गात्समानमेव न तु दुर्बलम् । तथापि श्रुतिसाहित्येन पूर्वपक्षिणोऽदितित्वलिङ्गस्य प्राबल्यमभिप्रेत्य लिङ्गप्रकरणयोर्दुर्बलत्वादित्युक्तम् । अन्यथा श्रुतेर्लिङ्गस्य चेत्यवक्ष्यत् । अदितिर्देवतामयीत्यादिप्रयोगादिति ॥ देवतामयी देवतोत्तमा अदितिरित्यर्थः । आदिपदेन अदितिर्हीदं सर्वं यदिदं किञ्चेति श्रुतिपरिग्रहः । श्रुतिलिङ्गे इत्यत आहेति ॥ ईदूदेद्द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावः ॥ व्यक्तेरभेदादिति । एकव्यक्तिमात्रवृत्तिस्तु न जातिरित्युक्तेरिति भावः । तदुक्तं

**व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।**
**रूपहानिरसंबन्धो जातिबाधकसङ्ग्रहः ॥**

इति ॥ स्वरूपमेवेति ॥ तथा चादितित्वशब्दस्य धर्मिवाचकतया न लिङ्गात्मकशब्दत्वमिति भावः । अदितित्वलिङ्गस्य सावकाशत्वमपि निराह । न चादितिस्वरूपमिति ॥ न चादितिशब्द इति ॥ त्वप्रत्ययप्रकृतिरित्यर्थः । अनुपपत्त्यभाव इति । अत्यन्तभिन्नत्वादित्युक्तानुपपत्यभाव इत्यर्थः । तथा

चादितित्वलिङ्गस्य सावकाशत्वमिति भावः । विधित्सितत्वेनेति ॥ विधातुमिच्छाविषयत्वेनेत्यर्थः । विपूर्वाद्दधातेः सन्नंतात् क्तप्रत्ययः । अनुवादानुपपत्तेरिति ॥ प्रवृत्तिनिमित्तोक्तेः पूर्वमदितिशब्दविधानाभावेन तदधीनस्यादितेरित्यनुवादस्यानुपपत्तेरिति भावः । अन्यथेति ॥ अदितिशब्दस्य विधानात्पूर्वमप्यनुवादे इत्यर्थः । अन्योन्याश्रयादिति ॥ अदितेरित्यनुवादे सति तत्पदप्रवृत्तिनिमित्तकथनपूर्वकमदितिशब्दस्येश्वरे विधानसिद्धिः । तत्सिद्धौ चादितेरित्यनुवादसिद्धिरित्यन्योन्याश्रयादित्यर्थः । तथा च नादितित्वं विष्णौ सावकाशमिति भावः । स्मर्यत इति ॥ तस्य भावस्त्वतलाविति सूत्रादिति भावः । कचित्क्रियेति ॥ कर्तृत्वं भोक्तृत्वमित्यादौ । कचिद्गुण इति । रूपित्वं सुखित्वमित्यादौ । कचिद्द्रव्यमिति । दण्डित्वं कुण्डलित्वमित्यादौ । अस्येति । अदितित्वशब्दस्येत्यर्थः । तथा च धर्मवाचकतया लिङ्गत्वं युक्तमिति भावः । तदुक्तमनुव्याख्याने । क्रियालिङ्ग इति । तत्रैव सुधायां च क्रिये च ते लिङ्गे च ततः प्रथमाधिकरणात्परं द्वाभ्यामधिकरणाभ्यां अत्ता चराचरग्रहणात् गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्येताभ्यामधिकरणाभ्यां चिन्त्येत इति । तच्चादितित्वलिङ्गं विष्णौ सावकाशम् । ननु विष्णावदितित्वनिमित्तेनादिति शब्दस्य विधित्सितत्वेन निमित्तोक्तेः पूर्वं तस्य विधानाभावे नादितेरिति कथमनुवाद इत्यत आह । अदितिरिति चेति ॥ तथा च भाविनीं संज्ञां सिद्धवत्कृत्यादितेरित्यादावपि व्यवहारो युज्यत इति भावः ।

तत्र दृष्टान्तमाह । यथेति ॥ सूत्रशाटकन्यायश्चोपपादितो महाभाष्ये । तद्यथा कश्चित्कञ्चित् प्रत्याह । अस्य सूत्रस्य शाटकं वयेति । यत्पश्यति तद्यदि शाटको न तर्हि वातव्यः । यदि वातव्यो न स शाटकः । शाटकश्च वातव्यश्चेति विप्रतिषिद्धम् । तस्मादयमर्थः । तथा वातव्यं यथोते शाटको भवतीति । शाटकः परिधानीयः पटः । तं वय । वेञ् तन्तुसन्तान इत्यतो लोट् । कानड्या भाषया नेयीत्यर्थः । उपलक्षणमेतत् । यूपं न क्षति । इग्यणः संप्रसारणामित्याद्युदाहरणं द्रष्टव्यम् । अन्यथेति ॥ भाविसंज्ञानालंबन इत्यर्थः । परस्यापीति ॥ अदितिपदस्य प्रसिद्धादितिपरत्ववादिनोऽपि एतत् तददितेरदितित्वमिति श्रुत्यर्थोपपादनं दुर्घटमित्यर्थः । उक्तदिशा परस्पराश्रयप्रसङ्गादिति भावः । नन्वेतदयुक्तम् ।



दर्शपूर्णमासप्रकरणे यदेनमस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत्तद्दध्नो दधित्वमित्यैन्द्रदधिशब्दान्वाख्यानपरार्थवादवाक्ये दधिशब्दान्वाख्यानायाविवक्षितप्रवृत्तिनिमित्तां लोकप्रसिद्धिमाश्रित्य दध्नो दध्न इत्यनुवाद इवेहापि देवमातर्यदितिशब्दान्वाख्यानायाविवक्षितप्रवृत्तिनिमित्तां लोकप्रसिद्धिमाश्रित्य देवमातुरदितेरित्यनुवादसम्भवेनान्योन्याश्रयशङ्कायाः दूरोत्सारणेन श्रुत्यर्थोपपादनस्य सुघटत्वादित्याशङ्क्य समाधत्ते । अविवक्षितेत्यादिना ॥

ननु लोकमातर्यदितिशब्दस्य प्रसिद्धेर्लौकिकीं तामाश्रित्यादितेरित्यनुवादो मम युक्तः । भवतां तु विष्णावदितिशब्दस्याप्रसिद्धेर्लौकिकीं तामाश्रित्य कथमदितेरित्यनुवादो भवेत् । येन तौल्यमित्यत आह । इयांस्त्विति ॥ वैदिकीति ॥ लौकिक्या विप्लुतिसम्भवाद्वैदिक्यास्तु प्रसिद्धेस्तदयोगादिति भावः । वस्तुतस्तु यदेनमधिनोत्तद्दध्नो दधित्वमित्यादिकं यदि प्रसिद्धदधिविषयं तर्हि जातिनिमित्तकस्य दधिशब्दस्येदमन्वाख्यानमात्रम् । यदि त्वप्रसिद्धविषयं तर्ह्यबाधान्निमि-त्तपरमेवेत्युक्तत्वात्तन्न्यायेन तददितेरित्यपि वाक्यं विष्णावदितिशब्द-प्रवृत्तिनिमित्तपरमेव । देवमातरि रूढिबाधनायेत्यदितिशब्दस्य भाविसंज्ञाश्रयणमेव जायः । न चाबाधे श्रुत्युक्तं निमित्तं त्यागार्हम् । अनश्नन्नित्यादेस्तु गतिर्वक्ष्यत इति । तदेनमिन्द्रमधिनोत् । धिनु पुष्टौ । अपुषत् । धियि प्रीणने । अप्रीणयदिति वा यत्तद्दध्नो दधिपदवाच्यस्य दधित्वं दधिपदप्रवृत्तिनिमित्तमिति श्रुत्यर्थः ॥२॥

## गुहाधिकरणम् I-2-3

**न्या.वि. — द्विवचनश्रुतेरपि बलं निरवकाशत्वं नास्ति । विष्णोरेव(बलत्त्वात्)द्विरूपत्वात् ॥ ३ ॥**

टीका— ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ 'ऋतं पिबन्तौ'इति वाक्ये बुद्धिजीवौ प्रतिपाद्यौ भवितुमर्हतः । कुतः कर्मफलभोक्तृत्वेनैकस्य जीवत्वावश्यम्भावात् । एकस्मिँश्छरीरे भोक्तृजीवद्वयासम्भवेन द्वितीयस्य भोगोपकरणतयोपचारेण भोक्तुः बुद्धित्वोपपत्तेः । छायातपत्वं च तयोः । चैतन्यप्रकाशत्वतदभावाभ्यां युज्यते । यदि वा 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः'

इतिवत्सजातीयग्रहणस्य न्याय्यत्वाच्चेतन एव द्वितीये ग्राह्ये जीवेश्वराविमौ भवतः । तथा च ब्रह्मविद्यात्वमपि न विरुध्यते । ईश्वरस्याभोक्तृत्वेऽपि भोक्तृसाहचर्याच्छ-त्रिन्यायेन भोक्तृत्वोपचारः । छायातपत्त्वं च अविद्या-विद्यावत्त्वेन तयोरुपपद्यते । 'यः सेतुः' इति वाक्यबलादीश्वर एव केवलः किं न स्यादिति चेन्न । तस्मिन्द्विवचनश्रुतेः कर्मफलभोगस्य छायातपत्वस्य चावकाशाभावात् । 'यः सेतुः' इति वाक्यस्य तु बाधकवशेन कथञ्चिज्जीवविषयतया ईश्वरमात्रविषयतया वा व्याख्यातव्यत्वादिति प्राप्ते प्रतिविहितम् । परमेश्वर एवात्र प्रतिपाद्यः गुहां प्रविष्टत्वलिङ्गात् । तस्यान्यत्र सम्भवेऽपि प्रसिद्धस्यैव ग्राह्यत्वात् । न हि 'मैथिलः' 'पाञ्चालः' इत्युक्ते यः कोऽपि मिथिलायां भवः पाञ्चालेषु भवो वा गृह्यते किन्तु प्रसिद्धस्तदधिपतिरेव । 'यः सेतुः' इति विशेषणाच्च । बाधकात्सर्वमन्यथा नेतव्यमिति चेन्न । तदभावात् । द्विवचनश्रुतिरीश्वरे निरवकाशेत्युक्तमिति चेत्तत्राह ।। द्विवचनेति ।। द्विवचनान्ता श्रुतिः द्विवचनश्रुतिः । निरवकाशतया प्रतीताया अपीत्यर्थः । कुत इत्यत आह ।। विष्णोरेवेति ।। निर्भेदस्यैवेत्यर्थः । अयमर्थः– द्विवचनश्रुतिर्हि द्वित्वसङ्ख्यां प्रतिपादयति । द्वित्वसङ्ख्या च विष्णावङ्गीक्रियत एव । 'घर्मा समन्तात्' इत्यादौ द्वित्वस्योक्तत्वात् । द्वित्वे भेदोऽपि स्यादिति चेन्न । तर्कपक्षे विपर्ययापर्यवसानात् । अनुमानपक्षे च बाधितविषयत्वात् । व्यतिरेको गन्धवदिति न्यायेन व्यभिचाराच्चेति । अत एव श्रुतिर्द्विवचनेन प्रकृत्य 'यः सेतु'रित्येकवचनेन विशिनष्टि । नन्विदमानन्दमयाधिकरणेन गतमेव । मैवम् । न हि तत्र द्विवचनं बहुवचनं वा शङ्कितं तदभावात् । किं नाम, शब्दभेदादिना भेद इति । कर्मफलभोगश्चाङ्गीक्रियत एव । न च 'न वैशेष्या'दित्युक्तविरोधः । 'शुभं पिबत्यसौ नित्य'मिति व्यवस्थाया उक्तत्वात् । छायातपत्वं चान्यत्र व्याख्यातमिति ।। ३ ।।

**प्रबोधिनी**— ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ।। कर्मफलभोक्तारावात्मानावेव आत्मान्तरात्माख्यभगवद्रूपविशेषावेव । न जीवेश्वरौ । कुतः । हि यस्मात् गुहां प्रविष्टौ । रूपद्वयस्य गुहास्थत्वं कुत



इत्यत उक्तम् । तद्दर्शनादिति । तस्यात्मनो गुहास्थत्वस्य घर्मा समंतेत्यादिश्रुतौ दर्शनादिति सूत्रार्थः । ऋतं पिबन्ताविति वाक्य इति ।।

**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ।।**

इति काठकवाक्ये इत्यर्थः । ये पञ्चाग्नयः देवपितृभूतमनुष्यब्रह्मयज्ञरूप पञ्चाग्निरताः अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमरूपपञ्चाग्नयो वा, द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निनिष्ठा वा । त्रिनाचिकेताः त्रिवारकृत-नाचिकेतेष्टयः ते विद्वांसः ऋतं धर्मं पिबन्तौ तत्फलं भुंजानावित्यर्थः । सुकृतस्य लोके पुण्यकर्मनिर्मितशरीरे । गुहां हृदयगुहाम् । गुहायामित्यर्थः । परमे सर्वाधिकार्युत्तमे । परार्धे परेभ्य उत्तमेभ्यो भारत्यादिभ्य अतिपूर्णे मुख्यप्राणे प्रविष्टौ भगवद्रूपविशेषौ आत्मांतरात्मानौ छायातपौ ज्ञान्यज्ञानिसुखदुःखकरौ वदन्तीत्यर्थः । देहस्थ आत्मा जीवस्थ अन्तरात्मेत्याहुः । यद्वा परमे ब्रह्मावासत्वादुत्तमे । परार्धे परेण जीवेनासम्यगभिमन्यमानतया पूर्णे । जीवेनाभिमन्यमान इति यावत् । सुकृतस्य लोके गुहां प्रविष्टाविति गुहामित्यस्य द्वितीयांततया योजनया श्रुत्यर्थो ज्ञेयः । भोक्तृजीवद्वयासम्भवेनेति ।। कर्मफलभोक्तृजीवद्वयासम्भवेनेत्यर्थः । एतेन पिशाचवद्भोक्तृत्वं किं न स्यादिति परास्तम् । ब्रह्मविद्यात्त्वमपीति ।। एतेन बुद्धिजीवौ पिबन्ताविति पक्षे सर्वथा ब्रह्मप्रतिपादकत्वाभावेन ब्रह्मविद्यात्वहानिरुक्ता ज्ञेया ।। अविद्येत्यादि । अविद्याश्रयत्वाज्जीवः छाया । विद्यावत्वात्प्रकाशरूपत्वादीश्वर आतप इत्यर्थः । वाक्यबलादिति ।। तत्र य इत्येकवचनश्रवणादिति भावः । छायातपत्वस्य चेति । छत्रिन्यायेनेयमुक्तिरिति प्रतिभाति ।

बाधकवशेनेति ।। पिबन्ताविति द्विवचनेन प्रकृतयोः पिबतोरुत्तरमन्त्रे यः सेतुरित्यत्र य इत्येकवचनान्तयच्छब्देन परामर्शासम्भवेनेत्यर्थः । जीवे ब्रह्मशब्दादेरमुख्यत्वात्कथंचिदित्युक्तम् । यद्यपीश्वरमात्रविषयतयेत्यत्रेवात्रापि जीवमात्रविषयतयेति सुवचं तथापि यः सेतुरित्यत्रैकवचनश्रवणेन तस्य सुपां सुलुगित्यादिना द्विवचनादेशत्वमुपेत्य कथंचिज्जीवेश्वरोभयपरतयाऽप्यस्य मन्त्रस्य

व्याख्येयतामभिप्रेत्यात्र मात्रशब्दाभाव इति प्रतिभाति । विशेषणाच्चेति ॥ यः सेतुरित्येकवचनसेतुत्वब्रह्मत्वादिना पिबतोर्विशेषणाच्च भगवद्रूपविशेषावेव पिबन्तावित्यर्थः । बाधकादिति । द्विवचनश्रुतिरूपाद्बाधकात्पातृत्वगुहां प्रविष्टत्वादिकं जीवेश्वरपरतया नेयमित्यर्थः । घर्मेति ॥ घर्मा समन्तेत्यत्र च द्विवचनस्याकारादेशः । घर्मा द्योतमानौ समन्ता पूर्णौ आत्माऽन्तरात्मानौ त्रिवृतं त्रिभिस्तेजोबन्नैर्वृतं तदुपादानकं शरीरमिति यावत् । व्यापतुः विशेषेण प्राप्तौ । हृदयगुहां प्राप्ताविति भावः । मातरिश्वा मुख्यवायुस्तयोरात्मान्तरात्मनोर्जुष्टिं सेवां प्रति प्रीतिं वा आजगाम प्रापेति श्रुत्यर्थः ।

विपर्ययापर्यवसानादिति ॥ यदि द्वित्वं स्यात्तर्हीश्वरे भेदः स्यात् । न चास्ति भेदः । अतो न द्वित्वमिति विपर्ययपर्यवसानः कार्यः । तत्र श्रुतिबलेन द्वित्वसंख्याया अभ्युपगमात्तर्कस्यांगवैकल्यमिति भावः । वक्ष्यमाणन्यायेनेति । तत्र यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्तीति व्याख्यास्यमानत्वेनेन्द्रार्जुनादिषु द्वित्वसंख्यायाः सत्त्वे भेदाभावाद्व्यभिचार इत्यर्थः । अत एवेति ॥ भेदाभावादेवेत्यर्थः । गतमेवेति ॥ तत्र यथैकस्यैव पञ्चत्वसंख्याऽनुपपन्ना एकमेवेत्यादिश्रुतिविरोधादित्याशङ्क्य बहुरूपत्वादविरोध इति परिहृतं तथेहाप्येकस्यैवेश्वरस्य द्वित्वसंख्यारूपद्वयविवक्षयोच्यत इति न्यायसाम्येन गतार्थमिदमधिकरणमिति भावः । शब्दभेदादिनेति ॥ अन्नमयप्राणमयादिसंज्ञाभेदादिनेत्यर्थः । अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरित्युक्त्वा एतेन सहस्रदक्षिणेन यजेतेति श्रूयते । तत्राथैष इत्यादिशब्दैः किं पूर्वप्रकृतज्योतिष्टोम एवोच्यते अथवा कर्मान्तरमिति सन्देहे एतच्छब्दस्य प्रकृतपरामर्शकत्वादेतैः शब्दैर्ज्योतिष्टोम एवोच्यत इति प्राप्ते एतच्छब्दस्य वक्ष्यमाणपरतयाप्युपपत्या संज्ञाभेदात्कर्मान्तराण्येवं नामकानीति संज्ञा-भेदाद्भेदस्य पूर्वतन्त्रे द्वितीयस्याष्टमनये संज्ञा चोत्पत्तिसंयोगादित्यत्र सिद्धान्तितत्वादिति भावः ।

आदिशब्देन बहुव्रीहिसमासान्यशब्दपरिग्रहः । तदुक्तं सुधायाम् । नन्वन्नमयादित्वे परमात्मनो भेदप्रसङ्गादेकमेवेति श्रुतिविरोधः स्यात् । तथा



विज्ञानं प्रचुरमस्मिन् आनन्दः प्रचुरोऽस्मिन्निति विज्ञानादीनां परमेश्वरस्य च भेदप्रसङ्गे विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिविरोधः स्यादिति । तत्रैवान्यत्रापि । तथापि नान्नमयादयः परमात्मा । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमय इत्यादिनाऽन्नमयादीनामन्योन्यमन्यत्वावगमात् । परमात्मनि तु भेदाभावादिति ॥ नन्वीश्वरस्य कर्मफलभोगाभावात्कथं पिबन्ताविति पातृत्वोक्तिरित्यत आह ॥ कर्मेति ॥

**आत्मांतरात्मेति हरिरेक एव द्विधा स्थितः ।**
**निविष्टो हृदये नित्यं रसं पिबति कर्मजम् ॥**

इति प्रमाणादिति भावः । वैशेष्यादिति ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यादित्यत्र सामर्थ्यवैशेष्येणेश्वरस्य कर्मफलभोगाभावाभिधानादिति भावः । शुभमिति ॥

शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥ इति प्रमाणा दित्यर्थः । अत्र शुभाशुभशब्दौ सुख-दुःखपरौ । अन्यत्रेति ॥ छायेन विदुषां प्रभुः । आतपः पापिनामित्यनेन काठकभाष्य इत्यर्थः ।

## अन्तराधिकरणम् I-2-4

**न्या.वि. — 'सोऽहमस्मि, 'स एवाऽहमस्मि' इत्याद्यभ्या-सार्थवाद-सहितबहुश्रुतिभ्योऽपि निरवकाशोपपत्तेरेव प्राबल्यम् ॥ ॥ ४ ॥**

टीका— ॐ अन्तर उपपत्तेः ॐ ॥ 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यत्राक्षिस्थत्वेनाग्निरेवोच्यते । 'य एष आदित्ये पुरुषः सोऽहमस्मि' इत्यग्निना, अक्ष्यादित्यस्थत्वेनात्मना, उपदिष्टत्वात् । अक्ष्यादित्ययोरेकविधत्वात् । न चात्रोपदिष्टो नाग्निरिति युक्तम् । 'अथ ह्यग्नयः समूदिरे' 'आहवानीयोऽनुशशास' इत्यादिबहुशोऽग्निश्रुतिसद्भावात् । न चाग्न्यादिश्रुतिरीश्वरविषया । त्रेताग्निविषयतायाः स्फुटं प्रतीतेः । 'आत्मा मे भद्रसेनः' इतिवत्

‘सोऽहमस्मी’त्युपचारः किं न भवेदिति चेन्न । ‘सोऽहमस्मी’त्यस्यार्थस्याभ्यासात् । ‘अपहते पापकृत्या’मित्याद्यर्थवादाच्च । अभ्यासार्थवादयोश्च तात्पर्यलिङ्गयोरुपचाराविरोधित्वात् । न च ‘प्राणो वा अहमस्मी’तिवदन्तर्याम्यपेक्षयेति वाच्यम् । ‘सोऽहमस्मी’त्युक्त्वा पुनः ‘स एवाहमस्मी’ति सावधारणमुक्तत्वात् । अवधारणेन च प्रकारान्तराणां सर्वेषां व्यावर्तितत्वात् । अत एवात्मादिशब्दोऽप्यमुख्यार्थोऽङ्गीकार्य इत्येवं प्राप्ते समाहितं ॥ चक्षुरन्तःस्थो विष्णुरेव । अमृतत्वाभयत्वोपपत्तेः । आत्मादिशब्दात् स्थानादिसामर्थ्याभिधानादेश्चेति । तत्र पूर्वोत्तरपक्षयोरुभयोरपि प्रमाणवत्त्वात् कथं निर्णय इत्यत आह ॥ सोऽहमिति ॥ उपपत्तेर्निरवकाशत्वं वदता, ‘सोऽहमस्मी’त्यादेः सावकाशत्वं सूचितम् उपपत्तेरेव किमुतात्मशब्दसहितायाः । तथा हि । अग्निः प्रसिद्ध एवास्तु । ‘सोऽहमस्मी’त्यादि तु अन्तर्याम्यपेक्षया सावकाशम् । अवधारणं चान्तर्यामिणो विशेषाभावप्रतिपादनार्थम् । तथैवाभ्यासादिकं तात्पर्यद्योतकम् । उपपत्त्यादेस्तु निरवकाशत्वं स्फुटमेवेति ॥ ४ ॥

**प्रबोधिनी** — ॐ अन्तरः उपपत्तेः ॐ ॥ अन्तरः चक्षुरंतःस्थित्वा रममाणो विष्णुरेव । एतदभयममृतमेतद्ब्रह्मेत्यादिनोक्तामृतत्वाभयत्वब्रह्मशब्दानां तत्रैवोपपत्तेरिति सूत्रार्थः । य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति छन्दोगश्रुतावित्यर्थः । य एषः अक्षिण्यन्तः पुरुषो दिव्यदृष्ट्या दृश्यते एष आत्मा वामनाख्यः परमात्मेति होवाच । एतद्भगवद्रूपममृतं स्वत एव मरणरहितं, अभयं स्वत एव भयरहितं, एतद्ब्रह्म गुणपूर्णमिति श्रुत्यर्थः । य एष आदित्य इति ॥ य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मीति छन्दोगश्रुतावित्यर्थः । आदित्ये सूर्ये य एषः पुरुषः पूर्णषड्गुणो भगवान् सोऽहमहेयत्वादहं नामा गार्हपत्याख्याग्निस्थोऽस्मि । आदित्यस्थस्य मदन्तर्यामिणश्च न विदुरधर्मादिवदभेदः । अपि तु न कोऽपि विशेष इत्याह ॥ स एवेति सैद्धान्तिकः श्रुत्यर्थः । इदमुपकोसलं प्रत्यग्नेर्वचनम् । नन्वग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वमित्यत आह ॥ अक्ष्यादित्ययोरिति ॥ जडाक्ष्यादित्यमण्डलयोरेकविधत्वात् एकदेवताधिष्ठितत्वादित्यर्थः । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदित्यैतरेयश्रुतेरिति भावः । आदित्यः



आदित्यमण्डलाभिमानी चक्षुर्भूत्वा रूपान्तरेण चक्षुर्देवो भूत्वा अक्षिणी गोलके प्राविशदिति श्रुत्यर्थः । अक्ष्यादित्ययोरैक्यादिति भाष्यस्यापि चक्षुर्गोलकादित्यमण्डलयोरेकविधत्वादेकचेतनाधिष्ठितत्वादित्यर्थो ज्ञेयः । तत्वप्रदीपे त्विदं वाक्यमक्षीन्द्रियप्रेरकादित्ययोरैक्यादिति विवृतम् । नन्वक्ष्यादित्ययोरेकविधत्वेऽपि सोऽहमस्मीत्यत्रोपदेष्टा विष्णुः किं न स्यादित्यत आह ॥ न चेति ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेत्यादाविवाहंशब्दो विष्णुप्रयुक्त एव किं न स्यादिति भावः ॥

अनुशशासेत्यादीति ॥ आदिपदेन अथ हैनं गार्हपत्योऽनुशशासेत्यादिवाक्यपरिग्रहः । नन्वत्रान्तराधिकरणन्यायेनाग्निशब्दस्येश्वरपरता किं न स्यादित्याशङ्क्य निषेधति । न चेति ॥ स्फुटप्रतीतेरिति ॥ सोऽहमस्मीत्यतः पूर्वं तस्य ह द्वादशवर्षमग्नीन्परिचचार तस्मो ब्रह्मचारी कुशलमग्नीन्पर्यचारीत् । अथ हाग्नयः समूदिरे । ते होचुरित्यादिना बहुकृत्वोऽग्निशब्दश्रवणात् त्रेताग्निपरतया प्रतीतेर्विष्णुलिङ्गाश्रवणाच्च नेश्वरविषयतेति भावः । आत्मेति । भद्रसेनः कश्चन राजा मे आत्मा जीवः इतिवदुपचार इत्यर्थः । अन्यथा स यश्चायं पुरुषे यश्चासावादित्य इत्यानन्दमयस्यादित्यस्थत्वप्रतिपादकसमाख्याश्रुतिविरोधादिति भावः । औपचारिकत्वं कुतो न वाच्यमित्यत आह । सोऽहमिति ॥ स्थानान्तरस्थ समाख्यापेक्षयैकस्थानस्थाभ्यासस्य शीघ्रोपस्थितिहेतुत्वेन प्राबल्यादिति भावः । ननु लोकप्रसिद्धाग्नित्यागेनालौकिकविष्णुग्रहणेनापूर्वतयाऽभ्यासस्य बाधः किं न स्यादित्यतस्ततोऽपि प्रबलं तात्पर्यलिङ्गमाह । अपहत इति ॥ स य एतदेवं विद्वानुपास्ते अपहते पापकृत्यां लोकी भवति सर्वमायुरेतीति श्रुतिः । योऽधिकारी एतत् अग्न्यंतर्यामिरूपं एवं विद्वान् जानन्नुपास्ते स पापकृत्यां अपहते विनाशयति लोकी भगवल्लोकी भवति । सर्वमायुर्मोक्षमाप्नोतीति सैद्धान्तिकः श्रुत्यर्थः । अन्तर्याम्यपेक्षयेति ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववदित्युक्तन्यायेनेति भावः । प्रकारान्तराणामिति ॥ अन्तर्यामिपरत्वौपचारिकत्वादीनामित्यर्थः । अत एवेति ॥ अक्षिगोलकस्थत्वेनाग्नेरुक्तत्वादेवेत्यर्थः। आत्मादीत्यादिपदेन ब्रह्मशब्दादिपरिग्रहः । स्थानादीति ॥ अनेन स्थानादिव्यपदेशाच्चेति सूत्रमभिप्रैति । स्थानं अक्षि । आदिपदात्तदधिष्ठातृ ।

शक्त्युपलक्षकमेतत् । तथा चासङ्गत्वाख्यस्थानशक्तेः संपद्वामत्त्वाद्यधिष्ठातृशक्ते-र्व्यपदेशाच्च चक्षुरंतस्थो विष्णुरेवेति सूत्रार्थो ज्ञेयः । आदिपदेन सुखविशिष्टाभिधानादेव चेत्यादिनोक्तहेतूनां परिग्रहः । तत्रैवेति ॥ विशेषमात्राभाव इत्यर्थः । अभ्यासादिकमित्यादिपदेनार्थवादपरिग्रहः । उपपत्त्यादेरिति ॥ आदिपदेनात्मब्रह्मशब्दपरिग्रहः । स्फुटमेवेति ॥ मुख्यामृतत्व-स्यात्मादिशब्दादेश्च विष्णोरन्यत्रासम्भवादिति भावः । अत्रादित्यस्थत्वलिङ्गस्यापि समन्वयसिद्ध्यर्थं वक्रसंगत्याऽधिकरणारम्भ इत्यन्यत्र स्पष्टम् ॥

## अन्तर्याम्यधिकरणम् I-2-5

**न्या.वि. — पृथिव्यादिशरीरत्वं च न निरवकाशम् । यौगिकशरीरत्वोपपत्तेर्विष्णोरपि ॥ ५ ॥**

**टीका—** ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ निरवकाशेनामृतत्वादिनाऽक्षिस्थो हरिरेवेति प्रतिपादितेऽपि अन्तर्यामी विष्णोरन्य एव स्यात् । पृथिव्यादिशरीरस्य तत्रावकाशाभावादित्याशङ्कायामाह ॥ पृथिव्यादीति ॥ कुतो नेत्यत आह ॥ यौगिकेति ॥ अशरीरस्यापि विष्णोः 'शीर्यते नित्यमेवास्मात्'इत्युक्तरीत्या पृथिव्यादिना योगवृत्तिसिद्धशरीर-शब्दवाच्यत्वसम्भवादित्यर्थः । पृथिव्यादीनि योगवृत्त्या विष्णुं प्रति शरीरशब्दवाच्यानीति यावत् । अविदितत्वादिबलेन प्रथमप्राप्ताया अपि रूढेः परित्यागोपपत्तेरिति ॥ ५ ॥

**प्रबोधिनी—** ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ अन्तर्यामी विष्णुरेव । अधिदैवादिषु अधिदैवाधिभूतादिप्रकरणेषु तस्यान्तर्यामिणः सम्बन्धितया तस्य ब्रह्मणो धर्मस्य पृथिव्याद्यविदितत्वादेर्व्यपदेशादिति सूत्रार्थः । अन्तर्यामीति ॥ यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यादिकाण्वमाध्यंदिनश्रुत्युक्तः अन्तर्यामीत्यर्थः । यो भगवान् पृथिव्यां भुवि तदभिमानिदेवतायां च । एवमुत्तरत्रापि । तिष्ठन् । पृथिव्या अन्तरः भिन्नः पृथिवी तदभिमानिदेवता यं भगवन्तं न वेद न जानाति यस्य भगवतः पृथिवी



शरीरं शरीरस्थानीया । यः भगवान् अन्तरः सन् इतरापेक्षां विना रमते रमयतीति वा । अन्तरः सन् पृथिवीं यमयति प्रेरयति एष भगवान् ते तव आत्मा नियामकः अन्तर्यामी अमृतो नित्यमुक्तश्चेति श्रुत्यर्थः ।

पृथिव्या अन्तर इत्यत्र व्यासतीर्थीयटीकारीत्या अतिप्रियत्वाच्च हरेरन्तरत्वमिति स्मृतमिति स्मृतेरेतद्विषयत्वात् पृथिव्या इत्यादिपञ्चम्याः षष्ठ्यर्थतया पृथिव्या अन्तरोऽतिप्रिय इत्यर्थ इति प्रतिभाति । सूत्रभाष्यटीकायां बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।

**अतिप्रियत्वाच्च हरेरन्तरत्वमिति स्मृतम् ।**

इति श्लोकस्य द्वितीयांतरपदस्यैवार्थद्वयपरत्वमभिप्रेत्य पृथिव्या इत्यादि-पञ्चमीस्वारस्यानुरोधेनांतरो विविक्त इत्यर्थ इत्युक्तम् । अत्र पक्षे पृथिव्या अन्तर इत्यादिपञ्चम्यंतपदोत्तरांतरपदं बृहद्भाष्ये न विवृतमिति ज्ञेयम् । भावदीपे तु पृथिव्या अन्तरोऽन्तस्थः । अन्तस्थो देवतानां च न विदुर्यं च देवता इति बृहद्भाष्योक्तेः अन्तरो विविक्त इति टीकोक्तिस्त्वन्तरशब्दस्यार्थान्तरपरेत्युक्तम् । अत्र बृहद्भाष्ये पृथिवीशब्दो गरुडपर इति विवृतम् । एतच्च गोतमं प्रति याज्ञवल्क्यस्य वचनम् । विष्णोरन्य एवेति ॥ तथा च तत्र श्रुतममृतत्वं नाक्षिस्थस्य विष्णुत्वनिश्चायकमिति भावः । पृथिव्यादीत्यादिपदेनोत्तर-वाक्योक्तात्रादिपरिग्रहः । इत्युक्तरीत्येति ॥ शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।

**रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् ।**

इति स्मृत्युक्तरीत्येत्यर्थः । शीर्यते विदार्यते वियुज्यत इति यावत् । उपलक्षणमेतत् । पृथिव्याद्या देवतास्तु देहवत्तद्वशत्वतः ।

**शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः ।**

इति बृहद्भाष्योदाहृतस्मृत्युक्तरीत्येत्यपि द्रष्टव्यम् । अविदितत्वादिबलेन परित्यागोपपत्तेरित्यन्वयः । आदिपदेनान्तरत्वग्रहः । रूढेरिति ॥ इदं पूर्वपक्षशरीरमित्यादौ प्रसिद्धायाः शरीरशब्दस्य स्वरूपे रूढेरित्यर्थः ॥

## अदृश्यत्वाधिकरणम् I-2-6

**न्या.वि. — 'अक्षरात्परतः परः' इति श्रुतेरपि नाक्षरात्सम्भवतीत्यस्याः निरवकाशत्वम् । अक्षरात्परतः परस्याप्यक्षरान्तरत्ववचनात् ॥ ६ ॥**

**टीका**— ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ 'यत्तदद्रेश्यम्'इत्युक्तं विष्णोरन्यत्रैव स्यात् । तस्मिन् 'अक्षरात्सम्भवतीह विश्वम्'इत्यक्षरशब्दश्रवणात्। तस्य च प्रधानादौ रूढत्वात् । यद्यपि पूर्ववददृश्यत्वादिबलेन रूढिं परित्यज्य योगवृत्त्याऽक्षरशब्दो विष्णौ सम्भवति । तथाप्यत्र न विष्णुविषयोऽङ्गीकर्तुं शक्यते । 'अक्षरात्परतः परः' इत्युत्तरश्रुत्या अस्माददृश्यत्वादिगुणकाद्विश्वयोनेरक्षरात्परतः परस्याभिधानात् । न हि विष्णोः परोऽङ्गीक्रियते । इत्येवं प्राप्ते समाधत्ते ॥ अक्षरादिति ॥ श्रुतेरिति पञ्चमी । अस्याः श्रुतेरिति वर्तते । अक्षरात्परतःपराभिधात्र्यामुक्तश्रुतौ विद्यमानायामपि 'अक्षरात्सम्भवतीह विश्वम्'इत्यक्षरश्रुतेः विष्णौ निरवकाशत्वं नास्तीत्यर्थः । कुतः । अस्यैव विश्वयोनेरक्षरस्याक्षरात्परतः परत्वमुत्तरश्रुत्योच्यते । न त्वेतत्प्रतियोगिकपरत्वं वाऽनन्य इत्यङ्गीकारात् । अक्षरात्परतः परत्वं चाक्षरत्वं चैकस्यैव व्याहतमित्यत आह ॥ अक्षरादिति ॥ स्यादियं व्याहतिर्यदि 'यस्मादक्षरात्परतः परः, तदेवाक्षरं स्वयमिति ब्रूमः । न चैवम् । 'अपरं त्वक्षरं या सा'इत्यादिनाऽक्षरत्रयाभिधानेनाक्षरात्परतः परस्याप्यक्षरान्तरत्ववचनात् । परविद्याविषयत्वबलेन प्रकृतपरित्यागाप्रकृतग्रहणयोरुपपत्तेरिति ॥ ६ ॥

**प्रबोधिनी** — ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ अदृश्यत्वमादिर्येषां ते अदृश्यत्वादयः । ते गुणा यस्यासावदृश्यत्वादिगुणकः विष्णुरेव । अथ परा यया तदक्षरमधिगम्यते इति परविद्याविषयत्वरूपतद्धर्मोक्तेरिति सूत्रार्थः । यत्तदद्रेश्यमित्युक्तमिति ॥ अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्। तदव्ययं यद्भूतयोनिं परिपश्यंति धीराः । यथोर्णनाभिः सृजते गृण्हते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात्



सम्भवतीह विश्वमित्याथर्वणश्रुतावित्यर्थः । अथ अपरविद्यानिरूपणानन्तरमवसरप्राप्ता परविद्या निरूप्यत इत्यर्थः । यत्तदद्रेश्यत्वादिगुणकं तदक्षरं यया विद्यया वित्तिजनकऋगादिशास्त्रेणाधिगम्यते सा अक्षरज्ञप्तिहेतुत्वेनोपाधिना परविद्येत्युच्यत इत्यर्थः । तदुक्तम् ।

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।

ता एव परमा विद्या यदा विष्णोस्तु वाचकाः इति । यथैकमेव कर्म सकामत्वनिष्कामत्वोपाधिभ्यां प्रवृत्तं निवृत्तमिति चोच्यते तथा ब्रह्ममीमांसाशास्त्रन्यायानुपकृततादशायां विष्णोरवाचकत्वेन, तदुपकरणदशायां त एव तद्वाचकत्वेन क्रमेणापरविद्या परविद्येति चोच्यन्त इति प्रमाणाशयः । कीदृशं तदक्षरमित्यतस्तन्महिमानमाह । यत्तदिति ॥ यदक्षरमद्रेश्यं दृष्ट्युपलक्षितबाह्येन्द्रियाविषयम् । साकल्येनेत्ययोग्यैरिति वा योज्यम् । यद्वा दृश्यादन्यददृश्यम्। ग्राह्यादन्यदग्राह्यमित्यर्थः । न विद्यते गोत्रं वर्णं वा यस्य तदगोत्रमवर्णम् । अचक्षुःश्रोत्रमित्यादेः प्राकृतचक्षुरादिहीनमित्यर्थः । नित्यं देहतोऽपि नाशहीनम् । विभुं समर्थम् । सर्वगतं सर्वव्यापि । सर्वगतत्वे प्रतिहतिः स्यादित्यत आह । सुसूक्ष्मम् । अत्यन्ताप्रतिघम् । तत् त्वया पृष्टमक्षरमिति पूर्वश्रुततत्पदस्यान्वयः । अद्रेश्यमित्युक्तिर्न सर्वथेति भावेनाक्षरस्य गुणान्तरमाह । तदव्ययमिति ॥ यदक्षरं भूतानां प्राणिनां योनिं कारणं धीराः ज्ञानिनः परिपश्यंति अव्ययं शश्वदेकप्रकारं तत् प्रागुक्तमक्षरमित्यर्थः । भूतयोनिमित्युक्तं भूतकारणत्वं संहर्तृत्वस्योपलक्षणमित्यभिप्रेत्योभयप्रकारं सदृष्टान्तं व्यनक्ति ॥ यथेति ॥ ऊर्णनाभिस्तन्तुवायो जन्तुविशेषः । स्वोपभुक्तवस्तूनि तंत्वात्मना स्वोदरे गृह्णाति च तथा विश्वं लये निगीर्णं सत् अक्षरादिह बहिर्देशे सम्भवतीत्यर्थः । न तूपादानत्वं विवर्तत्वं वेति भावः । उपलक्षणं चैतत् । ऊर्णनाभिना तन्तुराशिरिव संह्रियते चेत्यपि ज्ञेयम् । ननु नानाविधसृष्टौ वैषम्यादिदोषः किं नेत्यभिप्रेत्याह । यथा पृथिव्यामिति ॥ यथा पृथिवी नानाविधशाल्यादिबीजान्यपेक्ष्य नानाविधाङ्कुरान् जनयति तथा जीवानां नानाविधकर्माण्यनुसृत्य नानाविधजीवान् सृजतीत्यर्थः । नन्वक्षरस्य

विश्वसृष्ट्यादिना फलसत्त्वेऽपूर्णता । तदसत्त्वे प्रेक्षावतस्तत्र प्रवृत्त्ययोग इत्यत उक्तम् । यथा सत इति ॥ सतश्चेतनाधिष्ठितात् पुरुषात् देहात् केशलोमान्यनायासेन भवन्ति । शिरोरुहाः केशाः, देहजानि लोमानीति विवेकः । तथाऽक्षरादनायासेन विश्वं सम्भवति उत्पद्यत इति सैद्धान्तिकः श्रुत्यर्थः । अत्यायाससाध्ये हि फलापेक्षा । न त्वनायाससाध्येऽङ्गुलिचालनादौ लोके प्रेक्षावतामपि न फलापेक्षाऽस्तीति भावः ।

प्रधानादाविति ॥ आदिपदेन चित्प्रकृतिपरिग्रहः । पूर्ववदिति ॥ आकाशाधिकरणादाविवेत्यर्थः । इत्युत्तरश्रुत्येति ॥

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो अक्षरात्परतः परः ॥**

इति श्रुत्येत्यर्थः । दिव्यः अत्यद्भुतः अमूर्तः नियतपरिच्छिन्न-परिमाणरहितः । किं तु बाह्य आभ्यन्तरश्च । अप्राणो ह्यमना इति षोडशकलाराहित्यमुच्यते । अत्र विशेषस्त्वस्मत्कृतश्रीमद्भाष्य- श्रुत्याद्यर्थरत्नावल्यामक्षराधिकरणे द्रष्टव्यः । शुभ्रः शुद्धः । अक्षरात् जडप्रकृतेः परतः श्रीतत्वात् पर उत्तम इति सैद्धान्तिकः श्रुत्यर्थः । एतत्प्रतियोगिकेति ॥ अक्षरात्सम्भवतीह विश्वमिति श्रुत्युक्तविश्वयोन्यक्षरप्रतियोगिकेत्यर्थः । व्याहतमिति ॥ परत्वस्य भेदव्याप्तत्वादिति भावः । अपरं त्वक्षरं या सेत्यादिनेति ॥

**अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।**
**श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।**
**तामक्षरं परं प्राहुः परतः परमक्षरम् ।**
**हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥**

इति प्रमाणेनेत्यर्थः । अक्षरान्तरत्ववचनादिति ॥ विश्वयोन्यक्षरत्व-वचनादित्यर्थः । नन्वक्षरात्परतः पर इत्यत्र प्रकृतमक्षरं विहायाप्रकृतजडप्रकृतेः परत्वावधितयाऽक्षरशब्देनेह ग्रहणे किं निमित्तमित्यतः आह । परविद्याविषयत्वबलेनेति ॥ द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा



यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि सा परा । अथ परा यया स हरिर्वेदितव्यो योऽसावद्दश्यो निर्गुणः परः परमात्मेति श्रुत्या विष्णु-धर्मत्वेनावगतपरविद्याविषयत्वरूपलिङ्गबलेनेत्यर्थः । परविद्याविषयत्वं च मोक्षसाधनविद्याविषयत्वम् ।

वेदा ऋगादयः । अङ्गानि शिक्षादीनि । उपाङ्गानि आयुर्वेदो धनुर्वेदो गान्धर्वं स्थापत्यं चेति । प्रत्यङ्गानि शिष्टाः कलाविद्याः । सा अपरविद्येत्युच्यते । अथेत्यादि प्राग्वत् । यया वेदादिविद्यया स हरिर्वेदितव्यः । ब्रह्ममीमांसा-शास्त्रव्युत्पादितन्यायोपकरणदशायां प्रतिपाद्यते सा परविद्येति सम्बन्धः । स हरिः कीदृश इत्यतो योऽसावित्यादि । अदृश्यः साकल्येन चक्षुराद्यगोचरः । निर्गुणः सत्वादिगुणशून्यः परः सर्वोत्तमः । परमात्मा श्रीपतिः स हरिरिति श्रुतियोजना । परविद्यायाः प्रथममुद्दिष्टत्वेऽप्यन्ते निरूपणं भगवतः श्रैष्ठ्यज्ञापनायेति ज्ञेयम् । इतिशब्दोऽधिकरणसमाप्तौ ॥

## वैश्वानराधिकरणम् I-2-7

**न्या.वि. — श्रुतिसाधारण्ये विशेषश्रुत्यादेर्निश्चयः । उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वबलान्निश्चयः ॥७॥**

**इति प्रथमाध्यायस्य द्वितीयः पादः ॥**

**टीका—** ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ वैश्वानरश्रुतेर्देवता-भूतविशेषयोः रूढत्वात्तयोरिह ग्रहणम् । अन्तःस्थाधिकरणन्यायेन विष्णावपि तस्या वृत्तिरस्तीति चेत् , एवं तर्हि विष्णावितरत्र च श्रुतेः साधारण्येऽन्यतर-निर्णये हेत्वभावात् 'तत्तु समन्वयात्' इत्यवधारणानुपपत्तिः । मुख्यामुख्यन्यायेन निर्णय इति चेन्न । एवं सति 'इदमग्निसूक्तमिदं वायुसूक्तम्'इत्यादि-व्यवस्थाभावप्रसङ्गस्य बाधकस्य विद्यमानत्वात् । असति बाधके मुख्यामुख्य-न्यायावतारादिति प्राप्ते प्रतिविधत्ते ॥ श्रुतीति ॥ वैश्वानरश्रुतेर्विष्णावितरत्र च साधारण्येऽपि विष्णुरेवात्र प्रतिपाद्य इति निश्चयो युज्यते । कुतः विशेषश्रुत्यादेः 'आत्मानं वैश्वानरं' इति विष्णोरेवासाधारणात्मश्रुत्या वैश्वानरश्रुतेर्विशेषितत्वात् ।

'स्वस्तिमतीं गामानय' इतिवत् । 'अहं वैश्वानरः' इत्याद्यनवकाशश्रुतिस्मृतिसमाख्यानाच्च । एवं तर्हि पुनरनिर्णय एव । यथा खल्वात्मानमिति विशेषश्रुत्या विशेषितत्वं तथा 'अयमग्निर्वैश्वानरः' इत्यादिवैश्वानरविद्यास्वग्न्यादिश्रुत्या विशेषितत्वमस्ति । अग्न्यादिश्रुतिः साधारणीति चेन्न । तथा सति विशेषणानर्थक्यात् । होमाधिकरणत्वादीनामग्निधर्माणां चात्र श्रवणमस्तीत्यत आह ॥ उभयत्रेति ॥ पक्षद्वयेऽपि विशेषश्रुत्यादौ विद्यमाने तु प्रकारान्तरेण निश्चयो युज्यते । कथम् । सावकाशत्वनिरवकाशत्वबलात् । 'अथ हैममात्मानम्'इत्यादिना हि सर्वनामलिङ्गादीनां भगवति वृत्तिरुक्ता । ततस्तेषां सावकाशत्वम् । न चात्मशब्दादेरन्यत्रावकाशः । विशेषणानर्थक्यमिति चेन्न । स्वरूपकथनत्वोपपत्तेः । न च प्रयोजनाभावः । उपासनार्थत्वादिति । तदिदमुक्तं 'शब्दादिभ्य' इत्यादिना । सूक्तादिव्यवस्था तु सूत्रकृतैव समर्थिता ॥ ७ ॥

**नि.प्र.— ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥** वैश्वानरमुपास्त इत्युक्तवैश्वानरो विष्णुरेव । अग्नौ विष्णौ च साधारणस्य वैश्वानरशब्दस्यात्मशब्देन विशेषणादिति सूत्रार्थः । देवताभूतविशेषयोरिति ॥ वैश्वानरस्य सुमतौ स्यामेति देवतायां विश्वस्मा अग्निभुवनाय देवा वैश्वानरमिति अग्निर्वैश्वानरो वह्निरिति च बाह्यभूताग्नौ रूढत्वादित्यर्थः । इह ग्रहणमिति । पूर्वपक्षविषयतयेत्यर्थः । अन्तःस्थाधिकरणन्यायेनेति ॥ तत्राधिदैवगताशेषनाम्नां निरवकाशलिङ्गेन विष्णुपरत्वोक्तेरिहापि सर्वगतत्वाख्यविष्णुलिङ्गाद्विष्णावपि वृत्तिरस्तीति भावः । तथा च श्रुतिः । स्थूलभुग्वैश्वानरः प्रथमः पाद इति । श्रुतेः साधारण्य इति ॥ वैश्वानरशब्दस्य विष्णुतदितरसाधारण्ये सतीत्यर्थः । अङ्गीकृत्य चेदमुदितम् । वैश्वानरशब्दस्यान्यत्र प्रसिद्धत्वेनोभयत्र प्रसिद्धत्वाभावात् । अन्यथा लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्न इति टीकाग्रन्थविरोधात् । न च वैश्वानरशब्दस्य सूत्रोक्तसाधारण्यविरोध इति वाच्यम् । तत्र वैश्वानरशब्दस्यान्यत्र प्रसिद्ध्यविरोधेनैव तस्यान्यत्र प्रसिद्धेर्विष्णुलिङ्गानां च निरवकाशत्वेन तुल्यबलत्वविवक्षया तदुक्तिसम्भवेनोभयत्र प्रसिद्धताया अनभिधानात् । व्यक्तमेतच्चन्द्रिकादौ । वस्तुतस्तु ज्योतिराकाशशब्दयोर्विवक्षा भेदेनान्यत्रोभयत्रान्यत्रैव प्रसिद्धतेव वैश्वानरशब्दस्याप्यन्यत्रोभयत्र प्रसिद्धत्वसम्भवेनान्यत्र



प्रसिद्धत्वमाश्रित्य सूत्रभाष्यटीका प्रवृत्ता । एषा तु टीकोक्तदिशोभयत्र प्रसिद्धिमाश्रित्येत्यविरोधः । अत एवास्याधिकरणस्यैतल्लक्षणचरणत्रयशेषत्वमभिप्रेत्यान्तादिन्यायेन द्वितीयचरणान्ते निवेशः । अत एव चानुभाष्ये एतदधिकरणारम्भात् प्राक् चरणद्वयार्थोपसंहारः कृतः । द्वितीयचरणार्थोपसंहारानन्तरमेतदधिकरणविवरणात्तृतीयचरणशेषत्वम् । तृतीयचरणार्थनिरूपणात् प्रागेतदधिकरणस्य विवरणाद्वितीयचरणशेषत्वम् । द्वितीयचरणार्थोपसंहारे कर्तव्ये प्रथमचरणार्थोपसंहारादस्याधिकरणस्य प्रथमचरणशेषत्वमपि भाष्यकाराभिमतं विज्ञायते । एवं सति सूत्रकृदुक्तं साधारण्यमपि स्वरसमिति प्रतिभाति । अत एवात्र श्रुतेः साधारण्य इत्युक्तम् । अन्यथा साधारण्येनेत्यवक्ष्यत् । व्यवस्थाभावप्रसङ्गादिति ॥ तस्या लोकप्रसिद्धिमूलकत्वात्तस्याश्च विष्णावभावादिति भावः । वैश्वानरश्रुतेरिति ॥ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त इति छन्दोगश्रुतौ श्रुतवैश्वानरशब्दस्येत्यर्थः । एवमग्रेऽपि श्रुत्या श्रुतेरित्यस्य शब्देन शब्दस्येत्यर्थो बोध्यः । योऽधिकारी प्रादेशमात्रं प्रादेशपरिमाणम् । परिमाणे मात्रच् । अभिविमानम् । अभितो विगतं मानं मर्यादा यस्य तं सर्वगतं वैश्वानरं विश्वगुणत्वाद्वैश्वः । आ सम्यक् न रीयत इत्यानरः । वैश्वश्चासावानरश्चेति वैश्वानरस्तमेतमात्मानमेवमुक्तप्रकारेण उपास्ते जिज्ञासत इति श्रुत्यर्थः । आदिशब्दग्राह्यमाह । अहमिति ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः इति गीतायामर्जुनं प्रति श्रीकृष्णस्य वचनम् । अयमग्निर्वैश्वानर इति बृहदारण्यकवाक्यम् । अस्यार्थः स्पष्टः । बृहदारण्यकवाक्योदाहरणं च सर्ववैश्वानरविद्यानामत्र निर्णयज्ञापनाय । आदिशब्दात् वैश्वानरमृत आजातमग्निमिति श्रुतिपरिग्रहः । एतच्छ्रुत्यर्थस्त्वस्मत्कृतभाष्यश्रुत्याद्यर्थरत्नावल्यां द्रष्टव्यः । अग्न्यादिश्रुतिरिति ॥ आदिपदाद्वैश्वानरशब्दपरिग्रहः । साधारणीति ॥ विष्णौ सावकाशेत्यर्थः । तथा च स एवात्र वैश्वानरः किं न स्यादिति भावः । विशेषणानर्थक्यादिति ॥ अग्निशब्दस्यानर्थक्यादित्यर्थः । होमाधिकरणत्वादीनामिति ॥ वैश्वानरे तद्धुतं भवतीत्यादिनेति भावः । आदिपदेन अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यत इति बृहदारण्यके श्रुतपाचकत्वादिपरिग्रहः । अथ

हेममात्मानमिति ॥ अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु भूतेषु, लोकेषु, सर्वेषु, भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवतीति श्रुत्येत्यर्थः । विश्वं पूर्णम् । प्रथमेतिशब्दो विधिसमाप्तौ । द्वितीयस्येत्युपासीतेत्यन्वयः । सर्वनामा सर्वशब्दवाच्यः । सर्वकर्मा पूर्णव्यापारः । सर्वाणि वज्रधरत्वादीनि लिङ्गानि यस्येति सर्वलिङ्गः । सर्वमिच्छाविषयो यस्येति सर्वकामः पूर्णकाम इति यावत् । सर्वगुणः पूर्णगुणः । सर्वधर्मः सर्वाधारः । सर्वस्मिन् रूपमस्येति सर्वरूपः । स य इत्यादि फलोक्तिः ।

स प्रसिद्धो योऽधिकारी एतमुक्तलक्षणमात्मानमन्तर्यामिणं विश्वं पूर्णं हरिं पापहरमारात् समीपे स्वहृदये इत्यर्थः । अरं अलं सम्यक् एवमुक्तप्रकारेणोपास्ते तस्याधिकारिणः सर्वेषु लोकेषु भूरादिषु कामचारः यथेष्टसंचारः । सर्वेषु भूतेषु प्राणिषु । सर्वेषु देवेषु । कुरुपाण्डवन्यायेन पृथगुक्तिः । कामचारः स्वेच्छया विषयभोगः । सर्वेषु वेदेषु कामचारः अनायासेन ज्ञानं भवतीति श्रुत्यर्थः । चर गतिभक्षणयोरिति धातोः । तेषामिति ॥ अग्निश्रुतिलिङ्गानामित्यर्थः । न चात्मशब्दादेरिति ॥

अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः ।
अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि ॥

इति स्मृतेरिति भावः । आदिपदेन को न आत्मा किं ब्रह्मेत्यत्र श्रुतब्रह्मशब्दपरिग्रहः । विशेषणेति ॥ अग्निशब्दस्य वैय्यर्थ्यं नेत्यर्थः । शब्दादिभ्य इति ॥ शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशाद-सम्भवात्पुरुषविधमपि चैनमधीयत एक इति सूत्रेणेत्यर्थः । अग्न्यादि-शब्दादिपदोक्तहोमाधिकरणत्वलिङ्गेभ्यः अन्तः प्रतिष्ठानात् अन्तः प्रविश्य पचनरूपादग्निव्यापाराच्च वैश्वानरोऽग्निरेव न विष्णुरिति चेन्न । तेषां श्रुत्यादीनां हरौ सावकाशत्वात् । कथम् । अग्न्यादिनामलिङ्गवत्वेन रूपेण दृष्ट्युपदेशात् उपासनोपदेशात् । असम्भवात् को न आत्मा किं ब्रह्मेत्युपक्रमोक्त-



ब्रह्मशब्दस्याग्नावसम्भवाच्च नासौ वैश्वानरः । अपि च मूर्धैव सुतेजा इत्यादिना छन्दोगा एनं वैश्वानरं पुरुषविधं शीर्ष्णो द्यौः समवर्ततेति पुरुषसूक्तोक्त-गुणवन्तमधीयते प्रतिपादयन्तीति सूत्रार्थः ।

मूर्धैवेत्यादिश्रुत्यर्थस्त्वस्मत्कृतभाष्यश्रुत्याद्यर्थरत्नावल्यां द्रष्टव्यः । नन्वग्न्यादिशब्दानां विष्णौ मुख्यत्वे तत्तत्सूक्तानां तत्तद्विद्यानां च वैदिकसिद्धव्यवस्थानुपपत्तिरिति चोद्यस्योत्तरमाह ॥ सूक्तादीति ॥ आदिपदेन विद्यादिपरिग्रहः । ब्रह्मण्यमुख्यस्यान्यत्र मुख्यस्य च शब्दस्याभावेनानन्य-गतिकतयाऽन्यत्रापि लोकाः प्रयुञ्जत इति वा अग्न्यादिसूक्तादिभिर्ब्रह्मोपा-सनयाऽग्न्यादावेव ब्रह्मणोऽभिव्यक्तिर्वा अग्न्यादिसूक्ताद्युपासकैरग्न्यादावेव ब्रह्मणोऽनुस्मरणीयत्वाद्वा तत्तत्सूक्तोपासकानामग्न्यादिस्थब्रह्मप्राप्तेर्वा तत्तत्सूक्तादि-व्यवस्था साक्षादप्यविरोधं जैमिनिरित्यादिचतुःसूत्र्या समर्थितेत्यर्थः ।

इति श्री एर्यनन्ताचार्यतनूजेन बालनाम्ना
विरचितायां न्यायविवरणटीकानिगूढार्थप्रबोधिन्यां
प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ।

# अथ तृतीयः पादः

## द्युभ्वाद्यधिकरणम् I-3-1

न्या.वि. — हरिः ॐ ॥ 'प्राणानां ग्रन्थिरसि । रुद्रो वै लोकायतनम् । वायुना वै गौतमसूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति । सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चा-लोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ति'' इत्यादेर्द्युभ्वाद्याय-तनत्वमज्ञानां साधारणं लिङ्गम् ॥ १ ॥

**टीका—** तृतीयेऽस्मिन्पादेऽनुव्याख्यायामधिकरणविषयाः सङ्गृह्योक्ताः ।

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विःस्थिता इह ॥ इति ।

तदिदं दुर्गमार्थं न्यायमालावाक्यविवरणप्रसङ्गेनादौ तावत्तद्विवृणोति । विषयावगतिपूर्वकत्वात्पूर्वोत्तरपक्षन्यायावगतेः । अत्र 'द्युभ्वाद्यायतनं स्वशब्दात्' इति प्रथमाधिकरणसाधारणं लिङ्गं विचार्यमित्युक्तम् । किं तल्लिङ्गं कुत्र च साधारणं कथं च साधारणम् । साधारणत्वे च कथं तस्य भगवदेकविषयतेत्यत आह ॥ प्राणानामिति ॥ अत्र 'यस्मिन्द्यौः' इत्यादिवाक्योक्तं च द्युभ्वाद्यायतनत्वलिङ्गं विचार्यम् । यद्यप्येतानि बहूनि लिङ्गानि । तथा च वक्ष्यति 'अत्रोक्तानां लिङ्गानाम्' इति । तथाप्येकवाक्योक्तत्वेनैकवचनम् । तच्च रुद्र-वायु-प्रकृति-जीव-विष्णूनां साधारणम् । 'प्राणानां रुद्रो वा'इत्यादिवाक्याद्रुद्रनिष्ठतया प्रतीतेः । ग्रथ्यन्तेऽस्मिन्निति ग्रन्थिः । 'वायुना'इत्यादिश्रुतेर्वायुनिष्ठत्वावगमात् । सूतमत्र सर्वं जगदिति सूत्रम् । सन्दब्धानि, संगतान्येव तदाधारतयाऽवस्थितानीत्यर्थः । 'सर्वे वा एते' इत्यादिश्रुतेर्विष्णुविषयत्वप्रदर्शनात् । प्राणाः इन्द्रियाणि । प्राणिनो देहिनः । प्राणिग्रहणेन गृहीतानामपि देवानां प्राधान्यज्ञापनाय पुनर्ग्रहणम् । दिवि भवानि दिव्यानि कल्पतरुप्रभृतीनि वस्तूनि । लोकाः भूरादयः । तदभिमानिनो लोकिनः । पूर्ववत् पुनर्ग्रहणम् । भूरादिभ्योऽन्ये वैकुण्ठादयोऽलोकाः । तद्गता मुक्ता अलोकिनः । 'ओताश्च प्रोताश्च' इति एतमाश्रिता इत्यर्थः । इत्यादेरित्यादिग्रहणेन प्रकृत्यादिनिष्ठत्वेऽपि प्रमाणमुदाहार्यमित्याचष्टे । तच्चान्यत्रोदाहृतम् । अज्ञानां न्यायानुसन्धानरहितानां मतेन । साधारणस्य कथं सिद्धान्तेऽसाधारणता साध्यत इति शङ्काऽनेन परिहृता । एवमुत्तरत्रापि ॥ १ ॥

**प्रबोधिनी—** ॥ आदौ तावदिति ॥ न्यायमालायाः पश्चाद्विवरणमभिप्रेत्यादावित्युक्तम् । तावच्छब्दो वाक्यालङ्कारे । आदौ विवरणे बीजमाह ॥ विषयावगतीत्यादिना ॥ पूर्वोत्तरपक्षावगतेर्विषयावगतिपूर्वकत्वात्तदर्थमादौ विवृणोतीत्यन्वयः । यद्यपि विषयमालाया आदौ विवरणे तस्या अनुव्याख्याने



आदौ कथनमेव बीजं वक्तव्यम् । तथापि तस्यास्तत्रादौ कथनेऽपि बीजस्यावश्यवक्तव्यतया तद्धेतोरिति न्यायेनैवमुक्तमिति बोध्यम् ॥ अत्रेति ॥ विषयमालायामित्यर्थः । द्युभ्वाद्यायतनं स्वशब्दादित्यत्रेति ॥ यस्मिन्द्यौरित्यादिश्रुतौ द्यावाभूम्यन्तरिक्षाद्याश्रयतयोक्तं ब्रह्मैव । न रुद्रादि । कुतः । तमेवैकं जानथ आत्मानमिति स्वशब्दपर्यायात्मशब्दश्रवणादिति सूत्रार्थः । इत्युक्तमिति ॥ अधिकरणक्रमानुरोधेनात्र विषयाभिधानादिति भावः । शङ्काचतुष्टयस्य मूलाभिप्रेतमुत्तरं क्रमाद्व्यनक्ति ॥ अत्रेत्यादिना ॥ अस्मिन्नधिकरण इत्यर्थः । एतानीति ॥ प्राणानां ग्रन्थिरसीत्यादिवाक्योक्तानीत्यर्थः । बहूनीति ॥ द्युभ्वाद्यायतनत्वान्तकत्वगजचर्मवसनत्वादीनीत्यर्थः । वक्ष्यतीति ॥ बाहुल्यं लिङ्गशब्दानामित्येतदधिकरणपूर्वपक्षन्यायविवरणावसर इत्यर्थः । रुद्रादिषु क्रमेण साधारण्यमुपपादयति ॥ प्राणानामित्यादिना ॥ प्रतीतेरित्यादिपञ्चम्यंतानां रुद्रस्य साधारणं वायोः साधारणमिति विश्लिष्यान्वयः । ग्रन्थिरिति ॥ कनिखष्यज्य-सिवसिवनिसनिधूनिग्रन्थिचलिभ्यश्चेतीप्रत्यय इति भावः । सूत्रमिति ॥ सिवेः ष्टन्प्रत्यये सिवि मुच्योष्टेरूजित्यूजागमः । अत्र पूर्वत्र च बहुलग्रहणादधिकरणे प्रत्यय इति भावः । सर्वं वाक्यं प्रायः सावधारणमित्यभिप्रेत्याह ॥ संदब्धान्येवेति । पुनर्ग्रहणमिति ॥ ब्राह्मणपरिव्राजकन्यायेनेति भावः । पूर्ववदिति देवपदेन गृहीतानामपि लोकिनां ब्राह्मणपरिव्राजकन्यायेन प्राधान्यज्ञापनाय पुनर्ग्रहणमिति भावः । अन्यत्रेति ॥ यद्भूतं भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेति बृहदारण्यकवाक्यं तत्वप्रकाशिकायामुदाहृतमित्यर्थः । आकाशे प्रकृताविति श्रुत्यर्थः ।

मतेनेति ॥ एतेन मूले अज्ञानामित्यनन्तरं मतेनेति शेषो बोध्य इत्युक्तं भवति । अनेनेति ॥ अज्ञानामित्यनेनेत्यर्थः । उत्तरत्रापीति ॥ भूमाद्यधिकरणेष्वपि साधारणानां भूमशब्दादीनां सिद्धान्ते कथमसाधारणता साध्यत इति शङ्का अज्ञानामित्यनेन परिहृता ज्ञेयेत्यर्थः ।

## भूमाधिकरणम् I-3-2

न्या.वि. — 'प्राणो वा आशाया भूयान्विष्णुर्वै देवेभ्यो भूयाँस्तस्माद्भूयान्नामे'त्यादेर्भूमशब्दोऽज्ञानां साधारणः ॥ २ ॥

**टीका—** 'शब्दौ' इत्यनेन द्वितीयतृतीययोरधिकरणयोर्नामात्मकौ साधारणौ शब्दौ विचार्यावित्युक्तम् । लिङ्गमिति पृथगुक्तम् । तेन शब्दस्य नामविषयत्वात् । साधारणमित्यस्य च यथान्वयं विपरिणामेन सर्वत्रानुवृत्तेः । अनुवृत्तिज्ञापनार्थ-मेवान्तेऽपि 'द्विःस्थिता' इत्याह । 'द्वी'त्यनेकोपलक्षणम् । 'विचार्या' इत्येतदपि यथान्वयं विपरिणम्यते । एवं स्थिते 'भूमा सम्प्रसादादध्युपदेशाद्' इत्यत्र तावत्पूर्ववच्छङ्काचतुष्टयनिरासार्थमाह ॥ प्राणो वा इति ॥ 'प्राणो वा आशाया भूयान्' इत्युपक्रम्य भूम्न आम्नानाद्भूमशब्दस्य प्राणविषयताप्रतीतेः । 'विष्णुर्वै' 'पूर्णमदः' इत्यादिश्रुत्यन्तरसमाख्यानाद्विष्णु-विषयताप्रतीतेश्च भूमशब्दोऽज्ञानां तयोः साधारणो विचार्यः । ननु भूमशब्दो भाववाची । तत्कथं धर्मिणोः शङ्क्यते । कथं च भूयानित्यनेन समानार्थः । कथं च नामात्मकः । मैवम् । 'यो वै भूमा तत्सुखम्' इत्याद्युत्तरवाक्यपर्यालोचनया भावभवित्रोरभेदाभिप्रायेण भवितृविषयतावगमात् । आसन्नस्योपक्रमस्यानासन्नायाः समाख्यायाश्च कथं साधारण्यप्रतीतिहेतुत्वमिति चेन्न । अज्ञानामित्युक्तत्वात् ॥ २ ॥

**प्रबोधिनी—** नन्वनुव्याख्याने विषयमालायां प्रत्यधिकरणं प्रातिस्विकरूपेण विषयानुक्तेर्भूमशब्दोऽज्ञानां साधारण इत्यादिवाक्यजातं कथं तस्या विवरणं भवेत् । वैरूप्यादित्यतो नैतद्विषयमालाविवरणपरमपि तु विषयमालया सिद्धप्रमेये शङ्काविशेषनिवारणाय प्रवृत्तम् । विषयमालाविवरणं तु मूले पूरणीय-मित्यभिप्रेत्याह । शब्दावित्यनेनेत्यादिना ॥ ननु नामलिङ्गसाधारणस्येह शब्दशब्दस्य कथं नाममात्रग्राहकत्वम् । कथं च साधारणावित्यश्रुतस्यानुवाद इत्यतस्तद्बीजमाह । तेनेति ॥ लिङ्गस्य पृथग्वचनेनेत्यर्थः । नामविषयत्वादिति ॥ अन्यथा तस्य पृथग्वचनवैयर्थ्यापत्तेरिति भावः । यथान्वयमित्यादि ॥ एतच्चानुपदं स्फुटीभविष्यति । तथा च नाश्रुतानुवाद इति भावः ।

ननु रुद्रादिबहुव्यक्तिसाधारणस्य लिङ्गस्य कथं द्विःस्थितत्वोक्तिरित्यत आह ॥ द्वीतीति ॥ विपरिणम्यत इति ॥ लिङ्गं साधारणं विचार्यम् । शब्दौ नामात्मकौ । एवमग्रेऽपि । साधारणौ विचार्यौ । स्थानं साधारणं विचार्यम् । लिङ्गं साधारणमिति प्राग्वत् । अनुग्रहः साधारणो विचार्यः । पुनः अनन्तरं



शब्दा द्विःस्थिताः साधारणा विचार्याः । लिङ्गशब्दौ साधारणौ विचार्याविति विपरिणम्यानुवृत्तिर्ज्ञेया । तथा च मूले साधारणं लिङ्गमित्यनन्तरं प्राणो वा इत्यतः प्राक् शब्दावित्यनेन द्वितीयतृतीययोरित्यारभ्य यथान्वयं विपरिणम्यत इत्यंतस्य वाक्यजातस्य शेषः पूरणीयः इति भावः । यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यं वेति सतां नीतिरिति स्मृतेः ॥ छ ॥

उत्तरग्रन्थमुत्थापयति । एवं स्थित इत्यादिना ॥ भूमा सम्प्रसादादध्युप-देशादित्यत्रेति ॥ यो वै भूमा तत्सुखमिति श्रुत्युक्तो भूमा विष्णुरेव । न तु वायुः । कुतः । सम्प्रसादात् । सम्यक् प्रसीदत्यनेनेति सम्प्रसादः पूर्णसुखम् । तदभिधानात् । अध्युपदेशात् । अधि उपरि नामादिसर्वोत्तमत्वेनोपदेशाच्चेति सूत्रार्थः । पूर्ववदिति ॥ किं तन्नाम । कुत्र साधारणम् । साधारण्ये च को हेतुः । साधारण्ये च कथं तस्य सिद्धान्ते भगवद्विषयतोच्यत इति शङ्काचतुष्टय-निरासार्थमित्यर्थः । प्राणो वा इति ॥ आशायास्तन्नाम्न्याः सरस्वत्याः प्राणो वायुर्भूयान् उत्तमः वै प्रसिद्धमिति श्रुत्यर्थः । भूम्नः आम्नानादिति ॥ यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखमिति छन्दोगश्रुतौ पाठादित्यर्थः । भूमाभिधस्य श्रीनारायणस्य लक्षणकथनाय प्रवृत्तेयं श्रुतिः । यो वै भूमा पूर्णो नारायणाख्यस्तत्सुखं अनन्याधीनसुखरूपम् । अस्य लक्षणस्यातिव्याप्तिं निराचष्टे । नाल्प इति ॥ भूमप्रसादं विना नाल्पे मुक्तजाते सुखमस्ति । ततः किमित्यत आह । भूमै वेति ॥ तस्माद्भूमैवानन्याधीनसुखरूपमिति श्रुत्यर्थः । मूले आदिपदोपात्तां श्रुतिमुदाहरति । पूर्णमद इत्यादीति ॥ अदो मूलरूपं पूर्णं इदमवताररूपं च पूर्णम् । तत्पूर्णं सृष्टिकाले पूर्णान्मूलरूपादुदच्यते उद्रिच्यत इति श्रुत्यर्थः । तयोरिति ॥ प्राणविष्ण्वोरित्यर्थः । भाववाचीति ॥ बहुशब्दात् पृथ्व्यादिभ्य इमनिज्वेति सूत्रेण भाव इमनिच् प्रत्यये बहोर्लोपो भू च बहोरितीमनिचो लोपे बहुशब्दस्य भूरित्यादेशे च भूमन् शब्दनिष्पत्तेरिति भावः । धर्मिणोरिति ॥ साधारण्येन प्राणविषयतयेति शेषः । समानार्थ इति ॥ भूयःशब्दस्य धर्मिवाचित्वाद्भूमन्शब्दस्य च धर्मवाचित्वात् कथं समानार्थ इति भावः ।

कथं चेति ॥ भूमन् शब्दस्य धर्मवाचकताया एव युक्तत्वादिति भावः । इत्यादीति ॥ आदिपदेन यो वै भूमा तदमृतम् । स एवाधस्तात्स उपरिष्टादित्यादिवाक्यपरिग्रहः । भावभवित्रोरिति ॥ धर्मधर्मिणोरित्यर्थः । अवगमादिति ॥ भूमन् शब्दस्येति शेषः । उपलक्षणमेतत् । अव्युत्पन्न एवायमखण्डः शब्दो धर्मिपर इत्यपि ज्ञेयम् । तदुक्तं चन्द्रिकायाम् । पूर्वपक्षेऽपि च धर्मिपरत्वात् टीकानुव्याख्यानयोश्च नामत्वोक्त्या धर्मिणि रूढेरभिप्रेतत्वात् व्याकरणस्य च साधुत्वान्वाख्यानपरत्वात् भूमशब्दस्य विपुलधर्मिपरतैव न त्वनेकपरता न वाऽनेकत्ववैपुल्यरूपधर्मपरतेति । चन्द्रिकाप्रकाशे श्रीराघवेन्द्रतीर्थीये च । रूढेरिति ॥ तथा चाव्युत्पन्नएवायमखण्डः शब्दः इत्युक्तं भवति । तर्हि पाणिनीयव्युत्पादस्य का गतिरित्यत आह । व्याकरणस्य चेति ॥ यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिरित्युक्तेः स्वरसंस्कारमात्रार्थत्वाचेत्यपि ध्येयमिति । अनासन्नाया इति । समाख्याश्रुतेः स्थलान्तरस्थत्वादिति भावः । अज्ञानामितीति ॥ उपक्रमसमाख्ययोर्बलाबलज्ञानविधुराणामित्यर्थः ॥ छ ॥

## अक्षराधिकरणम् I-3-3

**न्या.वि.— विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारणः ॥ ३ ॥**

टीका— 'अक्षरमम्बरान्तधृतेः' इत्यत्रेदानीमुक्ताशङ्कानिरासार्थमाह ॥ विष्णोरिति ॥ 'अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वाद्' इत्यत्रोपस्कर्तव्यम् । उपलक्षणं चैतत् । अक्षरशब्दस्य तत्र प्रसिद्धत्वादित्यपि द्रष्टव्यम् । नन्वचेतनप्रकृतौ वर्णेषु च कुतो न शङ्का परिहृता । परिहृतमेव तद्भाष्यकृता 'अदृष्टं द्रष्टृ'इत्यादिविषयवाक्यमुदाहरतैव । न चाचेतनप्रकृतौ द्रष्टृत्वादिकं सम्भवति । न च वर्णेष्वदृष्टत्वादिकमपीति ॥ ३ ॥

प्रबोधिनी— अक्षरमम्बरान्तधृतेरित्यत्रेति । एतस्मिन् खल्वक्षरे गार्गीति वाजसनेयश्रुत्युक्तमक्षरं ब्रह्मैव । न तु चेतनप्रकृतिः । कुतः । अम्बरान्तधृतेः ।



अम्बरमाकाशशब्दितं श्रीतत्वमन्ते यस्य सर्वस्य जगतस्तत्तथोक्तम् । तस्य धृतेः धारणाभिधानादिति सूत्रार्थः । उक्तशङ्कानिरासार्थमिति ॥ प्रागुक्तदिशा शङ्काचतुष्टयनिरासार्थमित्यर्थः । नन्वविनाशित्वसाम्यादक्षरशब्दः साधारणः इत्युक्तमयुक्तम् । अविनाशित्वस्य साम्येऽप्यक्षरशब्दस्य साधारण्ये बीजाभावादित्यत आह ॥ अविनाशित्वस्येति । नन्वविनाशित्व-प्रवृत्तिनिमित्तकत्वेनाक्षरशब्दस्य यौगिकत्वमङ्गीकृतं स्यात् । इष्टापत्तौ चोक्तयोगस्य गगनसाधारण्येन तेषामप्यत्र संशयकोटिताप्रसङ्ग इत्यत आह । उपलक्षणं चैतदिति ॥ तत्रेति ॥ विष्णौ श्रीतत्वे चेत्यर्थः । अयमाशयः । पङ्कजादिशब्द-वदक्षरशब्दस्य योगरूढतांगीकारात्तत्र रूढ्यंशस्य विष्णौ श्रीतत्वे चाक्षरत्रय-मीरितमित्यद्वयत्वनयभाष्योदाहृतस्मृत्यैव सिद्धेर्योगांशस्योक्तोभयसाधारण्यमिति न गगनादेः संशयकोटिताप्रसङ्ग इति । अभ्युपगम्य चेदमुदितम् । अत्राक्षरशब्दप्रवृत्तिनिमित्तस्याविनाशित्वस्य ''लक्ष्मीरक्षरदेहत्वादक्षरा'' इति तत्त्वनिर्णयद्वितीयपरिच्छेदोदाहृतस्मृत्युक्तदिशा शरीर क्षरणवैधुर्यरूपत्वविवक्षणेन तत्प्रवृत्तिनिमित्तकस्याक्षरशब्दस्य केवलयौगिकस्यैव विष्णुश्रीतत्वमात्रसाधारण्ये बाधकाभावादिति ज्ञेयम् ।

ननु यौगिकस्य रूढस्य वाऽक्षरशब्दस्य जडप्रकृतौ वर्णेषु च साधारण्यात् कुतो न तेषां संशयकोटितेत्याशङ्कते ॥ नन्विति ॥ उत्तरयति ॥ परिहृतमिति ॥ अदृष्टं द्रष्ट्रित्यादिकमिति । तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातमिति बृहदारण्यकवाक्यमित्यर्थः । हे गार्गीति याज्ञवल्क्यस्य स्वभार्यां प्रति सम्बोधनम् । तदेतदक्षरशब्दवाच्यं ब्रह्म । अदृष्टं अन्यैः साकल्येन न दृष्टम् । स्वयं तु द्रष्ट्रिति । एवमग्रेऽपि श्रुतियोजना ॥ छ ॥

## सदधिकरणम् I-3-4

**न्या.वि. — कारणत्वसाम्याद्विष्णोः प्रकृतेश्च, 'सदेव सोम्येदमग्र आसीत्' इत्यादिसृष्टिस्थानं साधारणम् ॥ ४ ॥**

टीका — 'ईक्षतिकर्मव्यपदेशात्सः' इत्यत्र साधारणं स्थानं विचार्य-मित्युक्तम् । तत्पूर्ववद्विवृणोति ॥ कारणत्वेति ॥ 'सदेव सोम्येत्यादिसृष्टिस्थान'

मिति 'सदेव सोम्य'इत्यादिना प्रतिपादितं सृष्टचर्थं प्रलयेऽवस्थानमिति वर्णयन्ति। एवं तर्हि विषयमालायां लिङ्गमित्येव वक्तव्यम् । सत्यम् । विशेषतः तदेव प्रदर्शितमित्यदोषः । अपरे तु 'सदेव सोम्य'इत्यादिकं सृष्टिस्थानं सृष्टिकारणविषयः प्रकरणसमुदाय इत्याचक्षते । एवं तर्हि तत्रान्यत्र प्रसिद्धानां लिङ्गानां नाम्नामिति विषयोक्तिविरोधः । मैवम् । स्थानमिति स्थानेऽनुवर्तमानस्य सन्नाम्नो विवक्षितत्वात् । तथा च संक्षेपे– 'सोऽक्षरः सन् हृदब्जगः' इति । 'सतः स्रष्टृत्व'इत्यादिभाष्ये च सन्नामविचारे महान् प्रकरणसन्दर्भो विचारित इति ज्ञापनाय सृष्टिस्थानमित्युक्तम् । साधारण्यप्रतिपत्त्यर्थं च । कारणत्वसाम्यात्स शब्दः साधारण इत्युक्ते निराकाङ्क्षत्वाभावात् । एवं ह्युच्यमानेऽयमर्थः सम्पद्यते । यद्यपि निमित्तत्वमुपादानत्वं च विलक्षणं तथापि कारणत्वमात्रं विष्णोरचेतनप्रकृतेश्च समम् । महदादीनां कारणत्वेऽपि न सर्वकारणत्वम् । कारणत्वं चात्र स्थाने सतः प्रतीयते । 'तदैक्षत'इति प्रकृतौ विरुद्धमिति चेत् 'बहु स्याम्'इति विष्णोरपि साम्यमेवेति ॥ ४ ॥

**प्रबोधिनी** — ईक्षतिकर्मव्यपदेशात्स इत्यत्रेति ॥ सदेव सोम्येदमित्यत्र श्रुतं सत् ब्रह्मैव न तु जडप्रकृतिः । कुतः । ईक्षतिरूपं च तत् कर्म व्यापारश्च तस्य व्यपदेशात् । तदैक्षतेतीक्षणाख्यव्यापारोक्तेरिति सूत्रार्थः । अत्र तदित्यनुवर्तमाने तदर्थे ब्रह्मणि पुंस्त्वज्ञापनाय स इति पुल्लिङ्ग प्रयोगः । तेन च श्रीतत्वस्य सन्नामार्थतापोढा । तथा हि । अत्रोक्तजगत्कारणत्वस्योपादानत्वरूपस्य निर्विकारे श्रीतत्वेऽसम्भवान्निमित्तत्वस्यैव वाच्यतया तस्य च केवलाभ्यः स्त्रीभ्य उत्पत्तेः क्वाप्यदर्शनेन श्रीतत्वेऽसम्भवात् । सम्भवति च तद्भगवति परमपुरुषे हरौ । केवलेभ्यो भरद्वाजादिभ्यो द्रोणाद्युत्पत्तिदर्शनादित्यभिनवचन्द्रिकाकृतः । विशेषस्तु चन्द्रिकायां द्रष्टव्यः । सदेवेति ॥ हे सोम्य सोमपानार्ह श्वेतकेतो! इदमग्रे अस्य जगतोऽग्रे इति श्रुत्यर्थः । स्थानमिति ॥ स्थानपदार्थस्त्वनुपदमेव द्वेधा स्फुटीभविष्यति । सृष्टचर्थं प्रलयेऽवस्थानमिति ॥ तथा चात्रपक्षे सृष्टचर्थं प्रलयेऽवस्थानरूपं लिङ्गं समन्वीयत इति भावः ॥ इत्येवेति ॥ न तु स्थानमिति वक्तव्यमित्यवधारणाशयः । विशेषतस्तदेवेति ॥ तदेव लिङ्गमेव विशेषतः अवस्थितित्वेन स्थानपदेनेह प्रदर्शितमित्यर्थः । अत्रैवानुपदमनुग्रह इत्यत्रैवेति



भावः । प्रकरणसमुदाय इति ॥ तदुक्तं तत्वप्रकाशिकायां वामनाधिकरणे । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानमिति । यथा विष्णौ तात्पर्ययुक्ता अनेकार्थप्रतिपादिका षट्प्रश्नोपनिषत् । अत्र प्रकरणव्यावृत्तये अनेकप्रमेय-प्रतिपादकमिति । विरुद्धार्थयोर्मिलितयोः शास्त्रयोः स्थानत्वव्यावृत्तये एकार्थे तात्पर्ययुक्तमित्युक्तं ज्ञेयम् । तदुक्तमन्यत्र 'एकस्य प्रतिपत्यङ्गं वचनं स्थानमुच्यते' इति । विषयोक्तिविरोध इति ॥ प्रतिपाद्योक्तिविरोध इत्यर्थः ॥ तत्र स्थानस्यानभिधानादिति भावः । विवक्षितत्वादिति । लक्षणयेति भावः । स्थाने अनुवर्तमानेति लक्षणबीजं शक्यसम्बन्धमाह । इत्यादिभाष्ये चेति ॥ आदिपदेन तच्च सदिति भाष्यग्रहणम् । उक्तमिति शेषः । स्वायत्तन्यायातिक्रमणकारणमाह । सन्नामविचारे चेत्यादिना ॥

महान्प्रकरणसन्दर्भ इति ॥ सदेव सोम्येदमग्र आसीत् । आत्मा वा इदमेक एवात्रासीत् । स ईक्षांचक्रे सोऽकामयतेत्यादिरित्यर्थः । तथा च प्रयोजन-वशाल्लाक्षणिकप्रयोग इति भावः । विचारित इति ज्ञापनायेत्युक्तं व्यनक्ति ॥ कारणत्वसाम्यादिति ॥ निराकांक्षत्वाभावादिति ॥ कुत्रत्यः सच्छब्द इत्याकाङ्क्षोदयेन वाक्यस्यापर्यवसानादिति भावः । निराकाङ्क्षत्वं स्फुटमेवेति न तत्रोपपादनापेक्षेत्यभिप्रेत्य साधारण्यप्रतिपत्त्यर्थं चेत्युक्तमुपपादयति । एवं ह्युच्यमान इत्यादिना ॥ सदेव सोम्येदमित्यस्योदाहरणनिवर्त्यं चोद्यमाशङ्क्य समाधत्ते । यद्यपीत्यादिना ॥ विलक्षणमिति ॥ अत्र स्थाने तदैक्षत । तत्तेजोऽसृजतेत्यत्र प्रतीतस्येक्षापूर्वकस्रष्टृत्वरूपकारणत्वस्य चेतनमात्रासाधारणधर्मत्वात् बहुस्यामित्यत्र प्रतीतस्योपादानत्वस्याचेतनमात्रासाधारणधर्मत्वादिति भावः । कारणत्वमात्रमिति ॥ नियतपूर्वसत्वरूपमित्यर्थः । ननु कारणत्वमात्रस्य महत्तत्वादिसाधारण्यात् कुतो न तेषां संशयकोटितेत्याशङ्क्य परिहरति ॥ महदादीनामित्यादिना ॥ सर्वकारणमित्यतः प्रागेकव्यक्तित्वे सतीत्युपस्कर्तव्यम् । तेन नादृष्टेषु संशयकोटिताशङ्कावकाशः । अत्र स्थान इति । सदेव सोम्येदमग्र आसीदित्यादिप्रकरणसमुदाय इत्यर्थः ।

साम्यमेवेति ॥ उदाहृतवाक्यद्वयप्रतीतयोः स्रष्टृत्वविकारयोर- विरोधायान्यतरानुरोधेनान्यस्य नेयतया सदेवेति वाक्यप्रतीतस्य नियतपूर्वसत्वरूपकारणत्वमात्रस्य निश्चयात्तद्विशेषस्य चानिश्चयात्तस्य साधारण्यमेवेत्यर्थः । एतेन मूले साधारण्यमित्यतः प्रागज्ञानामिति योजनीयमित्यभिप्रेति । उक्तं च चन्द्रिकायाम् । एवं च भूमाधिकरणीयन्यायविवरणस्थमज्ञपदमिहापि न्यायविवरणेऽनुषंजनीयमिति । नन्वत्र विषयमालास्थस्थानपदस्योक्तार्थद्वये कोऽर्थोऽवधृत इति चेत् यथायथमर्थद्वयमपीति ब्रूमः ।

**स्थितं मतद्वयं भाष्यकृत्पादहृदयांबरे ।**
**जयतीर्थमुनिः प्राह शिष्याणां हितकाम्यया ॥ १ ॥**
**एके त्वित्येकमपरमपरे त्विति तत्र हि ।**
**शङ्क्यो न मतयोस्तस्माद्विरोधो न मनागपीति ॥ २ ॥**

## दहराधिकरणम् I-3-5

**न्या.वि. — लिङ्गं हृत्पद्मस्थितत्वं साधारणम् ॥ ५ ॥**

**टीका—** 'दहर उत्तरेभ्यः' इत्यत्र साधारणं लिङ्गं विचार्यमित्युक्तम् । तल्लेशतो विवृणोति ॥ लिङ्गमिति ॥ कुत्र कथं चेत्याद्याकाङ्क्षानिवारणमस्माभिरन्यत्र कृतमनुसन्धेयम् । इह विचार्यमिति सम्बन्धः ॥ ५ ॥

**प्रबोधिनी—** दहर उत्तरेभ्य इत्यत्रेति ॥ दहरे दहरं पुण्डरीकमित्यादिछन्दोगश्रुत्युक्तहृत्पद्मस्थितं ब्रह्मैव न त्वाकाशः । कुतः । उत्तरेभ्यः य आत्माऽपहतपाप्मेत्याद्युक्तापहतपाप्मत्वादितद्धर्मेभ्य इति सूत्रार्थः । अपहतपाप्मा दूरनिरस्तपापः । अविजिघत्सः बुभुक्षापीडारहितः । इत्याद्याकाङ्क्षेति ॥ आदिपदेन साधारण्ये च कथं तस्य भगवद्विषयतेत्याकाङ्क्षासङ्ग्रहः । अन्यत्रेति ॥ तत्त्वप्रकाशिकायामित्यर्थः । तदुक्तं तत्वप्रकाशिकायाम् । अत्र यो वेद निहितं गुहायाम् । तस्यां ते सुषिरं सूक्ष्मम् । हृदि त्वेष आत्मेति श्रुतिभिर्ब्रह्माकाशजीवेषु साधारणस्य हृत्पद्मस्थत्वलिङ्गस्य भगवति समन्वयप्रतिपादनादित्यादि । अत्रापि मूल अज्ञानामित्यनुषञ्जनीयं प्राग्वत् ।



## अनुकृत्यधिकरणम् I-3-6

**न्या.वि. — 'कथं नु तद्विजानीयाम्' इत्यानुकूल्येन ग्रहणं कस्येति विचार्यमनुग्रहः ॥ ६ ॥**

**टीका —** 'अनुकृतेस्तस्य च' इत्यत्रानुग्रहः साधारणो विचार्य इत्युक्तम् । तद्विवृणोति ॥ कथं न्विति ॥ इहानुग्रह इत्यनुवादेनानुकूल्येन ग्रहणमिति व्याख्यानम् । आनुकूल्येनाभिलषितज्ञानतया ग्रहणमुच्चारणं स्वीकरणं वा । तस्योदाहरणवाक्यस्थताप्रदर्शनाय कथं न्विति वाक्योदाहरणं ज्ञातव्यम् । तत्सर्वथा कथं नु केनोपायेन जानीयामहमिति प्रतीयमानानुकूल्येन ग्रहणमनुग्रहः इति सम्बन्धः । विचारप्रकारप्रदर्शनं 'कस्येति विचार्यम्'इति । कस्य किं विषयं, किं ज्ञानिसुखविषयमुत विष्णुविषयमित्यर्थः । अत्रापि लिङ्गमेव विचार्यम् । अनुग्रहणं तु तस्यैव विशेषतः प्रतिपत्त्यर्थम् । साधारण्यहेत्वादि स्वयमेवोहनीयमिति भावः ॥ ६ ॥

**प्रबोधिनी—** अनुकृतेस्तस्य चेत्यत्रेति ॥ कथं नु तद्विजानीयामित्यानुकूल्येन गृह्यमाणं ब्रह्मैव । न तु ज्ञानिसुखम् । कुतः । अनुकृतेः अनुभवात् । तमेव भान्तमनुभाति सर्वमिति सूर्यादीनां तदधीनप्रकाशश्रवणादिति यावत् । किं च तस्येति वाक्यप्रतीकग्रहणमेतत् । तस्य भासा सर्वमिदं विभातीति सर्वस्य तत्प्रकाश्यत्वोक्तेरिति सूत्रार्थः । सर्वं सूर्यादितेजोजातं भान्तं प्रकाशमानं तं भगवन्तमनुसृत्य भाति प्रकाशते । सर्वमिदं जगत् तस्य परमात्मनो भासा प्रकाशेन विभाति प्रकाशत इत्यर्थः । अभिलषितज्ञानतयेति ॥ अभिलषितं ज्ञानं यस्य तत्तथोक्तं तस्य भावः अभिलषितज्ञानता तयेत्यर्थः । ग्रहणपदस्य ज्ञानार्थत्वे ज्ञानस्य पुरुषगतस्यानुपदं वक्ष्यमाणोदाहरणवाक्यस्थत्वासम्भवात्तदानुगुण्येन ग्रहणपदं व्याख्याति ॥ उच्चारणमिति ॥ उच्चारणस्यापि साक्षाद्वाक्यविषयस्य कस्य किं विषयमिति वक्ष्यमाणमर्थविषयकत्वं न स्वरसमित्यरुचेर्ग्रहणपदं प्रकारान्तरेण व्याचष्टे ॥ स्वीकरणं वेति ॥ प्रतिपादनमित्यर्थः । नु इदानीम् । जानीयामिति प्रार्थने लिङ् । आनुकूल्येन ग्रहणमिति ॥ बुभुत्सिततयोच्चारणं बुभुत्सिततया प्रतिपादनं वेत्यर्थः ।

तदेतदभिप्रेत्योक्तं तत्वप्रकाशिकायाम् । आनुकूल्येन गृह्यमाणत्वं नाम कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वमिति ।

चन्द्रिकायां त्वेतट्टीकावाक्यं ज्ञानार्थं प्रार्थितत्वं च विजानीयामिति लिङा ज्ञानार्थं ज्ञेयस्य प्रार्थनाधीरित्यभिप्रेत्य वा कथं नु पुत्रं पश्येयं समागच्छति वा न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीरित्यभिप्रेत्य वेति द्रष्टव्यमिति विवृतम् । परमात्मैवानिर्देश्यसुखरूप इति सिद्धान्तभाष्यं तु फलितोक्तिपरमिति भावः ॥ ज्ञानिसुखविषयमिति ॥ यद्यपि सुखं न बुभुत्सिततयोच्चारणविषयस्तथा प्रतिपादनविषयो वा । तथापि परकीयस्य तस्य तथात्वमुपपन्नम् । अत एव ज्ञानिसुखस्यैवेह सन्देहकोटिता । न तु स्वसुखस्य । अत एव च तैत्तिरीयश्रुतावानंदतारतम्योक्तिरिति ज्ञेयम् । यद्यपीदमानुकूल्येन गृह्यमाणत्वं धर्मादिषु लोकतः प्रसिद्धं तथापि न तस्यान्यत्र प्रसिद्धता । न हि सा ब्रह्मणोऽन्यत्र यत्र क्वचन प्रसिद्धता । किं तु पूर्वपक्ष्यभिप्रेतेऽन्यत्र । उभयत्र प्रसिद्धता त्वस्यानुपदं स्फुटीभविष्यति । अनुग्रह इत्यनेन नाम्नो विचार्यत्वभ्रमं निवारयति । अत्रापीति ॥ न केवलं पूर्वाधिकरण इत्यपिशब्दः । तस्यैवेति ॥ लिङ्गस्य बुभुत्सिततयोच्चारणविषयत्वादिना ज्ञानार्थमेवानुग्रहग्रहणम् । पूर्वत्र स्थानग्रहणमिवेति भावः । साधारण्यहेत्वादीति । आदिपदेन कुत्र साधारण्यमित्यादिशङ्कानिराकरणग्रहणम् । स्वयमूहनीयमिति ॥ सुखशब्दवृत्तेर्भगवति ज्ञानिसुखे चानुकूल्येन गृह्यमाणत्वमज्ञानां साधारणं लिङ्गमित्यूहनीयमित्यर्थः । अत्र च कथं तद्विजानीयामिति प्रार्थनं ज्ञानिनस्तत्प्रार्थनस्य च तत्सुखमिवेश्वरोपि तं प्रति प्रियत्वाद्विषयः । परमं सुखमिति ॥ समभिव्याहृतसुखशब्दश्चोभयसाधारणः । ततश्चानुकूल्येन गृह्यमाणत्वमीश्वरज्ञानिसुखयोः साधारणमित्युपपादितं चन्द्रिकायाम् । अत्र प्रसङ्गात्किंचिदुच्यते । अदोऽधिकरणे गुणसूत्रम् । अपि स्मर्यत इति । अत्रेयमाशङ्का स्मर्यतेऽपीति वक्तव्यम् । लघु चैवं सति सूत्रं स्यादिति । अत्राभिनवचन्द्रिकाकृतः समाधिमभिदधुः । सत्यमुक्तमयमपिशब्दोऽन्ते प्रयोक्तव्य इति तथाप्यपिशब्दस्य समुच्चायकत्वात् स चान्त एव प्रयोक्तव्य इति न नियमः । आदावपि तस्य प्रयोगो युक्त इति द्योतनायैवमुक्तम् । अत एवाभियुक्तानामपि



च किं चेत्यादौ समुच्चयमभिधाय पश्चाद्दूषणाभिधानं दृश्यत इति । वयं तु ब्रूमः । अत्र पृथगकारोच्चारणमेतत्सूत्राभिप्रेतस्मृतिचोदित-ज्ञानविधेर्वैतत्सूत्राभिप्रेत-योर्भगवति तदितरत्र चानुकूल्येन गृह्यमाणत्वविधिनिषेधयोर्वाऽधिक्यबोधनाय । तदुक्तं कर्मनिर्णये ।

**अल्पाक्षरेण शक्येऽपि वक्तुं बह्वक्षरं यदि ।**
**उक्तस्याधिक्यमेवात्र निषेधे शेषतो भवेत् ॥**

इति । यदि प्रयुङ्क्ते तर्ह्याधिक्यमेव विवक्षितं ज्ञातव्यम् । न तु वैय्यर्थ्यम् । निषेधस्य पृथग्वचनात् । पूर्वं वक्तुं शक्ये । विधाविति शेषः । यद्वा शारीरश्चोभयेऽपि हि भेदेनैनमधीयते । अपि स्मर्यत इति चापि शब्दस्य मध्यादितया सृतः सूत्रकृद्विचित्रप्रयोगः पाणिनेरेङः पदान्तादतीति पूर्वरूपताविधायकसूत्रप्रणयनचातुरीशिक्षणाय । अन्यथोभयेऽपीत्यत्र पीत्यपि पदच्छेदो भावात् । एवं दर्शयति चाथो अपीत्यत्र पृथगपि प्रयोगः पाणिनेरोदितिसूत्रप्रणयनचातुरीशिक्षणाय । संभृतिद्युव्याप्त्यपि चात इत्यत्र संधिकरणं तु संज्ञापूर्वकविधेरनित्यतासूचनायेत्यादि तत्र तत्र द्रष्टव्यम् । ततश्च शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय इति स्मृतिसिद्धं सर्वसूत्राणामदःसूत्रमूलकत्वं स्फुटीकृतं भवति । अत्र विशेषो जिज्ञासाधिकरण-चन्द्रिकाटिप्पण्यां द्रष्टव्यः । अथवा अपि स्मर्यते । अपि सप्त अपि संराधन इति च तत्र तत्र सूत्रादौ भगवतः सूत्रकृतः स्वरूपतोऽर्थतश्चोत्तमस्य प्रणवांशस्याकारस्योच्चारणमसंनिहित- शिष्यशिक्षणायाचरितस्य मङ्गलस्य निबन्धनमवगमयति । तदुक्तं मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राण्यायुष्मत्पुरुषकाणि भवन्तीति । प्रतिसूत्रं ब्रह्मविद्यात्वेन श्रौतार्थ-वादाद्यमानस्योङ्कारस्य सत्त्वेऽपि तस्य सूत्रानवयवत्तयाऽकारस्य तत्र माङ्गलिकतया सूत्रावयवत्वेनादौ निवेशनमिति । अत एव महाभाष्ये भूवादयो धातव इत्यत्र यणादेशे भ्वादयः स्यादिति भूवादय इति निर्देशानुपपत्तिमाशङ्क्य भ्वादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यत इति वार्तिकेण मङ्गलार्थकत्वमुक्तम् । एवमेव तत्र तत्र सूत्राक्षराणां सार्थक्यमित्यलं प्रासङ्गिकविचारेण ॥ छ ॥

## वामनाधिकरणमारभ्य सुपुप्त्यधिकरणपर्यन्तम् I-3- 7-13

**न्या.वि. — पुनः शब्दाः 'ईशानो वज्रो ज्योतिराकाश इति। लिङ्गं स्वप्नादिदर्शनं कस्येति ॥ १३ ॥**

**टीका—** 'पुनः शब्दाः' इत्युत्तराधिकरणेषु नामात्मकानां शब्दानां साधारणानां विचार्यत्वमित्युक्तम् । तद्विवृणोति ॥ पुनरिति ॥ न केवलं भूराद्यधिकरणेषु पुनरुत्तरेष्वपि शब्दा विचार्या इत्यर्थः । तत्र 'शब्दादेव प्रमितः' इत्यत्रेशानशब्दः (७) 'कम्पनाद्' इत्यत्र 'वज्र' इति शब्दः, (१०) 'ज्योतिर्दर्शनाद्' इत्यत्र 'ज्योति'रिति शब्दः, (११) 'आकाशोऽर्थान्तरत्वादिव्यपदेशाद्' इत्यत्र 'आकाश' इति शब्दः (१२) इत्यर्थः । देवताधिकरणस्यापशूद्राधिकरणस्य च न समन्वयविषयत्वमिति ज्ञापनाय न तद्विषयौ दर्शितौ । पूर्वोत्तरपक्षन्यायानुक्तिरप्यत एव । वेदविद्याधिकारस्तु तत्र विषयो ज्ञातव्यः ॥ ॥ ८-९ ॥

'लिङ्गशब्दौ'इत्युत्तरयोरधिकरणयोर्विषयौ दर्शितौ । तत्र 'सुषुप्त्युत्क्रान्त्योर्भेदेन'इत्यत्र किं लिङ्गं विचार्यमित्यत आह ॥ लिङ्गमिति ॥ 'कस्येति' विचारप्रकारप्रदर्शनम् । 'किं जीवस्योत विष्णो'रिति विचार्यमिति शेषः ॥ ॥ १३ ॥

**प्रबोधिनी—** शब्दादेव प्रमित इत्यत्रेति । मध्ये वामनमासीनमित्यत्रोक्तईशानो विष्णुरेव प्रमितः । न वायुः । वामनमासीनमिति वामनशब्दश्रवणादिति सूत्रार्थः ।

**साधारण्येऽथ हेत्वादिशब्दादीनां क्रमादिह ।**
**बुभुत्सितानां सुज्ञप्त्यै वक्ष्ये टीकाकृदीरितम् ॥ १ ॥**

अत्र प्रेरकत्वसाम्याद्भगवति वायौ चेशानशब्दोऽज्ञानां साधारणो बोध्यः ॥

कम्पनादित्यत्रेति ॥ वज्रमुद्यतमिति श्रुत्युक्तवज्रो भगवानेव । न तु वासवहेतिः । कुतः । एजतीति जगच्चेष्टकत्वरूपकम्पनवाचनादिति सूत्रार्थः ।



अत्र लोकप्रसिद्धेर्मोक्षसाधनधीविषयत्वरूपभगवल्लिङ्गाच्चेन्द्रायुधे हरौ च वज्रशब्दोऽज्ञानां साधारणो ज्ञेयः ।

ज्योतिर्दर्शनादित्यत्रेति । हृद्यन्तर्ज्योतिरिति श्रुत्युक्तं ज्योतिर्विष्णुरेव न तु जीवः । कुतः । दर्शनात् । ज्योतिःश्रुतेर्विष्णुमात्रप्रतिपादिकाया विष्णुरेव ज्योतिर्विष्णुरेवात्मेत्यादिश्रुतेरिति सूत्रार्थः । अत्र ज्योतिरपरपर्यायज्ञानरूपत्वाद्धृदयाहितत्वाच्च जीवेशयोर्ज्योतिःशब्दोऽज्ञानां साधारण इति ध्येयम् ।

आकाशोऽर्थान्तरत्वादिव्यपदेशादित्यत्रेति । आकाशो वै नामेति छन्दोगश्रुत्युक्त आकाशो विष्णुरेव । न तु प्रसिद्धाकाशः । कुतः । ते यदन्तरा तद्ब्रह्मेति विष्णुमात्रनिष्ठनामरूपराहित्याख्यलिङ्व्यपदेशादिति सूत्रार्थः । अत्र प्रयोगवशाद्गगने भगवति चाकाशशब्दोऽज्ञानां साधारण इत्यवगन्तव्यम् । मूले देवताद्यधिकरणविषयानुक्तिबीजं व्यञ्जयंस्त्वयं तद्विषयमाह । देवताधिकरणस्येत्यादिना ॥ यद्यप्यत्र शब्दादेव प्रमित इत्यत्रेशानशब्द इत्यनन्तरमेवादौ वक्तव्यं क्रमप्राप्तत्वात् तथाऽपि शब्दशब्दव्याख्यानप्रकरणभङ्गभिया तदनन्तरमेवोक्तमिति मन्तव्यम् ॥ छ ॥

सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्रेति ॥ नोक्तरीत्या जीवेशयोरभेदो मन्तव्यः । प्राज्ञेनात्मना सम्परिष्वक्त इति सुप्तिप्रकरणे प्राज्ञेनात्मनान्वारूढ इत्युत्क्रान्तिप्रकरणे च जीवेशयोर्भेदेनैव व्यपदेशादिति सूत्रार्थः । अत्रासङ्गत्वलिङ्गाल्लोकप्रसिद्धेश्च स्वप्नादिदर्शनं जीवेशयोरज्ञानां साधारणं लिङ्गमिति बोद्धव्यम्। अत्रोक्तमभिनवचन्द्रिकायाम् । अत्र द्वे दर्शने । आकाशोऽर्थान्तरत्वादिव्यपदेशादित्यारभ्य द्विसूत्री एकमधिकरणमित्येकम् । सूत्रद्वयं पृथगधिकरणमित्यपरम् । द्वितीयमपि दर्शनं द्विविधम् । सूत्रद्वयस्य भिन्नार्थत्वेऽप्याद्येऽधिकरणे आकाशशब्दसमन्वयः । द्वितीये त्वसङ्गत्वलिङ्गसमन्वय इत्युक्तम् । अपरं त्वाद्ये अधिकरणे आकाशशब्दसमन्वयः । द्वितीये स्वप्नादिद्रष्टृत्वलिङ्गसमन्वय इति । तत्राद्यं सत्तर्कदीपावलीकृतो दर्शनम् । द्वितीयस्याद्यं तु तत्वप्रदीपकृतो दर्शनम् । द्वितीयस्य द्वितीयं तु टीकाकृतो जयतीर्थमुनेर्मतमिति । तथा च तत्र कारिकाः ।

विष्णोरर्थान्तरत्वं तु सूत्रेणानेन सिध्यति ।
तदिदं पूर्वशेषं स्यादसङ्गत्वमपि स्फुटम् ॥ १ ॥
सिद्धत्यनेन सूत्रेण ततोऽधिकरणं पृथक् ।
स्वप्नादिदर्शनं चापि सिध्यत्येवामुना स्फुटम् ।
इत्याशयेन सर्वं च सूचयामास भाष्यकृत् ।
इत्येतदखिलं टीकाकारा जानंत एवहि ।
बोधयामासुरेकैकं शिष्यबुद्धिविशुद्धये ॥ इति ।
तदुपपादनं तयोरविरोधप्रकारश्च तत्रैव द्रष्टव्यः ॥ छ ॥

## ब्राह्मणाधिकरणम् I-3-14

### न्या.वि.— शब्दो ब्राह्मण इति ॥ १४ ॥

**टीका—** 'पत्यादिशब्देभ्यः' इत्यत्र कश्शब्दो विचार्य इत्यत आह ॥ शब्द इति ॥ इतिशब्दोऽर्थाद्व्यवच्छिद्यस्वरूपे व्यवस्थापनाय ।

**प्रबोधिनी—** पत्यादिशब्देभ्य इत्यत्रेति । एष नित्यो महिमा ब्राह्मणस्येति वाजसनेयकश्रुत्युक्तो ब्राह्मणो विष्णुरेव न विरिंचः । कुतः । सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेतीति सर्वाधिपतित्वसर्वप्रेरकत्वश्रुतदृष्टविलक्षणत्वप्रतिपादकशब्दसद्भावादिति सूत्रार्थः । अत्र नित्यमहिमत्वलिङ्गादजश्रुतेश्च ब्राह्मणशब्दो विष्णुविरिंचयोरज्ञानां साधारण इति प्रतिपत्तव्यम् । व्यवस्थापनायेति ॥ अयं भावः । इतिशब्दो हि पदार्थवैपरीत्ये वर्तते । न वेति विभाषेति यथा शब्दप्रकरणे नवेतिशब्दयोर्विभाषासंज्ञायां वैपरीत्यवाचीतिशब्दः शब्दपरो व्यवस्थापयति तथेहाप्यर्थप्रकरणे श्रुत इतिशब्दो ब्राह्मणरूपादर्थात्साधारण्यं व्यवच्छिद्य ब्राह्मणशब्दस्वरूपे साधारण्यं व्यवस्थापयति । यत्र यस्य विपरीतार्थस्यान्वय योग्यता तस्य तत्र ग्राह्यत्वादिति । व्यक्तमेतत् ''तस्मादुपासनार्थं न स्वार्थे तात्पर्यवद्भवेत्'' इत्यनुव्याख्यानव्याख्यानसुधायाम् ॥ तावदिति ॥ पश्चात्सिद्धान्तन्यायविवरणाभिप्रायेण तावच्छब्दः ॥ छ ॥



एवं यथेच्छं समापितसन्न्यायविवृतिव्याख्यानो भगवांष्टीकाकारो जयतीर्थमुनिर्मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राण्यायुष्मत्पुरुषकाणि भवन्तीत्यभियुक्तोक्तिमनुसृत्यान्तेऽपि प्रतीकग्रहणव्याजेन द्यावाभूम्याश्रयस्य विष्णोः सङ्कीर्तनरूपं मङ्गलमाचरन् शिष्यशिक्षाया अन्ते निबध्नाति । यस्मिन् द्यौरितीति ॥ उक्तं हि तत्वसंख्यानटीकायाम् । अन्यपरमपि तद्वृत्त्याऽनुष्ठितं स्वभावात्संपादयत्येवाखिलमङ्गलानीति । ननु सन्न्यायविवृतिव्याख्यां करिष्यामीत्यादौ प्रतिज्ञाता सन्न्यायविवृतिव्याख्या कुतो न प्रणीतेति चेत् । अत्र ब्रूमः । मोच्चैर्वोचः । परोऽपि श्रोष्यतीति सन्न्यायविवृतिव्याख्यामिति व्याख्यानमात्रस्य प्रतिज्ञानेन तस्य च कृतत्वेनानुभवविरोधात् । यथामतीत्यनेनासमस्तव्याख्याप्रतिज्ञावगतेः । राज्ञां मत इत्यादि प्रयोगात्कचिन्मतिशब्दस्येच्छार्थताया अप्यवश्याभ्युपेयतयाऽत्र मतिशब्दस्येच्छार्थत्वात्तमनतिक्रम्य सन्न्यायविवृतिव्याख्यां करिष्यामीति विवरणात् । ततश्च समस्तव्याख्यानेच्छाया अभावान्न सा प्रणीतेति । अत एवास्माभिरवतरणग्रन्थे यथेच्छमित्युक्तम् । प्रथमद्वितीयचरणयोर्युक्तिमालाया अनुक्तेः कस्या एतद्विवरणमिति शिष्याणां मनःखेदो मा भूदिति प्रथमलक्षणस्य चरणद्वयं व्याख्याय तृतीयचरणे विषयमालाविवरणेन च व्याख्यानक्रमं प्रदर्श्य शिष्यमतिपरीक्षणाय चोत्तरग्रन्थं न व्याचक्रुरिति प्रतीमः । भगवतष्टीकाकृतो मङ्गलानुष्ठानादिकं त्विह·परमास्तिकत्वादनुमीयत इत्यशेषमतिमङ्गलम् ।

गुरुहृत्कन्दरावासमिन्दिरामन्दिरोरसम् ।
वन्दारुजनमन्दारं वन्दे श्रीनृहरिं मुदे ॥ १ ॥
नमोऽस्तु सूत्रांशमुनिप्रियाय निर्दोषसच्चित्सुखविग्रहाय ।
श्रीशाय वेदैकसुबोधिताय सिंहानननायार्यसुपूजिताय ॥ २ ॥
बालेन ग्रथिता भक्त्या न्यगलन्नृहरेर्मुदे ।
सन्न्यायविवृतेष्टीका निगूढार्थप्रबोधिनी ॥ ३ ॥
सन्न्यायविवृतेष्टीका निगूढाशयवर्णनात् ।
जनितं पुण्यमखिलमवाप्नोतु गुरुर्मम ॥ ४ ॥

शास्त्राध्यायादिसंप्रोक्तश्चतुर्मूर्तिरथापि वा ।
पञ्चमूर्तिः श्रीनृसिंहः प्रीणातु पुरुषोत्तमः ॥ ५ ॥

इति श्रीमदेरी अनन्ताचार्यपूज्यपादाराधकेन तत्तनूजेन बालनाम्ना विरचिता श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्यानसन्न्यायविवरणटीका निगूढार्थप्रबोधिनी सम्पूर्णा ॥ छ ॥

बालनाम्नाऽलेखि लक्ष्मीनृहरेः स्वकृतामुदे ।
सन्न्यायविवृतेष्टीका निगूढार्थप्रबोधिनी ॥

## द्युभ्वाद्यधिकरणम्-पूर्वपक्षन्यायनिरूपणम्

न्या.वि. — 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मन ओतं प्राणा ओताः' इत्यत्रोक्तानां लिङ्गानामन्यत्र रुद्रादिविषयत्वे, शब्दबाहुल्यम् । प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । प्राणेश्वरः कृत्तिवासाः पिनाकी मनो वै रुद्र ओतं च प्रोतं च रुद्रो वाव लोकाधार इत्यादिकं शब्दबाहुल्यम् ॥१॥

टीका — इहाधिकरणेषु क्रमेण पूर्वपक्षन्यायाः सङ्ग्रहेणोक्ताः ।
बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥
लिङ्गावकाशराहित्यभ्रमस्ताद्दृग्द्वयं तथा ।
बहुताद्दक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥
समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ॥ इति ।

तानि पदानि विवृण्वँस्तावत् 'बाहुल्यं लिङ्गशब्दानाम्' इति प्रथमाधिकरणपूर्वपक्षन्यायं विवृणोति ॥ यस्मिन् द्यौरिति ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितन्यायविवरणपञ्चिका जयतीर्थभिक्षुविरचिता समाप्ता ॥



## श्रीरघूत्तमतीर्थविरचितः भावबोधः

भावबोधः —

ॐ श्रीरामकृष्णवेदव्यासात्मकश्रीहयग्रीवाय नमः ॥
गुणादिसद्रत्नयुतं क्षयादिदोषोज्झितं वेदनदीभिराप्यम् ।
कृपापयस्कं हरिदुग्धवार्धिं श्रये स्वपादप्लवमुक्तगम्यम् ॥ १ ॥
सुशास्त्रप्रभया स्वस्य परेषां च प्रकाशकम् ।
भजतामिष्टदं व्यासचिन्तामणिमहं भजे ॥ २ ॥
वेदभेदविविधोरुसुशाखं बोधपूर्वकगुणाढ्यफलेतम् ।
आदरेण भजतां फलदं श्रीमोदतीर्थसुरभूरुहमीडे ॥ ३ ॥
सुगुणनरहरिश्रीमाधवाक्षोभ्यरूपान्
हरिभजननियुक्ताञ्छुद्धधर्मार्थकामान् ।
सुजननियमनार्थं यः प्रसाध्यापरोक्षम्
स भवतु मम भूत्यै पद्मनाभाख्ययोगी ॥ ४ ॥
तारकूर्मधृतसूत्रभूभृतावेष्टितेन पवनोक्तिभोगिना ।
(तारकूर्मधृतमध्वशुद्धगीर्भोगिवेष्टितसुसूत्रभूभृता)
यो विमथ्य निगमोदधेः सुधामाप तं जयमुनीन्द्रमाभजे ॥ ५ ॥
मध्वोक्तिद्युनदीजयार्यशुभवाक्सूर्यात्मजासङ्गमे
व्याख्यास्नानमहो विधाय नृहरेः प्राप्य प्रसादं परम् ।
प्रापुर्ये कृतकृत्यतां गतमला विद्याधिराजादयो
योगीशाः कृपयन्तु ते जयमुनेर्भावस्य बोधाय मे ॥ ६ ॥
वेदव्याससरोवरे समुदिते वेदोरुनालस्थिते
मध्वोक्तिश्रिय आलये विकसिते गोभिर्जयेनस्य तु ।
सद्वाक्यादिसुपत्रपूर्वकयुते गुर्वाशुगादर्शिते
सूत्राब्जे रघुनाथमुन्यलिवरं वन्दे सुपक्षान्वितम् ॥ ७ ॥
श्रीमध्वशास्त्रं समुदीर्य मेऽस्मिन् विश्वासहेतोः समदर्शयद्यः ।
प्रधानसूत्रप्रतिपाद्यमादौ वन्दे गुरुं तं रघुवर्यसंज्ञम् ॥ ८ ॥

**तत्त्वप्रकाशिकागूढं विचार्य गुरुणोदितम् ।**
**सन्न्यायविवृतेर्भावमुद्धरिष्ये यथामति ॥ ९ ॥**
**आद्याध्यायगते सार्धपूर्वपादद्वयेऽस्ति हि ।**
**पञ्चिका जयतीर्थीया तस्मात्त्यक्तं मयाऽत्र तत् ॥ १० ॥**

उभयत्र प्रसिद्धनामलिङ्गात्मकशब्दसमन्वयार्थमयं पादः प्रवृत्तः ।

एतत्पादीयाधिकरणानां सर्वेषामव्याख्यातत्वात् 'व्याख्यां करोम्यन्वपि' इति प्रतिज्ञा वन्ध्या स्यादिति पूर्वोत्तरपक्षयुक्तिकथनेनैव सर्वाधिकरणानां व्याख्याततां मन्यमानेन भगवता आचार्येण तत्पादीयाधिकरणपूर्वपक्षन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः । अत एव व्याख्यातसर्वाधिकरणेषु प्रथमाध्यायगताद्यद्वितीय, द्वितीयाध्यायद्वितीयपादेष्वधिकरणसम्बन्धिपूर्वपक्षसिद्धान्तन्यायानां सङ्ग्रहेणानुक्तिः । ननु तर्हि तादृशयुक्तिपादे कथमाप्ततेत्यादिना तदुक्तिः । अभ्युचयात् । यद्वा समस्तसूत्राणामव्याख्यातत्वात्तत्र तदुक्तिः । तर्हि कथं तादृशे लिङ्गपादे तदनुक्तिः । तत्रापि, 'एतद्भावाभिधम्'इत्यादिना विषयाणां कथितत्वात् । अत एवोक्तं सुधायाम्– 'अत्र न सर्वसूत्राणि व्याख्यातानि । ततः प्रतिज्ञा व्याहन्येतेत्यतो विषयादिकथनेन व्याख्याततां मन्वान' इति ।

**बाहुल्यं लिङ्गशब्दनामनुक्तिश्च विरुद्धता ।**
**अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥**
**लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।**
**बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥**
**समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ॥**

*इति पूर्वपक्षन्याया उक्ताः ॥*

ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ 'यस्मिन्द्यौः' इति वाक्योक्तं द्युभ्वाद्यायतनत्वं विष्णोर्वा रुद्रादेर्वेति तत्तत्प्रापकश्रुत्या सन्देहे रुद्रादेरेवेति पूर्वपक्षः विष्णोरेवेति सिद्धान्तः । तत्र 'बाहुल्यं लिङ्गशब्दानां' इत्युक्तन्यायं तावत्पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ 'यस्मिन्द्यौरित्यादिना ॥ इत्यत्र इत्यादिविषयवाक्ये । उक्तानां प्रतिपादितानां द्युपृथिव्याद्याश्रयत्वादिलिङ्गानां



रुद्रादिविषयत्वे । यद्वा उक्तानां प्रयुक्तानां लिङ्गानां लिङ्गप्रतिपादकशब्दानां रुद्रादिविषयत्वे साध्येऽन्यत्र प्राणानामित्युदाहरिष्यमाणश्रुत्यन्तरे. 'अन्तकः कृत्तिवासाः पिनाकी'इत्युक्तलिङ्गम् । तथा रुद्रादिशब्दबाहुल्यं हेतुरित्यर्थः । अन्यत्रेत्युक्तं श्रुत्यन्तरमुदाहरति ॥ प्राणानामिति ॥ शब्दबाहुल्यमिति लिङ्गबाहुल्यस्याप्युपलक्षणम् । यद्यप्यत्र श्रुतेः प्रकृति–रुद्र–वायुरूपपूर्वपक्षत्रये सत्वेऽपि जीवरूपपूर्वपक्षेऽभावात् , लिङ्गस्य तु पूर्वपक्षचतुष्टयेऽपि सद्भावात्, 'प्राधान्येन बाहुल्यं लिङ्गशब्दानाम्'इत्यत्र लिङ्गस्य प्रथमतो ग्रहणं कृतम् । तथापि लिङ्गापेक्षया श्रुतेः प्राबल्यात् श्रुतेः स्वशब्देनोपादानं कृतमिति ज्ञातव्यम् । अत्रादिशब्देन रुद्रादीत्यादिशब्दोक्तप्रकृत्यादेर्द्युभ्वाधारत्व-प्रतिपादकस्य वाक्यस्य ग्रहणम् । अयमर्थः । 'प्राणानां ग्रन्थिरसि' इत्यादिवाक्योक्तं प्राणाधारत्वं तावद्रुद्रादिनिष्ठम् । रुद्राद्यसाधारणान्तकत्वादिलिङ्गशब्दसमभिव्याहारात् । तथा च तत्समाख्यया 'यस्मिन्द्यौः' इत्यादिवाक्योक्तं द्युभ्वाधारत्वमपि रुद्रादिनिष्ठमेवेति ॥ १ ॥

## भूमाधिकरणम्

**न्या.वि.— प्राणो वा आशाया भूयानित्युक्त्वा प्राणाद्भूय-सोऽनुक्तिः ॥ २ ॥**

**भा.बो.** — ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ 'प्राणो वा आशाया भूयान्' इत्यत्रोक्तो भूमोपक्रमश्रुतिभ्यां किं मुख्यवायुरुत विष्णुरिति सन्देहे मुख्यवायुरिति पूर्वः पक्षः विष्णुरिति सिद्धान्तः । तत्रानुक्तिरित्युक्तन्यायं तावत्पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ प्राणो वा इत्यादिना ॥ ननु प्राणाद्भूयसोऽनुक्तिर्न प्राणस्य भूमत्वसाधिका । विद्यमानस्यापि प्राणादुत्तमस्य अनुक्तिसम्भवादित्यत उक्तं, प्राणो वा आशाया भूयानित्युक्त्वेति । ततश्च नामवागादितारतम्यमाशावसानमुक्त्वा 'प्राणो वा आशाया भूयान्'इति प्राणस्योत्तमत्वं चोक्त्वा तदुत्तमस्यान्यस्यानुक्तेराम्नातो भूमा मुख्यवायुरेवेति भावः। ॥ २ ॥

**न्या.वि. — अत्तेत्युक्त्वा, न तदश्नाति किञ्चनेति विरुद्धता । ॥ ३ ॥**

भा.बो. — ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ 'तद्वा एतदक्षरं गार्गी'इत्युक्तमक्षरमनाशित्वसाम्यात् किं चेतनप्रकृतिरुत विष्णुरिति सन्देहे चेतनप्रकृतिरेवेति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः । तत्र विरुद्धतेत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन तावद्विवृणोति ॥ अत्तेत्युक्त्वेति ॥ एतदक्षरस्य विष्णुत्वेऽस्यैवाक्षरस्य 'न तदश्नाति किञ्चन'इति उक्तानशनस्य 'विष्णोरत्ता चराचरग्रहणाद्' इत्युक्तेन सर्वात्तृत्वेन विरुद्धता स्यादित्यर्थः । एतद्विरुद्धता-समुचितस्यैवाक्षरशब्दप्रसिध्द्यादेः पूर्वपक्षसाधकत्वम् । केवलस्य तस्य विष्णावपि सम्भवात् । अतो विरुद्धतायाः पूर्वपक्षन्यायत्वमिति भावः ॥ ३ ॥

**न्या.वि. — 'बहु स्यां प्रजायेय' इत्यन्यस्यान्यभावा-दृष्टिः ॥ ४ ॥**

भा.बो. — ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ 'सदेव सोम्येदमग्र आसीत्'इत्यादि सृष्टिस्थानगतसच्छब्दवाच्यं कारणत्वसाम्यात्प्रधानमुत विष्णुरिति सन्देहे प्रधानमेवेति पूर्वः पक्षः । विष्णुरिति सिद्धान्तः । तत्रादृष्टिरित्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ बहु स्यामिति ॥ इति श्रुत्युक्तस्यान्यभावस्य, प्रपञ्चत्वेन भवनस्य, अन्यस्य ततोऽत्यन्तभिन्नत्वेन प्रमितस्य विष्णोरदृष्टिः दृष्ट्यभावः । दर्शनायोग्यत्वमेवेति यावत् । कुत इत्यतो यत इत्यध्याहारेण हेतुप्रतिपादकतयाऽप्यन्यस्यान्यभावादृष्टिरित्येतदेव योज्यम् ॥ यद्वाऽन्यस्य विकारिकारणादन्यस्य विष्णोः 'बहु स्यां प्रजायेय'इति श्रुत्युक्तस्यान्य-भावस्यान्यत्वेन परिणामस्यादृष्टिरित्यर्थः । अत एव विष्णुत्वपक्षासम्भवात्प्रधाने चोक्तदोषाभावात्प्रधानमेव सच्छब्दवाच्यमित्यर्थः ॥ ४ ॥

## दहराधिकरणम् I-3-5

**न्या.वि. — 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्त-दन्वेष्टव्यम्' इत्यनेन 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्यस्यान्वयाभावः ॥ ५ ॥**



भा.बो. — ॐ दहर उत्तरेभ्यः ॐ ॥ 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकम्'इत्यादिवाक्योक्तं हृत्पद्मस्थत्वं किमाकाशस्योत विष्णोरिति तत्प्रापकश्रुत्या सन्देहे आकाशस्यैवेति पूर्वः पक्षः । विष्णोरेवेति सिद्धान्तः । तत्रान्वयाभाव इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ दहर इति ॥ अयमर्थः । 'तस्मिन्यदन्तस्तत्'इत्यन्वेष्टव्यत्वादिनोक्तस्य दहराकाशस्थस्य विष्णुत्वेऽङ्गीक्रियमाणे 'तस्मिन्यदन्तः'इत्यनेनैतत्समानविषयकेण 'किं तदत्र विद्यते' इति वाक्येन 'ब्रह्म विद्यते' इति परिहारवाक्यं विना 'यावान्वा अयम्'इति वाक्यस्यान्वयाभाव इति । अत्र 'किं तदत्र विद्यते' इति प्रश्नवाक्येनेति वक्तव्ये 'तस्मिन्यदन्तः'इति तत्समानार्थवाक्योपादानं हृदयाकाशस्थत्वमन्वेष्टव्ये प्रदर्शयितुम् । 'तस्मिन्यदन्तः'इत्यनेन 'यावान्वा अयम्'इत्यस्यान्वयाभाव इत्येव वक्तव्ये 'दहरोऽस्मिन्नन्तर आकाशे' इति 'अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति चाधिकांशोदाहरणं तु पूर्वपक्षेऽन्वयाभावलक्षणदोषाभावप्रदर्शनार्थम् । तथा हि । 'दहरोऽस्मिन्नन्तर आकाश' इत्युक्ताकाशस्य सर्वाधारतया हृत्पद्मस्थत्वाङ्गीकारेऽस्त्यन्वयः । हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्र विद्यत इति प्रश्ने 'यावान्वा अयमाकाशः' इति प्रागुक्ताकाशमेव विशिष्य उभे अस्मिन्नित्यादिपरिहारसंश्लेषात् । तथा च विष्णुपक्षेऽन्वयासम्भवात् आकाशपक्षे तत्सम्भवादाकाश एव हृत्पद्मस्थ इति भावः ॥ ५ ॥

## अनुकृत्यधिकरणम् I-3-6

**न्या.वि. — 'तदेतदिति मन्यन्ते' 'कथं नु तद्विजानीयाम्' इति 'तेषां सुखं शाश्वतम्' इत्युक्तज्ञानिसुखग्रहणमिति विपरीत-श्रुतिभ्रमः ॥ ६ ॥**

भा.बो.— ॐ अनुकृतेस्तस्य च ॐ ॥ 'कथं नु तद्विजानीयाम्'इति श्रुत्युक्तमानुकूल्येन गृह्यमाणत्वं सुखशब्दसाम्यात् किं ज्ञानिसुखस्योत विष्णोरिति सन्देहे ज्ञानिसुखस्यैवेति पूर्वः पक्षः । विष्णोरेवेति सिद्धान्तः । तत्र 'विपरीतश्रुतिभ्रमः' इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ तदिति ॥

'तदेतदिति मन्यन्तेऽनिर्देश्यपरमं सुखम्'इत्यत्र तदेतच्छब्दाभ्यां 'कथं नु तद्विजानीयाम्'इत्यत्र तच्छब्देन च

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।

तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

इत्युक्तज्ञानिसुखस्यैव ग्रहणं परामर्शः । न तु 'एको वशी'इत्यादि प्रकृतात्मपरामर्शः । ज्ञानिसुखस्य नपुंसकलिङ्गसुखशब्देन प्रकृतस्य 'तदेतत्'इत्यनेन सुखशब्दसमानाधिकृतेन 'तदेतत्' इति वाक्यसमानविषयक कथं नु तद्विजानीयामिति वाक्यगततच्छब्देन च परामर्श उपपद्यते । न त्वतथाविधस्य परमात्मन इति विपरीतश्रुतिभ्रम इत्यर्थः । एवं च नित्यो नित्यानामित्यादिविष्णुप्रस्तावकवाक्यगतपुल्लिङ्गनित्य इत्यादि श्रुत्यपेक्षया । 'तदेतदिति मन्यन्तेऽनिर्देश्यम्'इत्यादिवाक्यगत 'तदेतत्सुखम्' इत्यादिश्रुतेर्नपुंसकलिङ्गत्वादिना वैपरीत्यात्तद्वाक्यगततच्छब्दादिना न विष्णुपरामर्शः । किंतु 'तेषां सुखं शाश्वतम्'इति ज्ञानिसुखप्रस्तावकसुखश्रुतेर्वैपरीत्याभावात्तद्वाक्योक्तज्ञानिसुखस्यैव परामर्श इति विपरीतश्रुतिरेव पूर्वपक्षयुक्तिः । पूर्वपक्ष्यभिप्रायस्य भ्रमत्वादुभयत्र भ्रमपदप्रयोगः । (अयं च न्यायः, स्वपक्षसाधकहेतोः परपक्षप्रतिक्षेपेऽपि व्यापारात्, अप्राप्तस्य च प्रतिक्षेपाऽयोगात्, प्राप्तेश्च पुल्लिङ्गापेक्षया विपरीतनपुंसकसुखश्रुतिमूलत्वमिति सूचनेन सूचितः । अत एवोक्तं भाष्ये– 'न च ज्ञानिसुखमनुभाति सर्वम् । न च तद्भासा' इति) ॥ ६ ॥

## वामनाधिकरणम् I-3-7

**न्या.वि.— 'ऊर्ध्वं प्राणमुन्नयति' इत्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यमिति भ्रमः । 'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते' इत्यादिवाक्याद्भ्रमः ॥ ७ ॥**

भा.बो. — ॐ शब्दादेव प्रमितः ॐ ॥ 'ईशानो भूतभव्यस्य'इति श्रुत्युक्तईशानः किं मुख्यवायुरुत विष्णुरिति प्रेरकत्वसाम्येन सन्देहे मुख्यवायुरेवेति पूर्वपक्षः । विष्णुरेवेति सिद्धान्तः । तत्र 'लिङ्गावकाशराहित्यभ्रमः' इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ ऊर्ध्वमिति ॥ 'ईशानो भूतभव्यस्य' इति विषयवाक्यशेषरूपोर्ध्वं प्राणमुन्नयतीत्यादिवाक्योक्तानां प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वानां मुख्यप्राणादन्यत्र विष्णाववकाशराहित्यमिति भ्रम इत्यर्थः ॥ अस्मिन् भ्रमे किं कारणमित्यत आह ॥ एवमिति ॥ आदिपदेन 'योऽयं मध्यमः प्राणः,' 'कुविदङ्ग'इति वाक्यद्वयस्य ग्रहणम् । ततश्च मुख्यप्राणादन्यत्रावकाशरहितप्राणव्यवस्थापकत्वादिलिङ्गसमुदायादीशानो मुख्यवायुरेवेति । अत्रापि लिङ्गावकाशराहित्यमेव युक्तिः । भ्रमपदप्रयोगः पूर्ववदेव । (अयं च न्यायः शब्दादेवेत्येवकारेण स्वभावतः प्रबलश्रुत्यपेक्षया लिङ्गानां दुर्बलत्वोक्त्या सूचितो भवति) ॥ ७ ॥



## कम्पनाधिकरणम् I-3-10

**न्या.वि.— वज्रशब्द उद्यतत्वलिङ्गं च तादृग्द्वयम् ॥ १० ॥**

भा.बो.— ॐ कम्पनात् ॐ ॥ 'महद्भयं वज्रम्'इति श्रुत्युक्तं वज्रं किमिन्द्रायुधमुत विष्णुरिति प्रसिद्धिलिङ्गाभ्यां सन्देहे इन्द्रायुधमेवेति पूर्वः पक्षः विष्णुरेवेति सिद्धान्तः । तत्र तादृग्द्वयमित्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ वज्रशब्द इति ॥ लिङ्गं चेत्यतः परमिति शब्दोऽध्याहार्यः । वज्रशब्दोद्यतत्वलिङ्गयोस्तादृक्त्वं नाम इन्द्रायुधादन्यत्र परमात्मन्यवकाशराहित्यमिति ज्ञातव्यम् । अत्र श्रुतिलिङ्गयोर्वैजात्याद् द्वयमित्युक्तम् । ततश्चेन्द्रायुधादन्यत्रावकाशरहितश्रुतिलिङ्गाभ्यां वज्रशब्दवाच्यमिन्द्रायुधमेवेति भावः । (अयं च न्यायो निरवकाशसर्वजगच्चेष्टकत्वलिङ्गोक्त्या वज्रशब्दस्योद्यतत्वलिङ्गस्य च सावकाशत्वोक्त्या सूचितो भवति) ॥ १० ॥

## ज्योतिरधिकरणम् I-3-11

**न्या.वि. — आदित्यादिज्योतिष्ट्व-मुभयलोकसञ्चरणं 'आदित्येनैवायं ज्योतिषाऽस्ते' इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुतादृक्त्वम् ॥ ११ ॥**

**भा.बो.**— ॐ ज्योतिर्दर्शनात् ॐ ॥ 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इति वाक्योक्तं ज्योतिः किं जीव उत विष्णुरिति ज्ञानरूपत्वसाम्येन सन्देहे जीव एवेति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः । तत्र 'बहुतादृत्त्वम्' इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ आदित्यादिज्योतिष्ट्वमित्यादिना ॥ जीव एवेदं ज्योतिः । तस्यादित्यादि-ज्योतिष्ट्वोक्तेः । ननु 'किं ज्योतिरयं पुरुषः' इत्यादित्यज्योतिः, 'सम्राडिति होवाच'इत्यादिनोक्तमादित्यज्योतिष्ट्वं' 'प्राणेषु हृद्यन्तर्ज्योतिः'इत्युक्तज्योतिषः कथमिति चेन्न । यस्य पुरुषस्यादित्यादिज्योतिष्ट्वमुक्तं तस्यैव 'आत्मैवास्य ज्योतिर्भवति' इति श्रुत्या(सुप्त्यादावा)त्मज्योतिष्ट्वोक्तौ कतम आत्मेति तदात्म(त्व)प्रश्ने ज्योतिष उक्तत्वादिति भावः ।

आदित्याऽऽदिज्योतिष्ट्वं तु 'न तत्र सूर्यो भाती'त्यादेः परमात्मन्यनवकाशम् । 'स समानः सन्नुभौ लोकावनुसञ्चरति'इत्यनेन लोकसञ्चरणं च ज्योतिष उच्यते । तच्च जीव(स्यैव)स्य कर्मवशाद्युक्तम् । ईश्वरे कर्माभावादनवकाशम् । (ननु) यस्यादित्यादिज्यातिष्ट्वमुक्तं स जीव एवास्तु । तस्य च 'आत्मैवास्य ज्योतिः' इत्यत्र परमात्मज्योतिष्ट्वमुच्यते । तदात्मप्रश्ने च 'योऽयं विज्ञानमयः' इत्यादिना ज्योतिष आम्नानात्परमात्मैवेदं ज्योतिरित्यत उक्तम् ॥ आदित्येनैवायं ज्योतिषाऽऽस्त इत्यवधारणमिति । 'आत्मैवाऽस्य ज्योतिः'इत्यत्र न जीवस्य परमात्मज्योतिष्ट्वमुच्यते । जीवस्य परमात्मज्योतिष्ट्वस्यैवायोगात् । तथात्वे परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्राप्त्या 'तदादित्येनैवायं ज्योतिषाऽऽस्ते चन्द्रमसैवायं ज्योतिषाऽऽस्ते' इत्यवधारणानुपपत्तिः । 'आत्मैवास्य ज्योतिरित्युक्तार्थस्य 'अत्रायं पुरुषः स्वयं ज्योतिः' इति प्रत्यभिज्ञाविरोधश्च सङ्ग्राह्य इति भावः । यद्वाऽऽदिपदेन 'इमं लोकमतिक्रामति मृत्यो रूपाणि स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते । उत्क्रामन् म्रियमाणः पाप्मनो विजहाति उभयान् पाप्मन आनन्दाँश्च पश्यति स यत्तत्र प्रस्वपिति स्वप्नान्तमुच्चावचमीयमान उभयानि पश्यन्' इत्यादिजीवलिङ्गानां परमात्मन्यवकाशरहितानां ग्रहणम् । तेन बहुतादृत्त्व(मुक्त)मुपपन्नम् । इत्यादीनामित्यनेन बहुतादृत्त्वमित्यत्र बहूनां तादृत्त्वमिति विग्रहः प्रदर्शितो



भवति । ततश्च जीवादन्यत्रावकाशरहितबहुलिङ्गेभ्यो जीव एवेदं ज्योतिरिति भावः । (अयं च न्यायो 'विष्णोरेव'इति साधारणतया निरवकाशत्वेन श्रुतित्वेन जात्या च प्रबलविष्णुशब्दोपेतात् श्रुतिप्रदर्शनपदोपादानादतो दुर्बलस्य हेतोः पूर्वपक्षे सूचनात्तस्य च प्राबल्याभिमानं विना साधकोक्त्ययोगात्सूचितः) ॥११॥

**न्या.बि.— वै नामेति प्रसिद्धिद्योतकनिपातद्वयं, रूढित्यागे-नोक्तयौगिकार्थस्वीकारे विरोधि(धः) ॥ १२ ॥**

**भा.बो.**— ॐ आकाशोऽर्थाऽन्तरत्वादिव्यपदेशात् ॐ ॥ 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इति वाक्योक्त आकाशः किं भूताकाशः उत विष्णुः इति प्रयोगात्सन्देहे भूताकाश एवेति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः । तत्रोक्तस्य विरोध इत्युक्तन्यायं पूर्वपक्षसम्बधित्वेन विवृणोति ॥ वै नामेति ॥ वै नामेति निपातद्वयमाकाशशब्दार्थस्य प्रसिद्धिद्योतकम् । आकाशशब्दस्य भूताकाशे रूढित्यागेन 'आकाशस्तल्लिङ्गाद्' इत्यत्रोक्त विष्णुरूपयौगिकार्थ-स्वीकारे विरोधि स्यादित्यर्थः । प्रसिद्धिद्योतकेति हेत्वर्थगर्भं विशेषणम् । न हि विष्णोस्तन्निर्वहितृत्वं वा प्रसिद्धमिति भावः । अनेन उक्तस्य विरोध इत्यनुव्याख्याने निपातद्वयेनेति शेष इत्युक्तं भवति । (यद्वा उक्तस्य श्रुतौ प्रयुक्तस्याप्रसिद्धस्य विष्णुपक्षे विरोध इति यथाश्रुतमिति) ततश्चाकाशपदार्थ-त्वेनाप्रसिद्धस्य प्रागुक्तविष्णोः स्वीकारे प्रसिद्धिद्योतकनिपातद्वयविरोधाद् भूताकाशे तदानुकूल्याद् भूताकाशमेवाकाशपदवाच्यमिति भावः । (अयं च न्यायः 'अर्थान्तरत्वादिव्यपदेशाद्' इत्यनेन प्रसिद्धाकाशविलक्षणप्रतिपादकेन विलक्षणाकाशाङ्गीकारे प्रसिद्धिद्योतकनिपातद्वयविरोध इति सूचितो भवति) ॥ १२ ॥

**न्या.वि.— जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यार्थात्तथागतिः ॥ १३ ॥**

**भा.बो.** — ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ 'स यत्तत्र किञ्चित्पश्य-त्यनन्वागतस्तेन भवति'इति श्रुत्युक्तं स्वप्नादिद्रष्टृत्वं (किं) जीवस्योत विष्णोरिति लोकप्रसिध्द्यसङ्गत्वलिङ्गाभ्यां सन्देहे जीवस्यैवेति पूर्वः पक्षः । विष्णोरेवेति

सिद्धान्तः । तत्र 'अर्थात्तथागतिः'इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन तावद् विवृणोति ॥ जीवेश्वराभेद इति ॥ निमित्तसप्तमीयम् । ईश्वरोक्तावपि असङ्गत्वलिङ्गबलेन 'स यत्तत्र किञ्चित्पश्यति'इत्युक्तस्वप्नादिद्रष्टृत्वेन सिद्धान्तिना ईश्वरोक्तावित्यर्थः । अपिशब्दोऽस्वरससूचनार्थः । ततश्चायमर्थः– असङ्गत्वलिङ्ग-बलात् श्रुत्युक्तं स्वप्नादिद्रष्टृत्वमीश्वरस्येति न वाच्यम् । यतो जीवेश्वरयोरभेदेन चैतन्यरूपार्थविवक्षयाऽसङ्गत्वेन 'असङ्गो ह्ययम्'इति श्रुतौ जीव एवोच्यते । ततश्च लोकप्रसिध्या 'स यत्तत्र किञ्चित्पश्यति'इत्यत्रापि स्वप्नादिद्रष्टृत्वेन जीव एवोच्यत इति । ननु तथापि जीव एवेत्यवधारणानुपपत्तिः । यथा स्वप्नादिदर्शनस्य जीवे मुख्यत्वेनासङ्गत्वमभेदाभिप्रायेण नीयते । तथाऽसङ्गत्वस्येश्वरे मुख्यत्वेन स्वप्नादिदर्शनस्याभेदाभिप्रायेण नेतुं शक्यत्वादिति चेन्न । चैतन्यैक्याभिप्रायेण तद्गतासङ्गत्वस्य जीवेऽमुख्यवृत्तिवदीश्वरे स्वप्नादिद्रष्टृत्वस्य विशिष्टनिष्ठस्या-मुख्यतोऽपि वक्तुमयोगादिति । इतिशब्दः प्रकारार्थः । एवं प्रकारार्थात्तथा-गतिरित्यर्थः । यद्वा जीवेश्वराभेद एव कुतः सिद्ध इत्यत आह ॥ इत्यर्थादिति ॥ इत्यर्थात् असङ्गत्वस्वप्नादिद्रष्टृत्वरूपविशेषणद्वयसामानाधिकरण्यान्यथानुपपत्त्या तथा जीवेश्वरयोरभिन्नत्वेन गतिरवगतिरित्यर्थः । एवं चासङ्गत्वस्वप्रादि-द्रष्टृत्वलिङ्गान्यथानुपपत्त्याऽभेदस्य सिद्धेर्जीव एवायं स्वप्नादिद्रष्टेत्यर्थः । (अयं च न्यायो'भेदेने'त्यनेन स्वप्नादिदर्शिनोऽसङ्गत्वान्यथानुपपत्त्या तद्विरुद्धाभेद-प्राप्तिरिति सूचितो भवति ।) ॥ १३ ॥

## ब्राह्मणाधिकरणम् I-3-14

**न्या.वि. — ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखेन सह परमात्मनोऽभेदं विनाऽवकाशराहित्यादर्थादभेदप्राप्तिरिति समस्तमेतत् ॥ १४ ॥**

भा.बो.— ॐ पत्यादिशब्देभ्यः ॐ ॥ 'एष नित्यो महिमा ब्राह्मणस्य'इति श्रुत्युक्तब्राह्मणः किं विरिञ्च उत विष्णुरिति अजश्रुतिनित्यमहिमत्व- लिङ्गाभ्यां सन्देहे विरिञ्च एवेति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः । तत्रैतदव्यवहितपूर्वाधिकरणसम्बन्ध्यर्थात्तथागतिरित्युक्तन्याय एव 'समस्तमेतत्'



इत्यत्रैतच्छब्देन परामृश्यत इत्यभिप्रेत्य तं न्यायं पूर्वपक्षसम्बन्धित्वेन विवृणोति ॥ ब्राह्मणशब्दस्येति ॥ ब्राह्मणशब्दस्य 'स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्'इति पापाद्यलेपलिङ्गस्य चैकनिष्ठतया प्रतीतस्य विष्णुविरिञ्चान्यतरग्रहणेऽयोगात् चतुर्मुखस्य परमात्मनाऽभेदं विना शब्दलिङ्गयोरवकाशराहित्यादर्थात्तदन्यथानुपपत्त्याऽभेदप्राप्तिरित्येवं प्रकारेण समस्तमेतदित्यर्थः । पूर्वाधिकरणवदिहापि श्रौतोभयसामानाधिकरण्यस्याक्षेपकत्वं, विरिञ्चरूपजीवेश्वराभेदस्याक्षेप्यत्वं, विरिञ्च एवेति निर्बन्धे कारण-सद्भावश्चेत्येतत्सर्वं सममित्यभिप्रेत्य समस्तमित्युक्तम् । यद्वा इतिशब्द आद्यर्थे प्रकारार्थे च । इत्यनेन प्रकारेण इत्यादि समस्तमेतत् ।

'उक्तस्य विरोधः' इत्यादिकं 'बाहुल्यं लिङ्गशब्दानाम्' इत्यन्तं न्यायदशकं ग्राह्यम् । तथा हि । ऐक्याभावे उक्तस्य 'ब्राह्मणस्य'इत्यस्य नित्यमहिमत्वादि-लिङ्गस्य च विरोधः । ब्राह्मणाजादिशब्दाः नित्यमहिमत्वपापाद्यलेपलिङ्गानि चेति बहुतादृत्त्वम् । ब्राह्मणाजादिशब्दः पापाद्यलेपलिङ्गं चेति तादृग्द्वयम् । पापाद्यलेपलिङ्गस्य चतुर्मुखस्य परमात्मनाऽभेदं विनाऽवकाशराहित्यभ्रमः । वर्णशून्यत्वेन ब्राह्मणशब्दस्य रूढ्या विष्णोर्विष्णुजातत्वासम्भवेनाजशब्दस्य विष्णुजातत्वयोगेन विष्णावनवकाश इति विपरीतश्रुतिभ्रमः । ऐक्यं विना विष्णुविरिञ्चप्रतिपादकवाक्यस्यैकार्थपरत्वरूपान्वयाभावः । पापाद्यसङ्गत्व-नित्यमहिमत्वादिलिङ्गस्य विष्णुव्यतिरिक्तचेतनेषु, ब्राह्मणाजादिशब्दानां विरिञ्चव्यतिरिक्तेष्वदृष्टिः । ऐक्यं विना विष्णु-विरिञ्चप्रापकलिङ्गशब्दानां विरुद्धता । विष्णु-विरिञ्चयोर्विशिष्य भेदस्यानुक्तिः । विष्णु-विरिञ्चयोरैक्ये पापाद्यसङ्गत्वनित्यमहिमत्वादिविष्णुलिङ्गानां ब्राह्मणाजादिविरिञ्चशब्दानां च बाहुल्यमिति । (एते च न्यायाः शब्दबाहुल्यप्रदर्शकेन सूत्रेण लिङ्गबाहुल्या-दर्थात्तथागतिरित्यन्तानां सर्वेषां न्यायानामुपलक्षणत्वेन सूचनात्सिद्धान्ते विरिञ्चस्य कर्मफलाभावायुक्तेः, 'न कर्मणा वर्धते' इति कर्मफलरहितेन विष्णुनाऽर्थाद्भेदस्य प्राप्तिरिति स्थिते, ब्राह्मणशब्दपापाद्यलेपलिङ्गान्यथानुपपत्त्या तद्विरुद्धाऽभेद-प्राप्तिरिति, अर्थात्सूचितो भवति ।) ॥ १४ ॥

इति पूर्वपक्षन्यायाः ॥

## सिद्धान्तन्यायाः

**न्या.वि. — तेषामेव लिङ्गशब्दानां 'प्राणानां ग्रन्थिरसि' इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वम् । तस्य हि रुद्रावणादिकर्तृत्वं मुख्यम् ॥१॥**

भा.बो.— ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ।
सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः ॥

इत्यनुव्याख्याने 'बाहुल्यं लिङ्गशब्दानाम्' इत्याद्युक्ता एव सिद्धान्तन्यायत्वेनोक्ताः । तत्र 'बाहुल्यं लिङ्गशब्दानाम्'इत्युक्तमेव न्यायं द्युभ्वाद्यधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ तेषामेवेति ॥ एवकारेणात्मशब्दमुक्तोपसृप्यत्वादीनां बलवत्त्वे (बाहुल्ये) कैमुत्यमभिप्रैति । तच्छब्दपरामृष्टमेव दर्शयति ॥ प्राणानामिति ॥ मुख्यवृत्तिमुपपादयति ॥ तस्येति ॥ शब्दमुख्यवृत्तौ प्रवृत्तिनिमित्तातिशयः कारणमिति भावः । ततश्च बलवद्युक्तिलिङ्गबाहुल्याद् विष्णुरेव द्युभ्वाद्यायतनमित्यर्थः । (अयं च न्यायः 'एतच्छब्दाद्' इत्यनेनैव सूचितो भवति । रुद्रादिशब्दस्यान्तकत्वादिलिङ्गस्य च विष्णौ मुख्यतोक्त्या विष्णुसाधकत्वसूचनात्) ॥ १ ॥

## भूमाधिकरणम्

**न्या.वि. — प्राणस्य विष्णोः सकाशाद्भूयस्त्वाऽनुक्तिः, चशब्देन 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्च ॥ २ ॥**

भा.बो.— 'अनुक्तिश्च'इत्युक्तन्यायं भूमाधिकरणसिद्धान्तसम्बन्धित्वे-नापि विवृणोति ॥ प्राणस्येति ॥ अत्र भूमा विष्णुः पूर्णसुखाभिधानात् सर्वेषामुपर्युपदेशाच्च । ननु सर्वोत्तमत्वोपदेशेऽपि न विष्णुत्त्वनिश्चयः । विष्णुवत्स्वेतरसर्वोत्तमत्वस्य वायावपि सम्भवादित्यत उक्तं ॥ प्राणस्येति ॥ यदि प्राणस्य स्वेतरविष्ण्वादिसर्वोत्तमत्वमङ्गीक्रियते तर्हि कुत्रचित् प्राणस्य विष्णोः सकाशाद् भूयस्त्वोक्तिः स्यात् । न च साऽस्ति । न च



कुत्राप्यनुक्तमङ्गीकर्तुमुचितम् । 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन' इत्युक्तेरिति भावः । पूर्णानन्दत्वमपि वायौ सावकाशं कथं विष्णुत्त्व-निश्चायकमित्यत आह ॥ चशब्देन प्राणाद्विष्णोर्भूयस्त्वोक्तिश्चेति ॥ 'अनुक्तिश्च'इत्यनुव्याख्यानगतचशब्देनेत्यर्थः । ननु 'प्राणो वा आशाया भूयान्' इत्युपक्रमे प्राणशब्दश्रवणात् कथं भूमा विष्णुरित्यतोऽप्याह ॥ प्राणस्येति ॥ प्राणस्य विष्णोरिति सामानाधिकरण्यम् । भूयस्त्वेत्यतः पूर्वमन्यस्येति शेषः । तथा च न विष्णोर्भूमत्वाङ्गीकारे उपक्रमगतप्राणशब्दविरोधः । तस्यापि विष्णुपरत्वात् । प्राणस्य सकाशादन्यस्य भूयस्त्वानुक्तेः । अन्यथा प्राणापेक्षयोत्तमस्य विष्णोः सद्भावेन तारतम्यप्रकरणे तदनुक्तौ निमित्ताभवेन तदुक्तिः स्यादिति भावः । अस्तु वोपक्रमगतप्राणशब्दो वायुपरः । तथापि न तस्य भूमत्वप्राप्तिरित्यत्रानुव्याख्यानगतचशब्दसूचितयुक्तिमाह ॥ चशब्देनेति ॥ उपक्रमोक्तप्राणशब्दस्य वायुपरत्वेऽपि न तस्य भूमत्वम् । 'एष तु वा अतिवदति'इत्यादिना ज्ञापकेन प्रश्नाद्यध्याहारात् प्राणाद्विष्णोर्भूयस्त्वोक्तेः । तथा च तदनन्तरमुक्तभूम्नो विष्णुत्वसम्भवादिति भावः । प्रश्नाद्यध्याहारप्रकारं च 'व्यतिहारो विशिंषन्ति ही'त्यत्र स्पष्टयिष्यत्याचार्यः । ननु प्राणशब्दस्य विष्णुपरत्वाङ्गीकारे पूर्ववाक्येन 'तमुत्क्रामन्तम्'इति भाष्येण च विरोधः । वायुपरत्वानङ्गीकारे तु 'इयदामननाद्' इत्यादिसूत्रादिना छान्दोग्यभाष्येण च विरोध इति कथमेतदिति चेन्न । प्राणपदेन 'आत्मन आकाशः सम्भूत' इतिवदन्तर्यामिविवक्षया विष्णोरुक्तेः । एतेनोक्त्यनुक्त्योर्विरोधोऽपि परिहृतः । यदा प्राणशब्दस्य अन्तर्यामिविवक्षया विष्णुपरत्वं तदा प्रश्नाद्यध्याहारानभ्युपगमेन प्राणादन्यस्य भूयस्त्वादनुक्तिः । यदा तु मुख्यप्राणपरत्वं तदा व्यतिहाराधि-करणोक्तन्यायेन प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वोक्तिरिति पक्षभेदेन दोषाभावादिति भावः । (अयं च न्यायः 'अध्युपदेशाद्' इत्यनेनैव विष्णोरेव भूयस्त्वोक्तेः । प्राणस्य तदभावात् (इति)सूचितो भवति । चशब्दसूचितोक्ति-रूपोऽपि न्यायः तेनैव सूत्रांशेनोक्तः । 'व्यतिहारो विशिंषन्ति हीतरवद्' इत्युक्तप्रकारेण प्राणादधिकस्योपदेशादित्यर्थलाभात्) ॥ २ ॥

## अक्षराधिकरणम्

**न्या.वि. — सर्वाधारप्रकृत्याधारत्वं, विष्णोरन्यस्य विरुद्धम् । 'पतिं विश्वस्यात्मेश्वरं' 'विश्वात्मानं परायणम्' इत्यादिश्रुतेः । अनशनोक्तिस्त्वनुपजीवनार्थत्वेनैव सावकाशा ॥ ३ ॥**

भा.बो.— विरुद्धतेत्युक्तमेव न्यायमक्षराधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ सर्वाधारेति ॥ 'तद्वा एतदक्षरं गार्गी'त्युक्तमक्षरं ब्रह्मैव । 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च' इत्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इति श्रुत्या, अक्षरस्योच्यमानं सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य (श्रौतत्वस्य) विरुद्धमित्यर्थः । (कुत एतदित्यतः) विष्णोः सर्वाश्रयत्वे प्रमाणमाह ॥ पतिं विश्वस्येति ॥ 'विश्वस्य पतिं' सकललोकपालकत्वेन तदाधारम् । 'आत्मेश्वरम्' लक्ष्म्यादिसकलचेतननियामकत्वेन तदाधारम् । 'विश्वात्मानम्' 'परायणम्'इति पदयोरपि क्रमेण पूर्वोक्त एवार्थः । आदिपदेन सर्वाश्रयत्वं विष्णोरन्यस्य विरुद्धमित्यत्र भाष्योदाहृतं प्रमाणं सङ्गृहीतम् । पूर्वपक्षसाधकत्वेनोक्तयुक्तेः श्रौतत्वात्सावकाशत्वमाह ॥ अनशनोक्तिस्त्विति ॥ ततश्च विष्णोरन्यस्य सर्वाधारप्रकृत्याधारत्वस्य विरुद्धत्वाद् विष्णुरेवाक्षरशब्दवाच्यमिति भावः । (अयं च न्यायः 'अम्बरान्तधृतेः' इत्यनेन प्रस्तावसम्भावितहेतुप्रतिपादकेन प्रकृत्याधारस्य विरुद्धमिति सूचितो भवति) ॥ ३ ॥

## सदधिकरणम्

**न्या.वि.— अचेतनस्येक्षणाऽदृष्टिः । बहुभावश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यते ॥ ४ ॥**

भा.बो.— 'अदृष्टिः'इत्युक्तन्यायं सदधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ अचेतनस्येति ॥ 'सदेव'इत्यादिसच्छब्दवाच्यो विष्णुरेव । 'तदैक्षत'इतीक्षतिश्रवणात् । न च तदचेतनप्रकृतौ सम्भवति ।



अचेतनस्येक्षणादृष्टेरित्यर्थः । (व्याप्तिमात्रस्यासाधकत्वात्प्रधानस्या- चेतनत्वादिति हेतुवाक्यं चोपस्कर्तव्यम् ।) पूर्वपक्षयुक्तेः श्रौतत्वात् सावकाशत्वमाह ॥ बहुभावेति ॥ 'अन्यभावं' परिणामम् । 'बहुत्वार्थत्वेनैव'इत्येवकारेण चेतनस्य विकारासम्भवं सिद्धान्तयुक्तेर्निरवकाशत्वं चाभिप्रैति । एवं च जडत्वेन प्रधानस्येक्षणा (सम्भवात्)दृष्टेः विष्णौ च त(द्)ददृष्टेः (तत्सम्भवात्) विष्णुरेव सच्छब्दवाच्य इत्यर्थः । (अयं च न्यायः ईक्षतिकर्मव्यपदेशात्सः' इत्यनेनैवाचेतनस्येक्ष- णादृष्टिरित्युक्तो भवति ।) ॥ ४ ॥

## दहराधिकरणम्

**न्या.वि.— आकाशपक्ष एवान्वयाभावः । विष्णुपक्षे तु, 'योऽन्वेष्टव्यो भगवान् तस्यान्तर्हृदये यावान्वाऽयमाकाशस्ता- वानाकाशः, तस्मिन्द्यावापृथिवी अन्तरेव समाहिते, स भगवानपहतपाप्मे'त्यन्वयः ॥ ५ ॥**

भा.बो.— 'अन्वयाभावः' इत्युक्तन्यायं दहराधिकरणसिद्धान्त-सम्बन्धित्वेन विवृणोति ॥ आकाशपक्ष एवेति ॥ 'दहराकाशस्थमुपास्यम्' इत्युक्ते किं तदत्र विद्यते इति प्रश्ने 'यावान्वा'इत्यस्यान्वयादर्शनात् । न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युपपद्यते तदभावादयोगाच्च । न च दहराकाशमेव विशिष्य 'उभे अस्मिन्'इत्यादिपरिहार इति युक्तम् । दहरस्याव्याप्तत्वेन विशेषणायोगात् । पृथिव्यादीनां मुख्यतोऽनुपास्यत्वाच्चेति भावः । एवकारव्यवच्छेद्यमाह ॥ विष्णुपक्ष इति ॥ 'तस्मिन् यदन्तः'इत्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युच्यते । 'ब्रह्मपुर' पदेनैव ब्रह्मस्थितिसिद्धेः । न चैवं 'किं तदत्र'इति प्रश्नानुपपत्तिः । तस्य 'कीदृशं तत्'इति धर्मविषयत्वेन स्वरूपविषयकत्वाभावादिति प्रश्नवाक्याभिप्रायं सिद्धवत्कृत्य 'अन्वेष्टव्यः' इत्यनूद्य वाक्यान्वयः प्रदर्शितः । तस्य भगवतः । तावानाकाशः, विद्यत इति शेषः । तस्मिन् आकाशे विष्णौ वा । उपलक्षणं चैतत् । 'नास्य जरयैतज्जीर्यते, न वधेनास्य हन्यते' इति वाक्योक्तधर्मान्तरयुक्तश्चेत्यपि ग्राह्यम् । तथा च आकाशपक्ष एवान्वयाभावात् विष्णुपक्षे चान्वयभावाद् विष्णुरेव हृत्पद्मस्थ इत्यर्थः । (अयं च न्यायः

'प्रसिद्धेश्च' इत्यनेन विष्णोरेव दहराकाशस्थत्वं प्रसिद्धं नाकाशस्येति वदता सूचितो भवति । तदुक्तं तत्वप्रकाशिकायाम्– 'न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इति युज्यते । तदभावात्' इति । अत एवैतत्सूत्रव्याख्यानावसरे न्यायसम्बन्धः प्रदर्शितः ।) ॥ ५ ॥

## अनुकृत्यधिकरणम्

**न्या.वि. — यज्ज्ञानाच्छाश्वतं सुखं स भगवान्यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्ते । अतः पूर्ववादविपरीतैव श्रुतिः । पूर्ववादोक्तयोजना तु भ्रम एव ॥६॥**

भा.बो. — 'विपरीतश्रुतिभ्रमः' इत्युक्तन्यायं'अनुकृतेस्तस्य च'इत्यधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ यज्ज्ञानाच्छाश्वतं सुखमित्यादिना ॥ 'तदेतदिति मन्यन्ते' इति वाक्यस्य ज्ञानिसुखपरत्वे 'तेषां सुखम्'इति ज्ञानिसुखस्य प्रकृतत्वात्प्रकृतपरामर्शत्विम् । विष्णुपरत्वे तु तस्याप्रकृतत्वादप्रकृतपरामर्शः स्यादिति शङ्कानिरासार्थं विष्णोः प्रकृतत्वमुपपादयितुं 'यज्ज्ञानाच्छाश्वतं सुखं स भगवान्'इत्युक्तम् । 'तमात्मस्थम्'इत्युपनिषद्वाक्ये तच्छब्देन 'नित्यो नित्यानां चेतनश्चेतनानाम्'इति प्रकृतविष्णोः परामर्श इति भावः । ननु परमात्मनः प्रकृतत्वेऽपि नपुंसकसुखशब्देनाप्रकृतत्वाज्ज्ञानिसुखस्य च तादृशसुखशब्देन प्रकृतत्वात्तस्यैव परामर्शो युक्त इत्यतस्तद्वाक्यं योजयति ॥ यद्ब्रह्मेति ॥ तदेतत्स्वरूपमिति ॥ तद् अनिर्देश्यं सुखम्, एतस्य प्रकृतस्य भगवतः स्वरूपमित्यर्थः । न चैवमभ्युपगमे कारणाभावः । 'तमेव भान्तम्'इत्याद्युक्तहेतूनामनुपपत्तेरिति भावः । कथमनेन न्यायो विवृत इत्यत आह ॥ अत इति ॥ अत उक्तप्रकारेण विष्णुविषयत्वात् 'तदेतदिति मन्यन्ते' इति श्रुतिः पूर्वपक्षबाधकरूपैवेत्यर्थः । पूर्ववादिनापि नपुंसकलिङ्गस्वारस्यादेरुक्तत्वात्कथमेतदित्यत आह ॥ पूर्ववादोक्तेति ॥ भ्रमो भ्रममूलिकेत्यर्थः । नन्वेवं सति विपरीतश्रुतेरेव सिद्धान्तयुक्तित्वादनुव्याख्याने भ्रमपदं किमर्थमित्यतो वाऽह ॥ पूर्ववादेति ॥ 'इति सूचनाय भ्रमपदप्रयोगः' इति वाक्यशेषः । (अयं च न्यायोऽनेनैव सूत्रेणानन्यथासिद्धहेतुद्वयेन पूर्ववादविपरीतैव श्रुतिरिति सूचितो भवति) ॥ ६ ॥



## वामनाधिकरणम्

**न्या.वि. — लिङ्गानां परमात्मन्यवकाशो विद्यत एवेति तद्राहित्यं भ्रम एव । वामनश्रुतेरेवानवकाश इति ईशानशब्दोक्तो विष्णुरेव ॥ ७ ॥**

भा.बो. — 'लिङ्गावकाशराहित्यभ्रमः' इत्युक्तन्यायं वामनाधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ लिङ्गानामिति ॥ लिङ्गानां प्राणव्यवस्थापकत्वादीनाम् । विद्यत एवेत्यवधारणं तु 'शब्दादेव' इति सूत्रानुसारेण । साधकप्राबल्यानुरोधित्वात्साध्यावधारणस्य । ननु भ्रमत्वे हेतुरनेनोच्यते न तु न्यायविवरणमित्यत आह ॥ इतीति ॥ भ्रमो भ्रमविषयः । सौत्रप्रमितपदाभिप्रायं वदँस्तत्फलमप्याह ॥ वामनेति ॥ अनवकाशः, विष्णोरन्यत्रेति शेषः । (यद्वा 'परमात्मन्यवकाशो विद्यत एव'इत्यत्र 'परमात्मन्येव' इति एवकारसम्बन्धः । 'लिङ्गानाम्'इत्यनेनैव वाक्येन लिङ्गानां, प्राणव्यवस्थापकत्वादिलिङ्गानां विष्णोरन्यत्रावकाशराहित्यमिति न्यायो विवृतः । तदुक्तं भाष्ये 'तच्च लिङ्गं विष्णोरेव'इति । ननु पूर्वपक्षिणा विष्णाववकाशराहित्यस्यैवोक्तत्वात् कथमित्यत आह ॥ तद्राहित्यमिति ॥ लिङ्गानां परमात्ममात्रनिष्ठत्वे हेतुमाह ॥ वामनश्रुतेरिति ॥) सिद्धान्तफलकथनं तु मूल एव स्पष्टम् । (अयं च न्यायो लिङ्गानां प्रमितपदेन सावकाशत्वोक्त्या, न लिङ्गानि सावकाशानीति सूचितः ।) ॥ ७ ॥

## कम्पनाधिकरणम्

**न्या.वि. — वज्रशब्दस्योद्यतत्वस्य च विष्णावेवावकाशः । उद्यमित्वमेवोद्यतत्वमिति ॥ १० ॥**

भा.बो. — 'तादृग्द्वयम्'इत्युक्तन्यायं वज्राधिकरणसिद्धान्तसम्बन्धित्वे-नापि विवृणोति ॥ वज्रशब्दस्येति ॥ अत्र वज्रशब्दोद्यतत्वयोस्तादृक्त्वं नाम वामनश्रुतेरिव विष्णोरन्यत्रानवकाशलक्षणं ज्ञातव्यम् । अत एव 'विष्णावेव'इत्युक्तम् । अन्यथा सकलजगच्चेष्टकत्वविरोधादिति भावः । नन्वस्तु

'वर्जनाद्वज्रमुच्यते' इति वाक्यबलाद्वज्रशब्दस्य विष्णुपरत्वम् । उद्यतत्वलिङ्गस्य कथमित्यत आह ॥ उद्यमित्वमेवेति ॥ एवकारेणोन्नमनादिकं व्यवच्छिनत्ति । हेतुस्तूक्त एव । एवं च निरवकाशत्वरूपताद्दत्त्वोपेतवज्रशब्दोद्यतत्वलिङ्गरूपद्वयाद् वज्रशब्दवाच्यो विष्णुरेवेति भावः । (अयं च न्यायः 'कम्पनाद्' इत्यनेन निरवकाशलोकचेष्टकत्वोक्त्या, तत्सहश्रुतवज्रशब्दोद्यतत्वलिङ्गयोर्निरवकाशत्वसूचनेन सूचितो भवति । अत्र सूत्रस्य श्रुतिलिङ्गयोः सावकाशत्वप्रतिपादनेऽपि व्यापारोऽस्तीति दर्शयितुं भाष्ये 'एजतीति कम्पनवचनादुद्यतवज्रो भगवान्' इत्युक्तम् । अन्यथा 'वज्रः' इत्येवावक्ष्यत् । सूत्रे च वज्रशब्दसमन्वयात् , श्रुतिलिङ्गयोः सावकाशत्वस्यापि प्रतिपादनात्, समन्वेतव्यशब्दानुक्तिः ।) ॥ १० ॥

## ज्योतिरधिकरणम्

**न्या.वि. — 'अयं पुरुषः' इति संसारी । आत्मशब्दोदित एव विष्णुः । अत आदित्यादिज्योतिष्ट्वं संसारिण एव । 'आदित्येनैव' इत्यवधारणं बाह्यज्योतिष्षु प्राधान्यापेक्षयेत्यादि । लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यात् ॥११॥**

भा.बो. — 'बहुताद्दत्त्वम्'इत्युक्तन्यायं ज्योतिरधिकरणसिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ अयं पुरुष इत्यादिना ॥ 'हृद्यन्तर्ज्योतिः'इति वाक्यस्य विष्णुपरत्वे 'आदित्यादिज्योतिः सम्राट्'इति वाक्योक्तादित्यादिज्योतिष्ट्वं न बाधकमिति वक्तुमाह ॥ अयं पुरुष इति ॥ 'किं ज्योतिरयं पुरुषः' इत्युक्तः, संसारीत्यर्थः । 'न तद्भासयते सूर्यः' इत्यादिवचनात् मुक्तस्याप्यादित्यज्योतिष्ट्वायोगात् संसारीत्युक्तम् । नन्वस्यैव संसारिणो वागादि (ज्योतिषां) शान्तौ सत्यां 'आत्मैवास्य ज्योतिः'इति स्वयं शब्दपर्यायात्मशब्देन स्वयं ज्योतिष्ट्वोक्तौ 'कतम आत्मा'इति तदात्मप्रश्ने 'योऽयं विज्ञानमयः' इति वाक्यस्य प्रवृत्तत्वेन तस्य विष्णुपरत्वं कथमित्यत आह ॥ आत्मशब्दोदित इति ॥ 'आत्मैवास्य ज्योतिः'इति वाक्यस्थात्मशब्दोदितो विष्णुरेवेत्यर्थः । 'अयं पुरुषः' इति संसारीत्युक्तस्य फलमाह ॥ अत इति ॥ यतः 'अयं पुरुषः'



इति संसारी अतस्तत्रोक्तमादित्यादिज्योतिष्ट्वं तस्यैवेत्यर्थः । नन्वात्मशब्दस्य विष्णुपरत्वे तस्यास्तमयादिशून्यत्वेन तज्ज्योतिष्ट्वस्य सर्वदा जीवे सत्त्वात् 'आदित्येनैव'इति 'चन्द्रमसैव'इत्यवधारणानुपपत्तिरित्यत आह ॥ आदित्येनैवेति ॥ आदिपदेन परमात्मनोऽस्तमयादिशून्यत्वेन जागरादावपि सद्भावादात्मैवास्य ज्योतिरिति, 'सुप्तावेव विशिष्योक्तेर्भावे भावेऽपी'ति बृहदारण्यकभाष्योक्तगतिः, तथा 'अत्राऽयं पुरुषः' इति वाक्ये 'आत्मैवास्य ज्योतिः' इत्युक्तार्थप्रत्यभिज्ञानात्तत्र च स्वयंशब्दस्य जीववाचकत्वादात्मशब्दस्य विष्णुवाचकत्वे, शङ्क्यमानप्रत्यभिज्ञाविरोधस्यात्र 'अयं भगवान् विष्णुः'इति बृहदारण्यकभाष्योक्तपरिहारश्च गृह्यते । एतदेवाभिप्रेत्योक्तं तत्वप्रकाशिकायां 'न च विशिष्योक्तिविरोधः' इति । यद्वा आदिपदेन 'इमं लोकमतिक्रामती'त्यादेः 'कृत्वा विवाहन्तु कुरुप्रवीराः' इत्यादिवदन्तर्णीतणिच्त्वेनोपपत्तिरिति बृहदारण्यकभाष्योक्तसावकाशत्वं गृह्यते ।

ननु तथापि कर्ममरणादिरहितस्य विष्णोः कर्मनिबन्धनोभयलोकसञ्चरणमृत्युरूपदर्शनादि कथमित्यत आह ॥ लोकसञ्चरणं त्विति ॥ 'स समानः सन्'इति समानशब्दाभिप्रायमाह ॥ अदुःखेनैवेति ॥ एतच्च जीवे न सम्भवतीति तस्यैवेत्युक्तम् । समानत्वे प्रमाणान्तरप्रमितहेतुमाह ॥ स्वातन्त्र्यादिति ॥ नन्वादित्यादिज्योतिष्ट्वस्य जीवनिष्ठत्वं, (मृत्युरूपदर्शनाऽऽदेर्विष्णौ सावकाशत्वमात्रं), लोकसञ्चरणस्य विष्णुमात्रनिष्ठत्वमित्यनेकप्रकारत्वेन बहूनां ताद्दत्त्वाभाव इति चेन्न । प्रसिद्धत्वेन 'कतम आत्मे'ति प्रश्नायोगः, स्वाप्नपदार्थकर्तृत्वं 'स्वप्नेन शारीर'मिति मन्त्रासङ्गतिरित्येतैः सहितस्य लोकसञ्चरणस्य सिद्धान्तसाधकत्वाङ्गीकारात्ताद्दशानां बहुत्वसम्भवात् । अत एव बृहदारण्यकभाष्ये 'कतम आत्मे'ति प्रश्नानुपपत्त्यादिनैषां जीवपक्ष एव बाधकत्वोक्तिः । एतदेवाभिप्रेत्योक्तं तत्वप्रकाशिकायां– 'जीवपक्षे बहुबाधकसद्भावाद्' इति । ततश्च बहूनां लोकसञ्चरणादीनां ताद्दत्त्वाद्विष्णोरन्यत्र निरवकाशत्वाद् विष्णुरेव ज्योतिःशब्दवाच्य इत्यर्थः । (अयं च न्यायो 'दर्शनाद्' इत्यनेनोपलक्षणत्वेन सूचितो भवति ।) ॥ ११ ॥

## आकाशाधिकरणम्

**न्या.वि.— वै नामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यम् । प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्धम् ॥ १२ ॥**

भा.बो. — 'उक्तस्य विरोधः' इत्युक्तन्यायमाकाशाधिकरणसिद्धान्त-सम्बन्धित्वेनापि विवृण्वन् पूर्वपक्षन्यायस्य सावकाशत्वं तावदाह ॥ वै नामेति ॥ वै नामेति निपातद्वयं भगवतो नामरूपनिर्वहितृत्वे लोकप्रसिद्धभावेऽपि 'एको दाधार भुवनानि विश्वे' इत्यादिश्रुतिप्रसिद्धिबाहुल्यं दर्शयतीत्यर्थः । अनेन श्रुतौ वै नामेति निपादद्वयस्य 'नामरूपयोर्निर्वहिता' इत्युत्तरेणान्वयः । विधेयार्थ-प्रसिद्धिद्योतकत्वान्निपातस्य पूर्वपक्षे तदयोगादित्युक्तं भवति । लौकिकोद्देश्यप्रसिद्धिपरित्यागेन वैदिकविधेयप्रसिध्यङ्गीकारे को हेतुरित्यतो न्यायं विवृणोति ॥ प्रसिद्धाकाशस्येति ॥ अनेन निपातद्वयस्योद्देशस्य लौकिकप्रसिद्धि-द्योतकत्वमभ्युपेत्यापि प्रसिद्धाकाशग्रहणे 'ते तदन्तरे' त्युक्तनामरूपत्वस्य विरोध इति न्यायविवरणं कृतं भवति । उपलक्षणं चैतत् । 'तद्ब्रह्मे' त्युक्त-ब्रह्मशब्दविरोधश्चेत्यपि ज्ञातव्यम् । प्रसिद्धपदं न केवलं विष्णुव्यावृत्त्यर्थम् । किं तु उक्ताभ्युपगमसूचनार्थम् । एवं च प्रसिद्धाकाशस्य नामरूपत्वेनोक्त-स्यानामरूपत्वस्य विरोधाद्विष्णुपक्षे च तदभावाद्विष्णुरेवाकाशपदवाच्य इत्यर्थः । (अयं च न्यायः 'अर्थान्तरत्वव्यपदेशात्' इत्यनेन श्रुत्युक्तस्य नामरूपत्वस्य विरोध इति सूचनेन सूचितः ।) ॥ १२ ॥

## सुषुप्त्यधिकरणम्

**न्या.वि. — सुषुप्त्युत्क्रान्त्योर्जीवेश्वरयोर्भेदोक्तेरसङ्गत्वादि चेश्वरस्यैवेत्यर्थाद्भेद एव भवति । जीवस्य तदयुक्तेरीशे सावकाशत्वाच्च ॥ १३ ॥**

भा.बो. — 'अर्थात्तथागतिः' इत्युक्तन्यायं सुषुप्त्यधिकरणसिद्धान्त-सम्बन्धित्वेनापि विवृणोति ॥ सुषुप्त्युत्क्रान्त्योरिति ॥ भेद एवाभेदो नेत्यर्थः । यदुक्तमर्थात्स्वप्नादिद्रष्टृत्वासङ्गत्वयोः सामानाधिकरण्यान्यथानुपपत्त्या जीवेश्वर-योरभेद इति, तन्न । सुषुप्त्युत्क्रान्तिप्रकरणयोः 'प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽरूढः' इति जीवेश्वरयोर्भेदोक्तेरसङ्गत्वं, आदिपदोक्तं स्वप्नादिद्रष्टृत्वं चेश्वरस्यैव भवतीति तदुभयसामानाधिकरण्यान्यथानुपपत्त्यभावाच्च जीवेश्वरयोरभेदस्यैवाभावादित्यर्थः । अनेन अर्थात्तथा, भेदेनैव न त्वभेदेन गतिरवगतिरिति न्यायो विवृतो भवति । असङ्गत्वमीश्वरस्यैवेत्युक्तमुपपादयति ॥ जीवस्येति ॥ ननु स्वप्नादिद्रष्टृत्वं जीवस्यैव प्रसिद्धम्, इति कथमीश्वरस्यैवे-त्युक्तमित्यत आह ॥ ईशे सावकाशत्वाच्चेति ॥ ईशस्य सर्वज्ञत्वेन स्वाप्नपदार्थानां च सत्यत्वेन स्वप्नादिद्रष्टृत्वस्य मुख्यतः परमात्मन्येवोपपत्तेरिति भावः । (अयं च न्यायो 'भेदेन' इत्यस्यानन्तरं 'व्यपदेशाद्' इति पूरणेन भेदोक्त्यन्यथानुपपत्त्या भेदः सिद्ध इति सूचितः।) ॥ १३ ॥



## ब्राह्मणाधिकरणम्

**न्या.वि.— 'ब्रह्मणा वेदेन गम्यते' इति ब्राह्मणशब्दो विष्णावेव युज्यत इत्यर्थादजशब्दोऽपि तस्मिन्नेव । चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयो र्भेदोऽर्थादापद्यते । उक्तविरोधश्च तत्रैव । भेदश्रुतिबाहुल्यात् । तल्लिङ्गं स शब्दश्च चतुर्मुखेऽनवकाश इति समस्तमेतत् ॥ १४ ॥**

**इति श्रीमन्न्यायविवरणे प्रथमाध्यायस्य तृतीयः पादः॥**

भा.बो. — 'समस्तमेतद्' इत्यत्रैतच्छब्देन पूर्वाधिकरणसम्बन्ध्यर्थात्तथा-गतिरूपन्यायपरामर्श इत्यभिप्रेत्य तं न्यायं 'पत्यादिशब्देभ्यः' इत्यधिकरण-सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ ब्रह्मणेति ॥ सङ्कोचे कारणाभावेन 'ब्रह्माण' इति भवितव्ये 'ब्राह्मण' इत्याधिक्यार्थक स्वरव्यत्ययेन च मुख्यतया सर्ववेदवेद्यत्वं 'एष नित्यः' इति श्रुतिगतब्राह्मणशब्दप्रवृत्तिनिमित्तमित्यभिप्रेत्य 'ब्राह्मणशब्दो विष्णावेव' इत्युक्तम् । तथा च तत्समभिव्याहारादजशब्दोऽपि केनापि प्रकारेण 'न जायते' इति व्युत्पत्त्या प्रयुक्त इत्यभिप्रेत्याह ॥ तस्मिन्नेवेति

॥ नन्वजशब्दस्योक्तव्युत्पत्तिकत्वे स्वत एव विष्णुपरत्वसम्भवेन तस्योक्तयौगिकार्थब्राह्मणशब्दसमभिव्याहारान्यथानुपपत्त्या विष्णुपरत्वं कुत इति चेन्न । 'अयं ब्राह्मणो विरिञ्च एव । तस्मिन्नजशब्दश्रवणात् । न च तस्य विष्णाववकाशः । ब्राह्मणशब्दसमभिव्याहृतस्य चतुर्मुखपरत्वोपपत्तेः'इति पूर्वपक्षिणा ब्राह्मणशब्दस्य रूढिमभिप्रेत्याजशब्दस्य चतुर्मुखपरत्वसाधकताङ्गीकारात् । ततश्च पूर्ववाद्युक्तन्यायेनैव ब्राह्मणशब्दस्योक्तयोगेन विष्णुमात्रपरत्वे, तत्समभिव्याहारादजशब्दस्यापि तत्परत्वमित्यभिप्रायात् । अत एव तत्वप्रकाशिकायां एतदनुरोधेनैवमेव पूर्वपक्षः कृतः । ननु ब्राह्मणशब्दस्यैव रूढिपरित्यागेन यौगिकत्वाङ्गीकारे को हेतुः । येनाजशब्दस्याप्युक्तयौगिकताङ्गीकार इति चेन्न । एतद्वाक्योक्तब्राह्मणस्य विरिञ्चत्वे पापालेपादिलिङ्गविरोधात्, पत्यादिशब्दविरोधाच्च । ननु विष्णुविरिञ्चयोरभेदाभिप्रायेण तल्लिङ्गं, स शब्दश्च चतुर्मुखे सावकाशावित्यतस्तमेव न्यायं प्रकारान्तरेण विवृणोति ॥ चतुर्मुखस्येति ॥ न विष्णुविरिञ्चयोरभेदः मानाभावात् । न च ब्राह्मणाजशब्दपापालेपादिलिङ्गसामानाधिकरण्यबलात्तत्सिद्धिः । ब्राह्मणाजशब्दयोरुक्तरीत्या सावकाशत्वात् । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम्' । इति वचनात् विरिञ्चस्य कर्मफलाभावायुक्तेर्नित्यमुक्तेन परमात्मना भेदस्यैवोपपन्नत्वादिति भावः । ननु ब्राह्मणाजशब्दयोर्विष्णौ सावकाशत्वमेव कुतः । रूढ्यपेक्षया योगस्य दुर्बलत्वात् । तथा च तदुभयसामानाधिकरण्यबलादभेदसिद्धिः स्यादेवेत्यत आह ॥ उक्तविरोधश्चेति ॥ चो यस्मादित्यर्थे । यस्मात् ब्राह्मणाजशब्दयो रूढ्या चतुर्मुखपरत्वाङ्गीकारे, 'सर्वस्य वशी' 'सर्वस्येशानः' 'सर्वस्याधिपतिः' इत्याद्युक्तं विरुद्धं भवत्यत उक्तयोगेन तयोर्विष्णुपरत्वमेवेति भावः । विष्णुविरिञ्चयोर्भेद एव 'विश्वो हिरण्यगर्भः' इत्यादिभेदश्रुतिबाहुल्यान्न तयोरभेदो युक्त इत्याह ॥ तत्रैवेति ॥

एवं विष्णुविरिञ्चयोर्भेदेन यत्सिद्धं तदाह ॥ तल्लिङ्गमिति ॥ यस्मादुक्तप्रकारेण विष्णुविरिञ्चयोरभेदाभावः । तस्मात् तल्लिङ्गं पापाद्यलेपनित्यमहिमत्वादिलिङ्गं पत्यादिशब्दश्च चतुर्मुखे विष्णुविरिञ्चयोरभेदेन सावकाश इति नेत्यर्थः । इति उक्तप्रकारेण, एतत् पूर्वाधिकरणोक्तं, समस्तमत्र न तु किञ्चिदेवेत्यर्थः ।



पूर्वाधिकरणवत् भेदश्रुतेः सामानाधिकरण्यान्यथानुपपत्तिपरिहारस्य च साम्यादिति भावः । यद्वाऽत्र समस्तशब्देन 'बाहुल्यं लिङ्गशब्दानाम्'इत्यादयः, 'अर्थात्तथागतिः'इत्यन्ता एकादशापि न्यायाः सङ्गृहीताः । तत्रार्थात्तथागतेरव्यवहितपूर्वाधिकरणसम्बन्धित्वेनैतच्छब्देन शीघ्रोपस्थितेस्तद्विवरणं प्रथमतः कृत्वा तत्सङ्गत्या प्रतिलोमक्रमेण न्यायान्विवृण्वन् 'उक्तस्य विरोधः' इत्युक्तन्यायं तावद्विवृणोति ॥ उक्तेति ॥ चशब्दः समुच्चये । तत्रैव ब्राह्मणशब्दस्य चतुर्मुखपरत्व एव । उक्तस्य पत्यादिशब्दस्य विरोध इत्यर्थः । अत एव तत्वप्रकाशिकायां 'अन्यथा पत्यादिशब्दविरोधात्' इत्युक्तम् । ब्राह्मणस्येत्यस्य नित्यमहिमत्वादिलिङ्गस्य च विरोध इति पूर्वपक्ष्युक्तं तु ब्राह्मणशब्दव्याख्यानेनैव निरस्तम् । एवमुत्तरत्रापि ज्ञातव्यम् । ननु विशिष्टस्य कर्मफलाभावात्पत्यादिशब्दयोगेऽपि चतुर्मुखस्येश्वरस्वरूपत्वात्स्वरूपापेक्षया तदुभयोपपत्तिरित्यत आह ॥ भेदश्रुतीति ॥ 'तत एते व्यजायन्त' 'विश्वो हिरण्यगर्भः' इत्यादिभेदश्रुतिबाहुल्यादित्यर्थः । यद्वा 'बहुतादृत्त्वम्'इत्युक्तन्यायं विवृणोति ॥ भेदश्रुतीति ॥ 'विश्वो हिरण्यगर्भः' इत्यादिबहुश्रुतीनां विशिष्य विष्णुविरिञ्चयोर्भेदप्रतिपादकत्वेन निरवकाशत्वरूपं तादृत्त्वं द्रष्टव्यम् । तादृग्द्वयमित्युक्तन्यायं विवृणोति ॥ तल्लिङ्गमिति ॥ पापालेपत्वलिङ्गं, पत्या(ब्राह्मणा)दिशब्दश्च । तादृत्त्वप्रदर्शनार्थमुक्तं चतुर्मुखेऽनवकाश इति । यद्वा 'लिङ्गावकाशराहित्यम्'इत्युक्तं विवृणोति ॥ तल्लिङ्गमिति ॥ उक्तरीत्या धर्मसाध्यपदप्राप्तिमति चतुर्मुखे नित्यमहिमत्वादिलिङ्गजातं निरवकाशमित्यर्थः । तथा च चतुर्मुखस्य परमात्मनाऽभेदं विना पापालेपत्वलिङ्गस्यावकाशराहित्यभ्रमेण पूर्वपक्षप्रवृत्तिरित्युक्तं भवति ।

तथा 'विपरीतश्रुतिः'इत्युक्तन्यायं विवृणोति ॥ स शब्दश्चेति ॥ सर्ववेदमुख्यार्थत्वनिमित्तकब्राह्मणशब्दः सर्वथा जन्मराहित्यनिमित्तकाजशब्दश्च चतुर्मुखेऽनवकाश इति पूर्वपक्षविपरीतैव श्रुतिः । प्रथमवर्णप्रतिपादको ब्राह्मणशब्दो, विष्णुजातत्वनिमित्तश्चाजशब्द इति भ्रमेण पूर्वपक्षप्रवृत्तेरिति भावः । 'अन्वयाभावः' इत्युक्तन्यायं विवृण्वन् तत्साध्यमप्याह ॥ चतुर्मुखस्येति ॥ कर्मसाध्यज्ञानानन्दादिवृद्धिमतः चतुर्मुखस्य कर्मफलाभावायुक्तेरन्वयाभावात्,

विष्णोश्च कर्मफलाभावात्तयोर्भेद एव बलादापद्यत इत्यर्थः । यद्वा 'अदृष्टिः'इत्युक्तन्यायं पूर्ववद्विवृणोति ॥ चतुर्मुखस्येति ॥ विरुद्धधर्माधिकरणयोरभेदस्य क्वाप्यदृष्टेरुक्तरीत्या विरुद्धधर्माधिकरणयोस्तयोर्विष्णुविरिञ्चयोर्भेद एवार्थाद्बलादापद्यत इत्यर्थः । 'विरुद्धता'इत्युक्तन्यायं विवृणोति ॥ उक्तविरोध इति ॥ चशब्दो न्यायान्तरसमुच्चये । तत्रैव तयोरभेद एव श्रुत्युक्तविरोध इत्यर्थः । कथमित्यत आह ॥ भेदेति ॥ अथवा 'अनुक्तिः'इत्युक्तन्यायं विवृणोति ॥ उक्तेति ॥ उक्तिरुक्तम् । भावे क्तः । तद्विरोधोऽनुक्तिरेवेति यावत् । तत्र तयोरभेदे । विषयसप्तमीयम् । ननु 'स्थित्यादये हरि-विरिञ्चि-हरेतिसञ्ज्ञाः' इत्यादिना तयोरभेदस्योक्तत्वात् कथमनुक्तिरित्यत आह ॥ भेदेति ॥ एवेत्यनुवर्तते । भेदश्रुतेरेव बाहुल्यात्तद्विरोधेन क्वचित्तदुक्तेरन्तर्याम्यभेदपरत्वमिति भावः । यद्वा 'अनुक्तिश्च' इति चशब्दसमुचितयुक्तिमाह ॥ भेदेति ॥ न केवलमभेदानुक्तिः किन्तु भेदोक्तिश्चेति भावः । यद्वा 'बाहुल्यं लिङ्गशब्दानाम्' इत्युक्तन्यायं विवृणोति ॥ तल्लिङ्गमिति ॥ नित्यमहिमत्वादिलिङ्गजातं पत्यादिशब्दसमूहश्च चतुर्मुखेऽनवकाश इत्यर्थः । अनवकाश इति प्राबल्यकथनम् । इति, अनेन प्रकारेण,(ए) तत् प्रागुक्तन्यायजातं समस्तमत्र न तु किञ्चिदेवेत्यर्थः । सर्वमेतत्सूचितं सूत्रे 'शब्देभ्यः' इति आद्यर्थकबहुवचनेन । (एते सर्वेऽपि न्यायाः सूत्रेणैव वचनवृत्त्युपलक्षणाभ्यां दर्शिताः । अत एव सुधायां, 'दृश्यन्ते ताश्च सर्वशः' इत्यनुव्याख्यानं 'सूत्रसूचितान्न्यायानभिधाय' इति व्याख्यातम् । एवमुत्तरत्रापि 'स्वयं भगवतोदिताः' इत्यादौ द्रष्टव्यम्) ॥ ॥ १४ ॥

इति श्रीमन्न्यायविवरणभावबोधे प्रथमाध्यायस्य तृतीयः पादः ॥



# अथ चतुर्थः पादः

## अनुमानिकाधिकरणम् I-4-1

**न्या.बि. — अवरत्वादिधर्मनियन्तृत्वं तत्तादात्म्यवत्त्वं चेति द्विविधं ह्यवरत्वादि । 'निरनिष्टो''निरवद्यः' इत्यादिश्रुतेस्तत्तद्दोषतादात्म्यात्यस्पृष्टिनियमात् विष्णोः 'नामानि सर्वाणि यमाविशन्ति' इति श्रुतिबलाच्च नियन्तृत्वमवरत्वादिकमित्यापतति । श्रुतिद्वयस्यापि निरवकाशत्वात् । मृत्युशब्दादिषु प्रसिद्धेश्च । प्रसिद्धत्वात्कर्तृव्युत्पत्तेः । तमेव मृत्युममृतं, तात दैवं सर्वात्मना वै हि परं परायणमित्यादेश्च । उपचारकल्पनायाश्च क्लिष्टत्वात् । प्रमाणाभावाच्च । नाव्यक्तादिशब्दानां परमात्मविषयत्वाङ्गीकारे सर्वमानविरोधः ॥ १ ॥**

भा.बो.— अन्यत्रैव प्रसिद्धाव्यक्तादिशब्दसमन्वयार्थं चतुर्थः पादः प्रवृत्तः । एतत्पादीयाधिकरणपूर्वपक्षसिद्धान्तन्यायाः सङ्ग्रहेण अनुव्याख्यायामुक्ताः ।

सर्वमानविरोधश्च व्युत्पत्तेरप्यशक्यता ।
परस्परविरोधश्च विरोधः कार्यतद्वतोः ।
स्त्रीलिङ्गत्वं निषेधश्च युक्तयः पूर्वपक्षगाः ॥
दोषात्यस्पृष्टिनियमः शब्दार्थानेकता तथा ।
बहुरूपत्वमीशस्य व्यक्ताव्यक्तिविशेषिता ॥
उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा ।
इत्याद्या युक्तयः साक्षात्सिद्धान्तस्थापका इह ॥ इति ।

ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ इत्यत्र 'अव्यक्तात्पुरुषः परः' इति वाक्यगताव्यक्तादिशब्दवाच्यं किं प्रधानादि उत विष्णुरिति अवरत्वादिलिङ्गापादितान्यत्रप्रसिद्धिसमन्वयसूत्राभ्यां सन्देहे प्रधानाद्येवेति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः । तत्र 'सर्वमानविरोधश्च' इति, 'दोषात्यस्पृष्टिनियमः' इति, उक्तपूर्वपक्षसिद्धान्तन्यायौ बाध्यबाधकभावं

दर्शयन् विवृणोति ॥ अवरत्वादीत्यादिना ॥ सिद्धान्तयुक्तिं सङ्गमयितुं तदुपयुक्तं तावदाह ॥ अवरत्वादिधर्मनियन्तृत्वमिति ॥ (तत्तादात्म्यमित्यत्र तच्छब्देनाऽवरादिवस्तुपरामर्शः ।) अवरत्वादीत्यतः पूर्वं परगतेति शेषः । अवरत्वादि अवरत्वादिशब्दप्रवृत्तिनिमित्तमित्यर्थः । हिशब्दः तस्य 'यदधीना गुणा यस्य तद्गुणी सोऽभिधीयते' इत्यादिप्रमाणप्रसिद्धिद्योतकः । नन्वस्त्वेवमवरादिशब्दप्रवृत्तिनिमित्तद्वैविध्यं, ततः किमित्यतो 'नेश्वरस्यावरत्वादिधर्माधिकरणत्वेनावरादिशब्दवाच्यत्वम् । येन सर्वमानविरोधः स्यात् । किन्तु परगतावरत्वादिधर्मनियन्तृत्वेनैव'इति विवक्षुरवरत्वादिधर्माधिकरणत्वेनावरादिशब्दवाच्यत्वाभावे हेतुत्वेन सप्रमाणकं सिद्धान्तन्यायं विवृणोति ॥ निरनिष्ठ इति ॥ ननु दोषात्यस्पृष्टिनियमस्य अवरादिशब्दवाच्यत्वाभावेनाप्युपपत्तेरवरत्वादिनियन्तृत्वेन तच्छब्दवाच्यत्वापादकत्वं कथमित्यत उक्तम् ॥ नामानीति ॥

ननु तथापि न परगतावरत्वादिनियन्तृत्वेनावरादिशब्दवाच्यत्वं विष्णोः । 'निरनिष्ठः' इत्यादिश्रुतेरर्थसङ्कोचेनावरत्वाद्यधिकरणत्वेनावरादि- शब्दवाच्यत्वस्य वा 'नामानि सर्वाणि' इति श्रुतेरर्थसङ्कोचेनावरादिशब्दवाच्यत्वस्यैव वा सम्भवात् इत्यत आह ॥ ॥ श्रुतिद्वयस्येति ॥ ननु भवेदेतत्प्रधानादिगतशब्दप्रवृत्तिनिमित्तप्रेरकत्वेनेश्वरस्यावरादिशब्दवाच्यत्वं यद्यन्यगतप्रवृत्तिनिमित्तप्रेरकेऽसौ शब्दो वर्तत इति सिध्येत् । तदेवकुतः इत्यत आह ॥ मृत्युशब्दादिष्विति ॥ अन्यगतमारकत्वादिनियामकत्वेन यमादिवाचकत्वस्येति शेषः । एवं तर्ह्यन्यगतप्रवृत्तिनिमित्तप्रेरके वृत्तिरमुख्या स्यादित्यतो वाऽऽह ॥ मृत्युशब्दादिष्विति ॥ मृत्युशब्दस्य यमादिवाचकत्वस्य प्रसिद्धेः बहुलप्रयोगसिद्धत्वात् । बहुलप्रयोगसिद्धस्य च मुख्यत्वादित्यर्थः । न केवलमुक्तन्यायेनावरादिशब्दवाच्यत्वं विष्णोः किन्तु 'स बद्धः' 'स दुःखी' 'स बद्धयति' 'स दुःखयति' इत्यादिश्रुतिषु बद्धादिशब्दानां विष्णौ कर्तृव्युत्पत्तेः प्रसिद्धत्वाच्चेत्याह ॥ प्रसिद्धत्वादिति ॥ स्मृतावपि विष्णौ कर्तृव्युत्पत्ति (अन्यगतप्रवृत्तिनिमित्तनियामकत्व)मपेक्ष्य शब्दप्रयोगोऽस्तीत्याह ॥ तमेवेति ॥ मृत्युं मारकम् । अमृतं मोचकम् । नन्वत्र मृत्युप्रमुखशब्दानामौपचारिकत्वं किं



न स्यादित्यत आह ॥ उपचारेति ॥ तर्हि सिंहो देवदत्त इत्यत्रापि न स्यादित्यत आह ॥ प्रमाणाभावादिति ॥ तत्र मुख्यार्थबाधानुसन्धानरूप प्रमाणसद्भावादौपचारिकत्वम् । अत्र तु तदभावान्नौपचारिकत्वमिति भावः । सिद्धान्तन्यायफलत्वात्पूर्वपक्षन्यायनिषेधस्य । इदानीं तन्निषेधपूर्वं पूर्वपक्षन्यायं विवृणोति ॥ नाव्यक्तादिशब्दानामिति ॥ 'अव्यक्तात्पुरुषः परः' इत्यादिवाक्यगताव्यक्तादिशब्दानां परमात्मवाचकत्वाङ्गीकारे पुरुषगतपरत्वावधित्वादिना अवरत्वादिप्राप्त्या 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिसर्वमानविरोधो नेत्यर्थः । तथा च विष्णोरव्यक्तादि- शब्दवाच्यत्वेऽवरत्वादिप्राप्तौ सर्वमानविरोधात् । प्रधानाद्येवाव्यक्तादि- शब्दवाच्यमिति पूर्वपक्षे दोषात्यस्पृष्टिनियमाद् विष्णोरव्यक्तादिनियामकत्वेनाव्यक्तादिशब्दवाच्यत्वमिति सिद्धान्त इति भावः । (अत्र पूर्वपक्षन्यायः 'तदधीनत्वात्' इत्यनेन, अवरत्वादिनियामकत्वेनैवावरत्वादिशब्दजातमर्थवन्नावरत्वाद्यधिकरणत्वेन, तथात्वे 'निरनिष्ठ' इत्यादिसर्वमानविरोध इत्यर्थकेन सूचितः । यद्वा 'तदधीनत्वात्' इत्यनेनार्थवत्त्वसाधनेन श्रुतिनैरर्थ्यापादकत्वसूचनेन सूचितः । सिद्धान्तन्यायः तदधीनत्वादित्यनेनोक्तो भवति ॥ १ ॥

## ज्योतिरुपक्रमाधिकरणम् I-4-2

**न्या.वि. — रूढो, रूढियोगो, महायोगो, महारूढियोगो, रूढोपचारो , रूढलक्षणोपचारो , लक्षणेति शब्दवृत्तिभेदाः रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तेः ॥ २ ॥**

भा.बो. — ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ अत्र 'वसन्ते वसन्ते ज्योतिषा यजेत'इति वाक्यगतज्योतिरादिशब्दानां प्रागुक्तसंशयबीजेन भगवत्परत्वकर्मादिपरत्वकोटिकसंशये कर्मादिपरत्वमेवेति पूर्वः पक्षः । भगवत्परत्वमिति सिद्धान्तः । एतत्पूर्वपक्षसिद्धान्तसाधकत्वेन 'व्युत्पत्तेरप्यशक्यता'इति 'शब्दार्थाऽनेकता तथा'इति न्यायौ बाध्यबाधकभावं दर्शयन् विवृणोति ॥ रूढ इत्यादिना ॥ शब्दार्थानामनेकत्वोपपादनार्थं वृत्तिभेदकथनम् ।

नारायणादिशब्दानां महारूढियोगः, आनन्दममयादिशब्दानां महायोग इति भगवति वृत्तिद्वयम् । तदितरत्र यथायथमितराः सप्त वृत्तय इति ज्ञातव्यम् । एतेषां लक्षणोदाहरणानि तत्वप्रकाशिकादौ द्रष्टव्यानि । ज्योति-र्वसन्त-स्तोमादिशब्दानां याग-काल-समूहादिषु रूढत्वात्, शब्दान्तराणां योगादिसद्भावेऽपि रूढेः प्रायिकत्वाच्च रूढिपूर्वकत्वेनेत्युक्तम् । रूढ्यादि-पूर्वकत्वेनेत्याशयः । अत एव तत्वप्रकाशिकायां 'वृत्तीः' इति बहुवचनप्रयोगेनैतदभिप्राय उक्तः ।

'व्युत्पत्त्युपपत्तिः'इति वदतैव 'तदशक्यता'इत्येतदधिकरणपूर्वपक्षसाधिकेति विवृतं भवति । (व्युत्पत्त्युपपत्तिरित्युपलक्षणम् । कर्मादिफलोपलक्षण-विरोधाभावश्चेत्यपि द्रष्टव्यम् । तेन 'अशक्यतापी'ति भिन्नक्रमेणापिशब्देन समुचितः कर्मक्रमादिविलोपरूपो न्यायो विवृतो द्रष्टव्यः ।) ततश्च सर्वशब्दानां ब्रह्मपरत्वे ज्योतिष्टोमादिशब्देषु 'ज्योतिषां स्तोमः' इति विग्रहे भगवन्नामावृत्तिमात्रत्वप्रसङ्गाद्व्युत्पत्तेरप्यशक्यत्वेन कर्मादिवाचकत्वमेव ज्योतिष्टोमादिशब्दानामिति पूर्वपक्षे, शब्दार्थानामनेकत्वाज्ज्योतिरादिशब्दा-नामन्यत्र रूढ्यादिवृत्त्यभ्युपगमेन महायोगवृत्त्या परमेश्वरे शब्दप्रवृत्त्यभ्युप-गमाज्ज्योतिषां स्तोम इत्याद्यखिलशब्दव्युत्पत्त्युपपत्तेः ब्रह्मैव ज्योतिष्टोमादि-शब्दवाच्यमिति सिद्धान्त इति भावः । (अत्र पूर्वपक्षन्यायः 'कल्पनोपदेशात्' इत्यत्र सूत्रेऽविरोध इत्यनेन सूचितः । सिद्धान्ते व्युत्पत्त्यविरोधं वदता पूर्वपक्षे तदशक्यतालक्षणविरोधसूचनात् । सिद्धान्तन्यायस्तु मध्वादिवदित्यनेन भागेनोक्तो भवति । शब्दार्थानेकताया अनेनोक्तत्वात् ।) ॥ २ ॥

## नसङ्ख्योपसङ्ग्रहाधिकरणम् I-4-3

**न्या.वि.— बहुरूपत्वादधिकरणाधेयत्वादि तस्यैव युज्यते ।**

भा.बो.— ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ 'यस्मिन् पञ्च पञ्चजना आकाशश्च तिष्ठतः' इति वाक्यगतपञ्चजनादिशब्दाः पूर्वोक्तसन्देहबीजेन विष्णोर्वाचिका न वेति सन्देहे विष्णोर्वाचिका न भवन्तीति पूर्वः पक्षः । विष्णोर्वाचका इति सिद्धान्तः । एतत्पूर्वपक्षसिद्धान्तसाधकत्वेन 'परस्परविरोधश्च'इति 'बहुरूपत्वमीशस्य'इति उक्तौ न्यायौ पूर्ववदेव विवृणोति ॥ बहुरूपत्वादिति ॥ तस्यैव ईशस्यैव । इदं च 'बहुरूपत्वादि'त्यत्राप्याकर्ष-णीयम् । एवकारेण तस्यैकस्यैव न त्वन्यसाहित्येनेति वा, अतादृशविरुद्धधर्म-घटकबहुरूपत्वाद्यैश्वर्यं नान्यस्येति वा अभिप्रैति । आधेयत्वादिकमित्यादिपदेन ईशित्वाधेयत्वयोरेकत्वबहुत्वयोर्ग्रहणम् । तथा च 'एकस्मिन्नाधाराधेयत्व-योरेकत्वबहुत्वयोः, ईशस्य सर्वाधारत्वादीशत्वाधेयत्वयोश्च परस्परं विरोधः' इति पूर्वपक्षन्यायो विवृतो भवति । एवं च पञ्चजनादिशब्दानां विष्णुवाचकत्वे आधाराधेयत्वादीनां एकस्मिन् परस्परविरोधान्न विष्णोः पञ्चजनादिशब्द-वाच्यत्वमिति पूर्वपक्षे, ईशस्य बहुरूपत्वाद्विरोधाप्रसङ्गाद्विष्णोरेव पञ्चजनादिशब्द-वाच्यत्वमिति सिद्धान्त इति भावः । (अत्र पूर्वपक्षन्यायो 'न सङ्ख्योपसङ्ग्रहात्' इत्यनेन सूचितः ।) ॥ ३ ॥



## आकाशाधिकरणम् I-4-4

**न्या.वि.— व्यत्त्यपेक्षया कारणत्वं च ॥ ४ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्न्यायविवरणे प्रथमाध्यायस्य चतुर्थः पादः ॥ प्रथमाध्यायश्च समाप्तः ॥**

भा.बो.— ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ । इत्यत्र 'आत्मन आकाशः सम्भूतः' इति वाक्यगताकाशादिशब्दाः उक्तबीजेनाकाशादि-मात्रवाचका उत विष्णोरपीति सन्देहे आकाशादेरेवेति पूर्वः पक्षः । विष्णोरपीति सिद्धान्तः । एतत्पूर्वपक्षसिद्धान्तसम्बन्धित्वेन 'विरोधः कार्यतद्वतोः'इति, 'ईशस्य व्यत्त्यव्यक्तिविशेषिता'इति न्यायौ पूर्ववदेव विवृणोति ॥ व्यत्त्यपक्षयेति ॥ अव्यत्त्यपेक्षयेत्यपि ज्ञातव्यम् । चशब्दः कारणत्वसमुचयार्थो, 'युज्यत' इत्यस्यानुकर्षणार्थश्च(इति) ज्ञातव्यः । 'तस्यैवे'त्यस्योभयत्रानुवृत्तिः । 'युज्यत' इत्येतदनुकर्षः । एकस्यैव कार्यकारणभावानुपपत्तिरेतत्पूर्वपक्षसाधिकेति 'विरोधः

कार्यतद्वतो'रिति न्यायो विवृतो भवति । तथा च आकाशवाय्वादिशब्दवाच्यत्वे विष्णोः कारणत्वप्राप्तिः । कार्यकारणयोरेकत्वस्य विरोधात् । भूताकाशाद्येवाकाशादिशब्दवाच्यमिति पूर्वपक्षे, व्यक्त्यव्यक्तिविशेषत्वादीश्वरस्य कार्यकारणभावोपपत्तेर्विष्णुराकाशादिशब्दवाच्य इति सिद्धान्त इति भावः । (अत्र पूर्वपक्षन्यायः, कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वार्थक 'कारणत्वेन चे'त्यनेन सूचितः । सिद्धान्तन्यायस्तु, 'आकाशादिष्वि'त्यनेन आकाशादिषु स्थितस्य परमात्मनो व्यक्त्यव्यक्त्यपेक्षया कार्यकारण-भावमुपपादयतोक्तः ।) ॥ ४ ॥

भा.बो. — ॐ प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् ॐ इत्यधिकरणपूर्वपक्ष सिद्धान्तसम्बन्धिनौ 'स्त्रीलिङ्गत्व'मिति 'उत्पादनं स्वदेहाद्ये'ति न्यायौ भाष्य एव स्पष्टप्रतिभासत्वादत्र न विवृतौ । (अत्र पूर्वपक्षन्यायः 'साक्षाच्चोभयाम्नानात्'इति सूत्रेण हरेः स्त्रीलिङ्गशब्द-वाच्यत्वमुपपादयता सूचितः । सिद्धान्तन्यायस्तु 'योनिश्च हि गीयते' इत्यनेनोक्तः ।) ॥

**ॐ एतेन सर्वे व्याख्याताः ॐ** ॥ इत्यत्रापि अधिकरणपूर्वपक्षसिद्धान्त-सम्बन्धिनौ 'निषेधश्च'इति 'दुर्जनाव्यक्तता'इति न्यायौ भाष्य एव स्पष्टं प्रतिपादितत्वान्नेह विवृताविति । (अत्र पूर्वपक्षन्यायः 'एतेने'त्यनेन सूचितः । तेन निषेधादीनां भगवदधीनत्वोक्तेः । सिद्धान्तन्यायस्तु 'व्याख्याता' इत्यनेन सूचितः । निषेध्यलक्षणप्रवृत्तिनिमित्ताभावेऽपि हरौ दुर्जनाव्यक्तत्वादिना शून्यादिशब्दाः व्याख्याता इत्यर्थत्वात्तस्य ।) ॥ ५-७ ॥

इति श्रीमन्न्यायविवरणभावबोधे श्रीरघूत्तमयतिकृते
प्रथमाध्यायस्य चतुर्थः पादः ॥

प्रथमाध्यायश्च समाप्तः ॥



# द्वितीयाध्याये प्रथमः पादः ।

## स्मृत्यधिकरणम् II-1-1

**न्या.वि. — रुद्रादीनां सकाशाद्विष्ण्वादीनामेवाप्तत्वम् ॥ श्रुत्यनुसारित्वात् ॥ १ ॥**

भा.बो.— आनन्दमयाद्युपलक्षिताशेषवैदिकशब्दसमन्वयेन सिद्धे जगज्जन्मादिकारणत्वादौ प्रथमाध्यायार्थे युक्त्यादिविरोधपरिहारार्थमयं द्वितीयोऽध्यायः प्रवृत्तः । तत्र सर्वविरोधानां युक्तिमूलकत्वाद्युक्तेरेव प्राधान्यात्तद्विरोधपरिहारार्थोऽयं प्रथमः पादः प्रवृत्तः । एतत्पादीयाधि-करणपूर्वपक्षसिद्धान्तन्यायाः सङ्ग्रहेणानुव्याख्यायामुक्ताः ॥

**आप्तता समतादृष्टिश्रुतिसाम्यबलोद्भवाः ।**
**सर्वानुसारो लघुता विशेषाऽदर्शनाऽफले ॥**
**इष्टासिद्धिश्च नियमः पूर्वपक्षेषु युक्तयः ।**
**एता एव त्वतिबलाः सिद्धान्तस्य नियामकाः ॥** इति ।

॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ इत्यत्र मतविमत्या जगज्जन्मादिकर्तृत्वं विष्णोर्युक्तं न वेति सन्देहे न युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र 'आप्तता' इत्युक्तन्यायं पूर्वपक्षसिद्धान्तोभयसम्बन्धित्वेन विवृणोति ॥ रुद्रादीनामिति ॥ अनेन 'रुद्रादीनामाप्तत्वं- पूर्वपक्षन्यायः' इति सूचितं भवति । तथा च रुद्रादीनां जगद्धितोपदेष्टृत्वेन सर्वज्ञत्वेन वाक्यार्थज्ञानादिमत्त्वरूपाप्ततावत्त्वात्तद्विरचितानां स्मृतीनां दोषाभाव-गुणयुक्ततया प्रबलत्वेन निरवकाशत्वात्तद्विरुद्धाभि-धायकश्रुतेरप्रामाण्यस्यैव प्रसङ्गान्न तया विष्णोर्जगत्कारणत्वं सिद्धतीति पूर्वः पक्ष इति भावः । 'विष्ण्वादीनामेव'इत्येवकारेण सिद्धान्तयुक्तेः प्राबल्यमाह । तत्र हेतुमाह ॥ श्रुतीति ॥ विष्ण्वादिविरचितस्मृतीनामिति शेषः । अत्र श्रुत्यनुसारो नाम यथातथं तत्संवादस्तन्मूलत्वं चेति द्वयमपि ग्राह्यम् । अनेन

पाशुपतादिश्रुतीनां श्रुतिविरोधेनाप्यप्रामाण्यमुक्तं भवति । तथा च वैष्णवस्मृतीनां परमाप्तैर्विष्ण्वादिभिः प्रणीतत्वेन निरवकाशत्वात् पाशुपतादिस्मृतीनां तद्विरोध एवाप्रामाण्यप्रसङ्गात् सुतरां तत्साहाय्यवत्या श्रुत्या विरोधेऽप्रामाण्यप्रसङ्ग इति युक्तमेव विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'स्मृत्यनवकाशे'ति सौत्रपूर्वभागेन पाशुपतादिस्मृतीनामनवकाशमापादयता सूचितः । रुद्रादेराप्तत्वं विना तत्स्मृत्यनवकाशत्वानिर्वाहात् । अन्यथेष्टापादनं स्यात् । 'इतरेषां चानुपलब्धेः'इति द्वितीयसूत्रेण निषेध्यतया सूचितः । सिद्धान्तन्यायस्तु 'स्मृत्यनवकाशदोषप्रसङ्गाद्' इति सिद्धान्तांशेन सूचितः ।) ॥ १ ॥

## नविलक्षणत्वाधिकरणम् II-1-2

**न्या.वि. — न श्रुतेः रुद्रादिस्मृतिसाम्यं किन्तु साक्षि-प्रत्यक्षसाम्यमेव निरपेक्षत्वात् ॥ २ ॥**

भा.बो.— ॐ न विलक्षणत्वादस्य तथात्वं चशब्दात् ॐ ॥ इत्यत्र प्रमाणाप्रमाणभूतवाक्योपलब्ध्या श्रुत्यादिकं प्रमाणं न वेति सन्देहे न प्रमाणमिति पूर्वः पक्षः । प्रमाणमेवेति सिद्धान्तः । तत्र 'समता'इत्यनेनोक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न श्रुतेरिति ॥ यथाऽविद्यमानार्थाभिधायकत्वेन रुद्रादिविरचितपाशुपतादि स्मृतीनामप्रामाण्यं तथा 'कारीर्या यजेत वृष्टिकाम' इति श्रुतेः, (उपलक्षणमेतत्, पञ्चरात्रादिस्मृतेश्च) कारीर्याद्यनुष्ठानेऽपि वृष्ट्याद्यदृष्ट्याऽविद्यमानार्थाभिधायकत्वादप्रामाण्यमित्येवंरूपं श्रुतेः रुद्रादिस्मृतिसाम्यमिति न तया विष्णोर्जगत्कर्तृत्वं सिध्यतीति नेत्यर्थः । तद्धेतुत्वेन 'समता'इत्यनेनैवोक्तन्यायं सिद्धान्तसम्बन्धित्वेन विवृणोति ॥ किन्त्विति ॥ यथा साक्षिप्रत्यक्षस्य प्रामाण्यं नियतं तथा श्रुतेः पञ्चरात्रादिस्मृतेश्च प्रामाण्यं नियतम् । प्रामाण्यनियमप्रदर्शनार्थमेव साक्षीत्युक्तम् । एवकारेण रुद्रादिस्मृतिसाम्यं व्यावर्तयति । अत्र हेतुमाह ॥ निरपेक्षत्वादिति ॥ कर्तृगुणप्रमाणान्तरसंवादफलसंवादाद्यपेक्षाशून्यत्वादित्यर्थः । अयं भावः । वाक्याप्रामाण्यं वक्तृदोषनिबन्धनम् । न हि नित्ये वेदे दोषाः कल्पयितुं शक्यन्ते । अतो नित्यत्वाददोषवाक्यत्वेनान्यानपेक्षिततया साक्षिप्रत्यक्षवत्प्रामाण्यमिति ।



श्रुत्यपेक्षयैवेतत् । पञ्चरात्रादिस्मृतेस्तु श्रुतिरूपप्रमाणानुकूलत्वहेतुना सर्वमेतदुपपादनीयम् । तथा च आश्वाससम्भवात् श्रुत्याद्युक्तं जगत्कर्तृत्वं विष्णोर्युक्तमिति भावः । (अत्र पूर्वपक्षन्यायः 'तथात्वम्'इत्यनेनोक्तो भवति । सिद्धान्तन्यायश्च 'विलक्षणत्वाद्' इत्यंशेन सूचितो भवति । श्रुत्यादेर्नित्यत्वात् निर्दोषत्वादिलक्षणस्य साक्षिप्रत्यक्षसाम्यस्य सूचनात् ।) ॥ २ ॥

## अभिमान्यधिकरणम् II-1-3

**न्या.वि. — न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्य-कारणम् । अपि तु वचनादिशक्ताया देवताया मृदादिशब्द-वाच्यत्वद्योतिकैव ॥ ३ ॥**

भा.बो. — ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ इत्यत्र सन्देहतद्बीजपूर्वपक्षसिद्धान्ताः पूर्वाधिकरणवदेव द्रष्टव्याः । तत्र 'अदृष्टिः' इत्युक्तन्यायं पूर्वपक्षसम्बन्धितया तत्फलं सूचयन् विवृण्वन् प्रतिक्षिपति ॥ न मृदादीनामिति ॥ प्रत्यक्षादिसिद्धमृज्जलतेजःप्रभृतीनां वचनाद्यदृष्टिरित्यस्य वचनेक्षणाद्यदृष्टिरिति, नञ्व्यत्यासेन 'वचनेक्षणाद्यभावदृष्टिः'इति चार्थः । अनेन दृष्टान्ते साध्यसत्त्वं प्रदर्शितम् । मृदादीनामित्यनेनैव मृदादित्वं जडत्वं च साधनं प्रदर्शितम् । तथा च प्रसिद्धमृदादौ जडत्वादेर्हेतोः वक्तृत्वाद्यभावेन व्याप्तिरित्युक्तं भवति । एवं च जडत्वादिहेतोरादिकालीनमृदादिरूपपक्षधर्मत्वं च द्रष्टव्यम् । ततश्चेयं मृदादीनां वचनाद्यदृष्टिः, नञ्व्यत्यासेन व्याप्तिदृष्टित्वेन, 'सर्गाद्यकालीनमृदादिकं वक्तृत्वाद्युपेतं न भवति, जडत्वात् प्रसिद्धमृदादिवत्' इत्यनुमानोत्थापकतया 'मृदब्रवीत्' आपोऽब्रुवन्' 'ता आप ऐक्षन्त' 'तत्तेज ऐक्षत' 'ओषधयः संवदन्ते'इत्यादिश्रुतेरप्रामाण्यकारणम् । अतो विश्वासाभावान्न तया जगत्कर्तृत्वं सिध्यतीति भावः।

कथं तर्हि निरवकाशत्वेनोक्तप्रबलानुमानविरोधपरिहारः श्रुतेरित्याशयवान् पृच्छति ॥ अपि त्विति ॥ तदुत्तरत्वेन 'अदृष्टि'रित्यनेनैवोक्तन्यायं सिद्धान्तसम्बन्धितया विवृणोति ॥ वचनादीति ॥ आदिपदेनेक्षणादिकं ग्राह्यम् ।

शक्ताया इत्यनेन वक्तृत्वाद्युपयुक्तविग्रहादेरपि द्योत्यत्वं सूचयति । द्योतिकैवेत्यवधारणेन पूर्वपक्षं व्यावर्तयति । ननु मृदादीनां वचनाद्यदृष्टेः मृदब्रवीदित्यादिवेदाप्रामाण्येनाप्युपपत्तेः कथं वचनादिशक्तदेवताया-मृदादिशब्दवाच्यत्वद्योतकत्वमवधार्यते इति चेन्न । वेदस्य निर्दोषवाक्यत्वेन अप्रामाण्याभावस्य निश्चितत्वादित्यस्याप्यवकारेणोक्तत्वादिति । अत एवोक्तं तत्वप्रकाशिकायां 'अचेतनस्य वचनाद्यदृष्ट्या, निर्दोषवाक्यस्याप्रामाण्यादृष्ट्या च तत्कल्पनोपपत्तेः'इति । तथा च श्रुत्युक्तं जगत्कारणत्वं विष्णोर्युक्तमेवेति भावः । (अत्राचेतनस्य वचनाद्यदृष्ट्या निर्दोषवाक्यस्याप्रामाण्यादृष्ट्या च अभिमानिव्यपदेशं समर्थयता 'अभिमानिव्यपदेशस्तु'इति सूत्रेण अचेतनस्य वचनाद्यदृष्टिः पूर्वपक्षन्यायः, निर्दोषवाक्यस्याप्रामाण्यादृष्टिः सिद्धान्तन्यायः इति सूचितमिति ज्ञातव्यम् ।) ॥ ३ ॥

## असदधिकरणम् II-1-4

**न्या.वि.— ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति नास्ति । सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतेः साम्यम् ॥ ४ ॥**

भा.बो.— ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ इत्यत्र 'यतो वा इमानि भूतानि जायन्ते' 'असदेवेदमग्र आसीत्' इति श्रुतिविप्रतिपत्त्या जगत्कारणत्वं विष्णोर्युक्तमयुक्तं वेति सन्देहे न विष्णोर्जगत्कारणत्वं युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र 'श्रुतिसाम्यम्'इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ ईश्वरस्येति ॥ यथेश्वरस्य स्रष्टृत्वं 'यतो वा इमानि' इत्यादिना श्रूयते असतोऽपि स्रष्टृत्वं 'असदेवेदमग्र आसीत्' इत्यादिना श्रूयते । तथा च ब्रह्मासतोः स्रष्टृत्वश्रुतिसाम्यम् । अतो जगत्कारण-त्वनिश्चय इत्येतन्नास्तीत्यर्थः । कुतो न साम्यमित्यतः 'श्रुतिसाम्यम्'इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेन विवृणोति ॥ सोऽसच्छब्द इति ॥ तथा ब्रह्मशब्दः 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतिबलाद्ब्रह्मवाचकः । एवं 'तद्धा एतदासीदित्याह न ह्यासादयति कश्चन' इति श्रुतिबलात् 'असदेव'



इति श्रुतिगतासच्छब्दो ब्रह्मवाचकः इति हेतोः'असदेव'इति श्रुतेः 'यतो वा' इति श्रुत्या साम्यम् एकार्थप्रतिपादकत्वमित्यर्थः । अनेन श्रुतिसाम्यमित्येतत् निर्वचनश्रुत्योः ब्रह्मासच्छब्दयोः तदुपेतश्रुतिवाक्ययोश्च साम्यमिति त्रेधा व्याख्यातं भवति । अत्र पूर्वपक्षे 'असतोऽपि' इत्यपिपदेन 'ईश्वरस्य'इत्युक्तसमुच्चयवत् 'एतेन शिष्टा अपरिग्रहा अपि' इति सूत्रनिरसनीयजीवादेरपि समुच्चयः । सिद्धान्ते 'असच्छब्दः' इति शब्दः जीवशब्द इत्यादेरुपलक्षक इति ज्ञातव्यम् । तथा च सङ्क्षेपे 'असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन' इत्युक्तम् । तथा च श्रुत्युक्तं जगत्कारणत्वं विष्णोर्युक्तमेवेति भावः । (अत्र पूर्वपक्षन्यायो 'यतो वा' इति श्रुत्या ब्रह्मणो जगत्कारणत्ववत् 'असदेवेदम्' इति श्रुत्या असतोऽपि जगत्कारणत्वमिति प्रतिपादकेन 'असदिति चेत्' इति सूत्रभागेन सूचितः । सिद्धान्तन्यायश्च 'प्रतिषेधमात्रत्वात्' इत्यादिसूत्रे असतः कारणत्वप्रतिक्षेपात् श्रुतेर्निरर्थकत्वायोगात्' 'एतेन सर्वे व्याख्याताः' इत्युक्तन्यायेन असच्छब्दस्य ब्रह्मवाचकत्वेन 'असदेवे'ति, 'यतो वे'ति श्रुत्योः साम्यमित्यर्थसूचकैः सूचितः) ॥ ४ ॥

## भोक्त्रधिकरणम् II-1-5

**न्या.वि. — कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति इति श्रुतिबलान्नैक्यम् । किन्तु , भेदापादकमेवैतत् , 'निरञ्जनः परमं साम्यमुपैति' 'परात्परं पुरिशयं पुरुषमुपैति दिव्यम्' इति सन्निहितवाक्यबलात् । एकीभावशब्दस्तु सान्निध्येऽपि भवति । 'एकीभूता तु सा सेना पाण्डवान-भ्यवर्तते'तिवत् । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमे'ति वाक्यान्तराच्च ॥ ॥ ५ ॥**

भा.बो.— ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॐ ॥ इत्यत्र वादिविवादेन जगज्जन्मादिकर्तृत्वं परमात्मनो युक्तमयुक्तं वेति सन्देहे न युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र 'बलोद्भवः' इत्युक्तन्यायं

पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ कर्माणीति ॥ अत्र श्रुतिसाम्येत्यतो बुध्या विवेकेन श्रुतीत्यनुवर्तत इत्यभिप्रेत्य श्रुतिबलादित्युक्तम् । अनेन श्रुतिबलात् उद्भवो ज्ञानं यस्य जीवेश्वरैक्यस्येति व्यधिकरणबहुव्रीहिणा जीवेश्वरैक्यं पूर्वपक्षन्याय इति विवृतं भवति । तथा च जीवाभिन्नस्येश्वरस्य जीवेऽसम्भाव्यमानं जगत्कर्तृत्वं न युक्तमिति पूर्वपक्षो नेत्यर्थः । तर्हि श्रुतेरप्रामाण्यासम्भवात्का गतिरित्याशयेन पृच्छति ॥ किन्त्विति ॥ श्रुतिगतिमाह– भेदापादकमेवेति । एवकारेण पूर्वपक्षं व्यावर्तयति । एतत् श्रुतिवाक्यम् । अनेन श्रुतिबलोद्भवशब्दः सिद्धान्ते भेदपर इति विवृतं भवति । ननु पूर्वपक्षे एकीभवन्तीति बलमस्ति । सिद्धान्ते किं बलमित्यत आह ॥ निरञ्जन इति ॥ ननु सन्निहितैतद्वाक्यादपि 'एकीभवन्ति' इत्येकीभावशब्दस्य, वाक्यावयवत्वे-नान्तरङ्गतया प्रबलत्वेन ऐक्यापादकत्वमेव कर्माणीति वाक्यस्य न भेदापादकत्वमित्यत आह ॥ एकीभावशब्द इति ॥ सान्निध्यं स्थानैक्यम् । अपिशब्देन मत्यैक्यसमुच्चयः । स्वरूपैक्याभावेऽपीति वा । अन्तरङ्गत्वेऽपि सावकाशत्वात् नैकीभावशब्दः प्रबलः । निरञ्जनः इत्यादि सन्निहितवाक्यं तु निरवकाशत्वात्प्रबलमिति भावः । नैतत्सावकाशत्वं स्वोत्प्रेक्षितमित्याशयेन स्थानैक्यमत्यैक्याभ्यामेकीभावशब्दप्रयोगं दर्शयति ॥ एकीभूतेति ॥ एवमान्तरोपपत्तिमुक्त्वा बाह्यामपि तामाह ॥ यथोदकमिति ॥ न तु तदेव भवति । एवं विजानतो मुनेः– विजानतां मुनीनामात्माऽधिपतिर्हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति किमुतान्य इत्यर्थः । तथा च श्रुतिबलोद्भवाज्जीवेश्वरयोर्भेदाज्जीवेऽसम्भाव्यमानमपि जगत्कर्तृत्वं विष्णौ युक्तमेवेति भावः । (अत्र पूर्वपक्षन्यायः कर्माणीति श्रुतिबलात् ऐक्यसिद्धिरिति वदता 'भोक्त्रापत्तेरविभागश्चेत्' इत्यंशेनोक्तः । सिद्धान्तन्यायश्च यथोदकमि(त्यनेन)ति सूचितो भवति ।) ॥ ५ ॥

## आरम्भणाधिकरणम् II-1-6

न्या.वि. — न लौकिकसर्वकार्यानुसारेणाकर्तृतन्त्रत्वं सर्वा-नुसारः । किं तर्हि, तद्वैलक्षण्येन सर्वकर्तृविलक्षणसर्वशक्तित्वमेवा-



शेषयुक्ति–श्रुत्यनुसारि । 'एष सर्वेश्वरः' इत्यादिश्रुतेः । युक्तिमात्राच्छतियुक्ता हि युक्तिर्बलवती ॥ ६ ॥

भा.बो.— ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ पटादिसृष्टेः स्वतन्त्रसाधनसापेक्षत्वदर्शनात् ईश्वरसृष्टेरलौकिकत्वात् जगत्सृष्टादिकं किं स्वतन्त्रसाधनसापेक्षं न वेति सन्देहे स्वतन्त्रसाधनसापेक्षमिति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'सर्वानुसारः' इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न लौकिकेति ॥ व्याप्तिनिश्चयाय व्यभिचारनिरासार्थं सर्वेति कार्यविशेषणम् । पक्षव्यावृत्त्यर्थं प्रमाणप्रदर्शनार्थं च लौकिकेति । अकर्तृतन्त्रत्वं उपादानादिभूतप्रधानादेः कर्तृभूतपरमात्मतन्त्रत्वाभावः –इत्येवंरूपसर्वानुसारः । तथा च लौकिकसर्वकार्यवत् कार्यत्वेनेशकृतकार्यमपि स्वतन्त्रसाधनसापेक्षमिति पूर्वपक्षो नेत्यर्थः । ईश्वरसृष्टेः कीदृक्त्वं तर्हीति पृच्छति ॥ किं तर्हीति ॥ तदुत्तरत्वेन सर्वानुसारः इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेन विवृणोति ॥ तद्वैलक्षण्येनेति ॥ तेभ्यो लौकिकसर्वकार्येभ्यो वैलक्षण्येन स्वतन्त्रसाधन-रहितत्वाख्येन सर्वकार्यकर्तुः परमात्मनः स्वव्यतिरिक्तकुविन्दकुलालादिसर्वकर्तृभ्यः विलक्षणं साधनान्तरनियमनादिसर्वशक्तित्वमेव अशेषयुक्तिश्रुत्यनुसारि सर्वयुक्तिश्रुतिसिद्धमित्यर्थः । प्राधान्यात् श्रुतिमुदाहरति ॥ सर्वेश्वर इति ॥

**एवं परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।**
**साधनानां साधनत्वं यतः किं तस्य साधनैः ॥**

इत्यादिस्मृत्युक्ताः परतन्त्रत्व-स्वतन्त्रत्वसाधनसत्ता-प्रदत्वादियुक्तयोऽपि द्रष्टव्याः । ननु पूर्वपक्षयुक्तेरपि व्याप्तिपक्षधर्मतोपेतत्वेन प्राबल्यात्कथमेवं निर्णय इत्यत आह ॥ युक्तिमात्रादिति ॥ अङ्गीकृत्य चेदमुदितम् । बाधितविषयत्वेन पूर्वपक्षयुक्तेर्युक्तित्वमेव नास्तीति ज्ञातव्यम् । एवं च सर्वश्रुति युक्त्यनुसारादीशकृतकार्यं न स्वतन्त्रसाधनापेक्षमिति भावः । (अत्र पूर्वपक्षन्यायो 'यथा प्राणादिः' इत्यनेन निषेध्यतया सूचितः । सिद्धान्तन्यायश्च स्वरूप-सामर्थ्यादेव स्रष्टृत्वमनेकश्रुतियुक्त्यनुसारीत्यर्थकेन 'आरम्भणशब्दादिभ्यः' इत्यनेन सूचितः ।) ॥ ६ ॥

## इतरव्यपदेशाधिकरणम् II-1-7

**न्या.वि.— न चेश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवम् । श्रुतिसिद्धत्वेनाकल्पनात् । अश्रुतजीव-कर्तृत्वाङ्गीकारे गौरवमेव । तदभावे सिद्धान्ते लघुता । 'नान्यः कर्ता, स हि स्वतन्त्रः, परमात्परमो हरिः' इत्यादेश्च । अभेदपक्षस्तु निराकृतः । श्रुत्यनुभवविरोधाच्च ॥ ७ ॥**

भा.बो.— ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ इत्यत्र श्रुतिविप्रतिपत्त्या श्रुत्यनुभवविप्रतिपत्त्या वा जगत्कर्तृत्वादि विष्णोर्युक्तमयुक्तं वेति संशये न युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र 'लघुता'इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न चेश्वरत्यागेनेति ॥ तदनङ्गीकारेणेत्यर्थः । जीवस्यैव, महदादिकार्य इति शेषः । यद्वा ईश्वरस्य घटादिकर्तृत्वत्यागेनेत्यर्थः । जीवस्यैव घटादिकार्य इति शेषः । इदमुक्तं भवति । नेश्वरस्य महदादिसकलकार्यकर्तृत्वं युक्तम् । अनुपलब्धिबाधितमीश्वरं कल्पयित्वा तस्य सर्वकर्तृत्वकल्पने कल्पनागौरवापत्तेः । ईश्वरानङ्गीकारेण जीवस्यैव सर्वकर्तृत्वाङ्गीकारे कल्पनालाघवम् । धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात् । जीवस्य घटादौ कर्तृत्वस्य क्लृप्तत्वाच्च । अथ देवादिवददृश्यत्वशक्तियोगादनुपलभ्यमानोऽपीश्वरः प्रमाणेनाङ्गीक्रियत इति चेत् , तथापि तस्य महदादिकार्य एव कर्तृत्वमस्तु न घटादावपि । उभयत्र कल्पने गौरवापत्तेः । घटादौ तु ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवम् इति । एतच्च नेत्यर्थः । कुतो नेत्यतो 'लघुता' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेन विवृणोति ॥ श्रुतिसिद्धत्वेनेति ॥ ईश्वरस्य तस्य घटादिसर्वकार्यकर्तृत्वस्य चेत्यर्थः । कल्पनानेकत्वे खलु कल्पनागौरवम् । ईश्वरस्य, तस्य घटादिसर्वकार्यकर्तृत्वस्य च श्रुतिसिद्धत्वेन कल्पनाया एवाभावान्नोभयपक्षोक्तगौरवमिति भावः । तर्हि पक्षद्वयस्यापि प्रामाणिकत्वेन कथं निर्णय इत्यत आह ॥ अश्रुतेति ॥ अङ्गीकार एवेति सम्बन्धः । जीवस्य अनन्याधीनतया महदादौ घटादौ वा कर्तृत्वस्य अश्रुतत्वेन तदङ्गीकार एव



गौरवम् । न तु ईश्वरस्य तदङ्गीकार इत्यर्थः । तथा च विपरीतलाघवमिति वदन् न्यायं विवृणोति ॥ तदभाव इति ॥ ईश्वरकर्तृत्वस्य श्रुतिसिद्धत्वेनाश्रुतत्वाभावात्सिद्धान्ते ईश्वरकर्तृत्वपक्षे लघुतेत्यर्थः । न केवलं जीवकर्तृत्वस्याश्रुतत्वं तदभावश्च श्रुत इत्यभिप्रेत्य तां श्रुतिमुदाहरति ॥ नान्य इति ॥ स हीत्यादिश्रुतिशेषोदाहरणं श्रुतिसिद्धत्वेनेत्येतदुपपादनार्थम् । अन्यो जीवः स्वातन्त्र्येण सर्वकार्याणां न कर्ता, हि यस्मात् तस्मात्प्रसिद्धो हरिः स्वतन्त्रः अन्याप्रेर्यतया सर्वकार्यकर्ता । परमात्परमः उत्तमादुत्तम इति श्रुत्यर्थः ।

ननु श्रुतिरीश्वरस्य स्वातन्त्र्येण कर्तृत्वं प्रतिपादयति । अहं करोमीत्याद्यनुभवस्तु जीवस्य तथाकर्तृत्वं गोचरयति । न च स्वतन्त्रवस्तुद्वय-मङ्गीकर्तुं शक्यम् । तथात्वे दोषस्य वक्ष्यमाणत्वात् । अतः श्रुत्यनुभवान्य-थानुपपत्त्या जीवेश्वरयोरभेदाङ्गीकारे जीवपक्षस्यापि श्रौतत्वान्न कल्पनागौरवमित्यत आह ॥ अभेदपक्षस्त्विति ॥ निराकृतो भोक्त्रापत्तेरि-त्यादाविति भावः । अनुभवस्य पराधीनाल्पकर्तृत्वविषयत्वं भ्रान्तित्वं वेति भावः । प्रमाणान्तरविरोधाच्च नाभेदपक्षो युक्त इत्याह ॥ श्रुतीति ॥ एवं च प्रामाणिकपक्षस्यैव लघुतया ईश्वरकर्तृत्वस्य श्रुतिसिद्धत्वात् युक्तमेवेश्वरस्य कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'उपसंहारदर्शनान्नेति चेत्' इत्यनेन जीवकर्तृत्वे प्रत्यक्षसद्भावोक्त्या सूचितः । सिद्धान्तन्यायश्च 'देवादिवदपि' इति सूत्रे श्रुतेर्योग्यानुपलम्भबाधपरिहारेण श्रुतिसिद्धान्तत्वसूचनात्सूचितः ।) ॥७॥

## शब्दमूलत्वाधिकरणम् II-1-8

**न्या.वि. — शब्दैकसमधिगम्यत्व-सर्वशक्तित्वादीनां विशेषाणामदर्शनं जीवे । न जीवाद्विशेषादर्शनं परमेश्वरे । विशेषश्रुतेरेव ॥ ८ ॥**

भा.बो.— ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ इत्यत्र ईश्वरस्य जगत्कर्तृत्वे तत्र तत्रोक्तन्यायैः कृत्स्नप्रसक्त्यादिदोषैश्च जगत्स्रष्टृत्वं विष्णोर्युक्तमयुक्तं वेति सन्देहे न युक्तमिति पूर्वः पक्षः। युक्तमेवेति सिद्धान्तः । तत्र 'विशेषादर्शनम्'

इत्युक्तन्यायं सिद्धान्तसम्बन्धित्वेन तावद्विवृणोति ॥ शब्दैकसमधिगम्यत्वेति ॥ शब्दैकसमधिगम्यत्वं 'शब्दमूलत्वात्' इति सूत्रोक्तम् । सर्वशक्तित्वादयस्तु 'आत्मनि चैवं विचित्राश्च हि' इत्यादिसूत्रोक्ताः । एतेषां विशेषाणां जीवेऽदर्शनम् । अत्र दर्शनशब्दो ज्ञानमात्रपरः । ज्ञापकश्रुत्यादिरूपप्रमाणाभावादिति भावः । सिद्धान्तफलत्वात् पूर्वपक्षनिषेधस्येदानीं विशेषादर्शनम्' इत्युक्तमेव न्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न जीवादिति ॥ परमेश्वरे जीवाद्विशेषाणां जीवव्यावर्तकानां तत्राविद्यमानानामिति यावत् कृत्स्नप्रसक्त्यादिदोषनिरासकानामदर्शनं नेत्यर्थः । अदर्शनाभावो दर्शनम् । तत्केन प्रमाणेनेत्याकाङ्क्षायामाह ॥ विशेषश्रुतेरेवेति ॥ 'नावेदविन्मनुते बृहन्तं' 'विचित्रशक्तिः पुरुषः पुराणः' इत्यादिश्रुतेः शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां जीवविशेषाणां दर्शनिनादर्शनं नेत्यर्थः । एवकारेण श्रुतेः प्रसिद्धतामाह । एवं च जीववदीश्वरेऽपि कृत्स्नप्रसक्त्यादिदोषनिरासकविशेषाणामदर्शनाज्जगत्कर्तृत्वायोग इति पूर्वपक्षे, ईश्वरगतशब्दैकसमधिगम्यत्वादिविशेषाणां जीवेऽदर्शनान्न जीवसाम्यमिति ईश्वरस्य जगत्कर्तृत्वं युक्तमेवेति सिद्धान्त इति भावः । (अत्र पूर्वपक्षन्यायः 'शब्दमूलत्वात्' 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रद्वयेन (पूर्वपक्ष) निरसनीयतया सूचितो भवति । सिद्धान्तन्यायश्च अवधारणार्थेन 'आत्मनि च' इति चशब्देन 'स्वपक्षदोषाच्च' इत्यनेन च युक्तिविरोधपरिहारोपयोगिनो विशेषस्य जीवेऽदर्शनोक्त्या सूचितः ।) ॥ ८ ॥

## नप्रयोजनाधिकरणम् II-1-9

**न्या.वि. — न च प्रयोजनाभावोऽकर्तृत्वे कारणम् । अशेषकर्तृत्वापादकश्च । फलापेक्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिः, इतरस्य पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वम् ॥ ९ ॥**

भा.बो.— ॐ नप्रयोजनवत्त्वात् ॐ ॥ इत्यत्र जगत्कर्तृत्वोपपादनाफलाभ्यां जगत्कर्तृत्वमीश्वरस्य युक्तमयुक्तं वेति सन्देहे न युक्तमिति पूर्वः पक्षः । युक्तमेवेति



सिद्धान्तः । तत्र 'अफलम्' इत्युक्तन्यायं तत्फलप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रयोजनाभाव इति ॥ तथा च प्रयोजनाभावे प्रवृत्तेरेवादृष्टत्वेन तस्याकर्तृत्वे कारणत्वात् । यदीश्वरस्य 'नप्रयोजनवत्त्वात्' इति प्रयोजनाभावोऽ(भ्यु)प्युपेयते तर्हि कर्तृत्त्वमेव न स्यात्, कुतः सर्वकर्तृत्वमिति भावः । कुत इत्याकाङ्क्षायां 'अफलम्' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धितया विवृणोति ॥ अशेषेति ॥ चो हेतौ । यस्मात्प्रयोजनाभावः अशेषकर्तृत्वापादकः तस्मादकर्तृत्वे कारणं न । न केवलं प्रयोजनाभावोऽकर्तृत्वे (न) कारणम् किन्तु अशेषकर्तृत्वापादकसमुच्चयवाचकश्चशब्दः कथं फलाभावोऽशेषकर्तृत्वापादक इत्यत आह ॥ फलापेक्षिणस्त्विति ॥ इतरस्य फलापेक्षारहितस्य । कर्तृत्वं अशेषकर्तृत्वम् । इदमुक्तं भवति ईश्वरः अशेषकर्ता अनन्तकर्तृत्वात् व्यतिरेकेण देवदत्तवत् इति । न च स्वरूपासिद्धिः । ईश्वरोऽनन्तशक्तिः पूर्णत्वात् इति तत्साधनात् । न च व्याप्त्यभावः । अपूर्णस्य सर्वकर्तृत्वादिशक्त्यभावदर्शनेन व्यतिरेकव्याप्तिसत्त्वात् । न च तत्राप्यसिद्धिः । फलापेक्षिणोऽपूर्णत्वनियमेन, फलापेक्षाशून्यचेतनत्वपूर्णत्वस्यापि साधनात् इति प्रयोजनाभावः परम्परयाऽशेषकर्तृत्वस्यापादक इति । भगवतः प्रयोजनानुद्देशे कीदृशी प्रवृत्तिरिति प्रश्नपरिहाराय लीलयैवेत्युक्तम् । न हि लीला प्रयोजनाय भवति । अफलरूपन्यायस्य पूर्वोत्तरपक्षफलसम्बन्धो मूल एव स्पष्टः । (अत्र पूर्वपक्षसिद्धान्तन्यायावनेनैव सूत्रेणोक्तौ ।) ॥ ९ ॥

## वैषम्यनैर्घृण्याधिकरणम् II-1-10

**न्या.वि.— नेशस्य पूर्णत्वासिद्धिः । कर्मसापेक्षत्वेऽनीशत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति । कर्मणोऽपि तदधीनत्वम् । तथापि तदनुसारेण फलदानमित्यनङ्गीकार एवेष्टश्रुतिप्रामाण्यासिद्धिः ॥ ॥ १० ॥**

भा.बो.— ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ इत्यत्र जगत्कर्तृत्वादिविषये श्रुत्या वैषम्यादिविरोधदर्शनेन च जगज्जन्मादिकर्तृत्वमीश्वरस्य युक्तमयुक्तं वेति सन्देहे न युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र

'इष्टासिद्धिः'इत्युक्तन्यायं पूर्वपक्षसम्बन्धितया विवृण्वन् प्रतिक्षिपति ॥ नेशस्येति ॥ पूर्णत्वं पूर्णकर्तृत्वम् । अशेषकर्तृत्वमिति यावत् । युक्तिविरोधादिति भावः । अनेन इष्टस्य- अशेषकर्तृत्वस्य असिद्धिरिति न्यायो विवृतो भवति । कुत ईशस्याशेषकर्तृत्वं युक्तिविरुद्धमिति चेत् 'ईश्वरः किं तत्प्राणिकर्मसापेक्षः सन् सुखदुःखादि सर्वं करोति उत तन्निरपेक्ष इति विकल्पं मनसि निधाय आद्ये दोषमाह ॥ कर्मसापेक्षत्व इति ॥ अनीशत्वं अस्वातन्त्र्यं स्यादिति शेषः । नियमेन कर्मसापेक्षतया वर्तमानस्य स्वातन्त्र्यायोगादिति भावः । द्वितीयं निराह ॥ कर्मानपेक्षत्व इति ॥ अत्र निर्निमित्तं प्राणिनां सुखदुःखादिदानेन वैषम्यनैर्घृण्ये स्यातामित्यपि ग्राह्यम् । यदीश्वरः कर्मानपेक्षया फलादिप्रदाता तर्हि ज्योतिष्टोमयागादेः स्वर्गादिसाधनत्वं न स्यात् । तदभावेऽपि भगवतस्तत्कार्यत्वायोगात् । तथा च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतेरप्रामाण्यं स्यादित्यर्थः । अतो नेत्यतः 'इष्टासिद्धिः' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धितया विवरितुं कर्मसापेक्षत्वमभ्युपेत्य तत्रोक्तदोषपरिहारार्थमाह ॥ कर्मणोऽपीति ॥ न केवलं फलादेः किन्तु कर्मणोऽपि इत्यपिशब्दार्थः ।

तथा चापेक्ष्यकर्मणोऽपि स्वाधीनत्वात् नानीशत्वमिति भावः । ननु स्वनियम्यापेक्षा नामानपेक्षैव । तथा च 'किमीश्वरः कर्ता कर्म अपेक्ष्य करोतीत्यङ्गीकार्यम्' इत्यतो न्यायं विवृणोति ॥ तथापीति ॥ यद्यपि कर्मणस्तदधीनत्वेन तदपेक्षा नामानपेक्षैवेति शेषः । तदनुसारेण कर्मानुसारेण, फलस्य शुभाशुभलक्षणस्येश्वरकर्तृकदानमित्यनङ्गीकार एव इष्टस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिप्रामाण्यस्यासिद्धिः न तु तथाङ्गीकार इत्यर्थः । तथा चेश्वरस्य कर्मानपेक्षत्वे श्रुतिप्रामाण्यरूपेष्टासिद्धेः कर्मापेक्षा । ततश्च न वैषम्यादिदोषः । अपेक्ष्यकर्मणश्चेशाधीनत्वात् नेशत्वासिद्धिदोषोऽपीति युक्तमीश्वरस्य सर्वजगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायो 'वैषम्यनैर्घृण्येन' इत्यनेन सूचितः । यद्वा 'उपपद्यते चाप्युपलभ्यते च' इति सूत्रेण पक्षद्वयेऽपि दोषपरिहारात् 'कर्मापेक्षत्वे अस्वातन्त्र्यम्, कर्मनिरपेक्षत्वे वैषम्याद्यापातः' इति सूचनेन सूचितो भवति । सिद्धान्तन्यायश्च 'उपलभ्यते च'इत्यनेन वेदाप्रामाण्यकारणस्य वैषम्यादेरुपलभ्यमानत्वादिति प्रतिपादयता सूचितः ।) ॥

॥ १० ॥



## सर्वधर्मोपपत्त्यधिकरणम् II-1-11

**न्या.वि.— सर्वचेतना अपूर्णगुणा इति नियमो न । स्वतन्त्रस्य पूर्णगुणत्वनियमात् ।**

**अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः**
**पूर्णो हरिर्यः स्वतन्त्रः सदैव ।**
**न हि स्वतन्त्रोऽपूर्णतां कामयीत**
**पूर्णो यदि स्यादस्वतन्त्रः कुतः सः ॥**

**इति श्रुतेः ॥ ११ ॥**

**इति द्वितीयाध्यायस्य प्रथमः पादः ॥**

**भा.बो.—** ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ इत्यत्र समन्वयाध्यायान्यत्रादर्शनाभ्यां पूर्णत्वं विष्णोर्युक्तमयुक्तं वेति सन्देहे न युक्तमिति पूर्वः पक्षः । युक्तमेवेति सिद्धान्तः । तत्र 'नियमः' इत्युक्तन्यायं पूर्वपक्षसम्बन्धितया विवृण्वन् प्रतिक्षिपति ॥ सर्वचेतना इति ॥ अत एव व्यभिचारशङ्कापरिहारार्थं सर्वेत्युक्तम् । तथा चेश्वरस्यापि चेतनत्वेनापूर्णतया अवश्यम्भावित्वान्न जगत्कर्तृत्वं युक्तमिति पूर्वपक्षो नेत्यर्थः । कुतो नेत्यतो 'नियमः' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेन विवृणोति ॥ स्वतन्त्रस्येति ॥ स्वतन्त्रस्य पूर्णगुणत्वेन व्याप्तिरित्यर्थः । अनेन पूर्वपक्ष्युक्तानुमाने अस्वातन्त्र्यमुपाधिरित्यपि सूचितम् । नन्वेवं सत्प्रतिपक्षत्वेनानिर्णयः स्यादिति चेन्न । अस्मदुक्तानुमानस्य श्रुतिसिद्धव्याप्तिपक्षधर्मतोपेतत्वेन प्रबलत्वादिति भावेन तत्प्रतिपादकश्रुतिमुदाहरति ॥ अपूर्णोऽयमिति ॥ अनेनानुमाने व्यतिरेकव्याप्तिः उपाधावन्वयव्याप्तिरुक्ता भवति । 'अयम्'इ(त्यनेन)ति अपूर्णत्वस्य जीवेऽनुभवसिद्धतामाह । एवं व्याप्तिमुक्त्वा पक्षधर्मताप्रदर्शनपूर्वकं प्रतिज्ञां दर्शयति । अनेन 'हरिः पूर्णः स्वतन्त्रत्वात्' इति प्रयोग उक्तो भवति । यच्छब्देन हरेः पूर्णत्वस्वातन्त्र्ययोः श्रुतिप्रसिद्धिमाह । सदैवे(त्यनेन)ति स्वातन्त्र्यादेरनागन्तुकत्वमुक्तम् । अपूर्णस्यास्वातन्त्र्येण व्याप्त्यनङ्गीकारे बाधकमाह ॥ न हीति ॥ हि यस्मात् स्वतन्त्रः स्वस्यापूर्णतां

न कामयीत ततः पूर्ण इत्यर्थः । इदानीमस्वातन्त्र्यस्यापूर्णत्वेन व्याप्तिमुपपादयति ॥ पूर्ण इति ॥ सः जीव इति सम्बन्धेन, (न) कुतोऽपीत्यर्थः । समस्तव्याप्त्यभिप्रायेणेदम् । एवं स्वातन्त्र्यस्य पूर्णत्वेन नियमात् विष्णौ च स्वातन्त्र्यात् युक्तं सर्वजगज्जन्मादिकारणत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'उपपत्तेः'इत्यनेन, सर्वचेतनानामपूर्णत्वनियमात्परमात्मनोऽपि चेतनत्वात्पूर्णत्वस्यानुपपत्तिरिति सूचितः । सिद्धान्तन्यायश्च श्रुतिसूचकेन समुच्चायकचशब्देन स्वातन्त्र्यादिलक्षणयुक्तेः सूचनात् स्वातन्त्र्यादिमतः पूर्णत्वनियम इति सूचनेन सूचितः । तदुक्तं तत्वप्रकाशिकायाम् 'न केवलं युक्त्या सर्वधर्मोपपत्तिः किन्तु 'गुणाः श्रुताः' इति सर्वधर्मोपपादकश्रुतेश्चेति भावः' इति ।) ॥ ११ ॥

इति द्वितीयाध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः

**न्या.वि. — उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायाः, तद्विरोधिनोऽन्ये, इति प्रसिद्धा एव ॥ १ ॥**

**इति द्वितीयाऽध्यायस्य द्वितीयः पादः ॥**

भा.बो.— ॥ समयपादीयाधिकरणानां सर्वेषामनुव्याख्याने व्याख्याततत्वान्न तत्पूर्वपक्षसिद्धान्तन्यायाः सङ्ग्रहेणोक्ताः । यद्यपि सङ्ग्रहेणोक्त्यभावेऽपि न्यायानां प्रथमाध्यायगताद्यपादद्वये विवरणं कृतम् तथाप्येतत्पादीयाधिकरणेषु न्यायानां स्पष्टमुक्तत्वाद्विवरणं न कृतमित्याशयेनाह ॥ उक्तविरोधिन इति ॥ उक्तजगत्कारणत्वादौ विरोधिनो विरुद्धार्थसाधकाः तत्तत्समयसिद्धाः साङ्ख्यचार्वाकादिसिद्धान्तोत्प्रेक्षिताः पूर्वपक्षन्यायाः । तद्विरोधिनः तत्साध्यविरुद्धार्थसाधका अन्ये सिद्धान्तन्यायाः । इतिशब्दः प्रकारार्थः । ततश्चोक्तविरोधित्वेन प्रकारेण पूर्वपक्षन्यायाः, तद्विरोधित्वेन प्रकारेण सिद्धान्तन्यायाः अनुव्याख्याने प्रकर्षेण सिद्धा एव न तु विवरणमर्हन्तीत्यर्थः ॥ इति श्रीमन्न्यायविवरणे भावबोधे द्वितीयाध्यायस्य द्वितीयः पादः ॥



## अथ तृतीयः पादः

## वियदधिकरणम् II-3-1

**न्या.वि. — न च वियत उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवाग्विरोधोऽस्ति । व्यवस्थाऽयोगात् । अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वं, उत्पत्तिवचनानामसितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्था ।**

**आकाशो नीलिमोदेति न प्रदेशः कथञ्चन ।**<br>
**अभावो हि प्रदेशस्य न ह्यत्राभाव इत्यपि ॥**

**इति पैङ्गिश्रुतेः ॥ १ ॥**

भा.बो.— विष्णोर्जगत्कारणत्वादौ अधिभूतादिविषयश्रुतीनां परस्परविरोधपरिहारायायं तृतीयः पादः प्रवृत्तः । एतत्पादीयाधिकरणपूर्वपक्षसिद्धान्तन्यायाः अनुव्याख्यायां सङ्ग्रहेणोक्ताः—

अनुभूतियुक्तिबहुवाग्वैलोम्यं च ततोऽधिकम् ।<br>
एतत्सर्वं सतः साम्यं द्वारवैयर्थ्यमेव च ॥<br>
दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः ।<br>
प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता ॥<br>
लोकदृष्ट्यनुसारित्वं जीवसाम्यमनादिता ।<br>
तत्र तत्र परिज्ञानं गुणसाम्यश्रुती तथा ॥<br>
उत्पत्तिमत्त्वं स्वगुणाननुभूत्यल्पकल्पने ।<br>
नानाश्रुतिश्च वैचित्र्यं युक्तयः पूर्वपक्षगाः ॥<br>
व्यवस्थाऽनुपपत्तिश्च स्वातन्त्र्यमनुसारिता ।<br>
मुख्यता शक्तिमत्त्वं च वैरूप्यं सर्वसङ्ग्रहः ॥<br>
गत्यादिरीशशक्तिश्च सर्वमानविरोधिता ।

**अभीष्टासिद्धिसुव्यक्ती शास्त्रसिद्धिर्विपर्ययः ॥**
**विशेषकारणं चेति सिद्धान्तस्यैव साधिकाः ॥** इति ।

ॐ न वियदश्रुतेः ॐ ॥ इत्यत्र 'आत्मन आकाशः सम्भूतः, अनादिर्वाऽयमाकाशः' इति श्रुतिविप्रतिपत्त्या आकाश उत्पत्तिमान्न वेति सन्देहे वियदनुत्पत्तिमदेवेति पूर्वः पक्षः। नेति सिद्धान्तः । तत्र 'अनुभूतियुक्तिबहुवाग्वैलोम्यम्'- इत्युक्तपूर्वपक्षन्यायं, अर्थात्तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च वियत इति ॥ उत्पत्तिमत्त्वे अङ्गीकृत इति शेषः । अवकाशरूपाकाशस्यानुत्पत्तेः साक्ष्यनुभवसिद्धत्वेन तदुत्पत्तेरनुभव-विरोधः। तथा 'वियत् अनुत्पत्तिमत् विभुत्वात् सम्प्रतिपन्नवत्' इत्यादियुक्तिविरोधः । 'अनादिर्वाऽयमाकाशः' इत्यादिबहुवाग्विरोधश्च । एवं चानुभूत्यादिविरोधेनाकाशस्योत्पत्त्यभावात्, तदुत्पत्तिप्रतिपादकश्रुति वज्जगत्कर्तृत्वश्रुतेरप्यप्रामाण्यात् न विष्णोर्जगत्कारणत्वं युक्तमिति नेत्यर्थः । तद्धेतुत्वेन 'व्यवस्था'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ व्यवस्थेति ॥ उत्पत्तिश्रुतेराकाशपदार्थसर्वविषयत्वसम्भवेन मुख्यार्थत्वं, अनादिश्रुतेः कतिपयाकाशपदार्थविषयत्वेन गौणत्वमिति व्यवस्थाऽयोगादित्यर्थः । तामेव व्यवस्थां दर्शयति ॥ अवकाशमात्रस्येति ॥ दिग्रूपावकाशस्याव्याकृतात्मकत्वेन कूटस्थत्वात् 'अनादिर्वा' इत्यनुत्पत्तिवचनानां तद्रूपावकाशपदार्थैकदेशविषयत्व-मित्यनादित्वस्यामुख्यत्वम् । 'आत्मन आकाशः सम्भूतः' इत्याद्युत्पत्तिवचनानां असितवर्णत्वेनानुमितोत्पत्तिमद्भूताकाशतदभिमानिविनायकोत्पत्तिमज्जड-शरीरविषयत्वम् । तथा, अवकाशतदभिमानिभूततदभिमानिरूपाणां चतुर्णामप्याकाशपदवाच्यानां पराधीनविशेषवत्त्वमात्ररूपोत्पत्तिविषयत्वं चेति व्यवस्था । अनेन 'आत्मन आकाशः सम्भूतः' इत्याद्युत्पत्तिप्रति-पादकवाक्यगताकाशशब्दस्य सर्वविषयत्वम्, सम्भूतादिशब्दोक्तोत्पत्तेरुक्तप्रकारेण सर्वत्राकाशशब्दवाच्ये सत्त्वात् । 'अनादिर्वा अयमाकाशः' इत्यादिवाक्यगताकाशशब्दस्य सर्वाकाशपदवाच्यविषयत्वं भूते कथमप्यसम्भवात् तस्य स्वरूपेणोत्पत्तेरित्युक्तं भवति । भूताकाशस्यासितवर्णत्वे श्रुतिमाह ॥



आकाश इति ॥ नीलिमा नीलरूपविशिष्टः । प्रदेशः अवकाशः । कथञ्चन स्वरूपेण विकृतरूपेण वा नोदेतीति सम्बन्धः । अनुत्पत्तौ युक्तिमाह ॥ अभावो हीति ॥ यस्य चोत्पत्तिः तस्य प्रागभावेन भाव्यम् । न च प्रदेशस्य प्रागभावः सम्भवति । अनुत्पन्नप्रतीतिकत्वादिति भावः । तत्कथमित्यत आह ॥ न ह्यत्रेति ॥ अपिपदेन नञोऽनुकर्षः । अभावो हि प्रतीयमानः 'अस्य, अत्र' इति प्रतीयते न तु निराश्रयः । न च प्रदेशाभावस्याश्रयप्रतीतिरुपपद्यते, यदेव 'अत्रे'ति निर्दिश्यते तस्यैव प्रदेशत्वादित्यर्थः ॥ तथा चाकाशोत्पत्त्यनुत्पत्तिश्रुत्योरुक्तमार्गेण व्यवस्थोपपत्तेः प्रामाण्यसम्भवाद्युक्तं हरेर्वियदादिजगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'गौण्यसम्भवात्' इति सूत्रेणानुत्पत्तिश्रुतिगतिं वदतोपलक्षणत्वेन सूचितः । सिद्धान्तन्यायश्चानेनैव सूत्रेणोक्तः ।) ॥ १ ॥

## मातरिश्वाधिकरणम् II-3-2

**न्या.वि. — ततोऽधिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति, न वायोरेव मुख्यानुत्पत्त्यनुपपत्तेः । पराधीनविशेषवत्त्वमात्रं ह्युत्पत्तिः । तदभावे उभयोः स्वातन्त्र्यं विरुद्धमेव । सर्वोत्तमत्वानुपपत्तेः । उभयोरपि पराधीनत्वप्राप्ते-श्चान्योन्यानुरोधे, अननुरोधे तु न सर्वैश्वर्यम् । ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेशः । अनुपपत्तिस्तु तत्प्रापिका । पराधीनविशेषवत्त्वमात्रं त्वव्याकृताकाशस्य तदभिमानिप्रकृतेश्च सममेव ॥ २ ॥**

भा.बो.— ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ इत्यत्र 'तासां वायुर्वत्सः सा वा एषा देवताऽनादिर्योऽयं पवते' इति विगानेन मुख्यो वायुरुत्पत्तिमान्न वेति सन्देहे अनुत्पत्तिमानेवेति पूर्वः पक्षः । मुख्यवायुरुत्पत्तिमानेवेति सिद्धान्तः । तत्र 'ततोऽधिकमेतत्सर्वम्' इत्युक्तपूर्वपक्षन्यायमर्थात्तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ ततोऽधिकमिति ॥ एतच्छब्दपरामृष्टं दर्शयति– अनुभूत्यादिविरुद्धमिति । आदिपदेन युक्तिबहुवाग्ग्रहणम् । अधिकमित्यनेनाभ्यधिकाशङ्कामाह । तथा हि ।

न चाकाशानुत्पत्तिश्रुतेर्गौणार्थत्वम् । तथा सत्याकाशादिवन्मुख्यवायोरुत्पत्त्यनुत्पत्तिमत्त्वे, तेजोऽबन्नाकाशादीनां 'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति तान्यनित्यानि' इत्यनित्यत्वमुक्त्वा, 'वायुर्वा व नित्यः' इति वायोर्नित्यत्वोक्तिरयुक्ता स्यात् ।

किं च वायोरनुत्पत्तेर्गौणत्वं नाम स्वरूपमात्रविषयत्वमिति वक्तव्यम् । तथा सति तस्य सर्वचेतनसाम्येन 'अथ चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति तान्यचेतनानि'इति तेजःप्रभृतीनामचेतनत्वमुक्त्वा, 'वायुर्वा व चेतनः' इत्युक्तं वायोरतिशयचेतनत्वमयुक्तं स्यात् । 'कुविदङ्ग'इति ऋगुक्तसर्वदेवोपास्यता च नोत्पत्तिमत्त्वे घटते । तस्योदयनिम्लोचाभावे च कुतो जन्मसम्भवः । एवंविधस्य चोत्पत्त्यङ्गीकारेऽनुभूत्यादिव्याकोपः स्यात् । (ततोऽधिकमेतत्सर्वं अनुभूतियुक्तिबहुवाग्विरुद्धं, वायुत्पत्तावङ्गीकृतायामित्यर्थः ।) युक्तयश्च 'वायुर्नोत्पत्तिमान् परमनित्यत्वात्, परमचेतनत्वात्, इत्यादिरूपा द्रष्टव्याः । बहुवाचश्च भाष्योदाहृता एव । एवं चानुभूत्यादिविरोधेन मुख्यवायोरुत्पत्त्यभावाद् वायूत्पत्तिप्रतिपादकश्रुतिवज्जगत्कर्तृत्वश्रुतेरप्रामाण्यान्न विष्णोर्जगत्कारणत्वं युक्तमिति नेत्यर्थः । कुतो नेत्यतस्तद्धेतुत्वेन 'अनुपपत्तिः'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ वायोरेवेति ॥ अनुत्पत्तिश्रुतेर्ब्रह्मण्येव मुख्यत्वाद्वायोरनित्यत्वव्याप्तविभक्तशक्तिमत्त्वाचा-नुत्पत्तेरनुपपत्तेरित्यर्थः । एवशब्दस्य प्राबल्यादिद्योतकत्वेनानुपपत्तेरेवेति सम्बन्धः । यद्वा वायोरनुत्पत्तिं वदन् पृष्टव्यः 'किं वायुरेवानादिः ईश्वरोऽपि वा'इति । तत्राद्यं पक्षं दूषयति ॥ वायोरेवेति ॥ ईश्वरानादित्वप्रतिपादकप्रमाणविरोधेन वायोरेवेत्यन्ययोगव्यवच्छेदेनानुत्पत्तेरनुपपत्तेरित्यर्थः । द्वितीये द्वयोरपि स्वातन्त्र्यापात इति दूषणमभिप्रेत्य तदुपपादयति ॥ पराधीनेति ॥ हि यस्माद्वायोरुत्पत्तिः पराधीनविशेषलाभरूपा विवक्षिता, अतः तदभावे पराधीनविशेषलाभाभावे उभयोः वायुविष्ण्वोः स्वातन्त्र्यं स्यात् । न च तदस्त्विति वाच्यमित्याह ॥ विरुद्धमेवेति ॥ उभयोः स्वातन्त्र्यं विरुद्धमेव । न तु केनापि प्रकारेण घटनीयमित्यर्थः । तत्कथमित्यत आह ॥ सर्वेति ॥ उभयोरिति अत्रापि सम्बध्यते । तदपि कथमित्यत आह ॥ उभयोरपीति ॥ वायुविष्ण्वोरन्योन्यानुरोधे, उभयोरपि पराधीनत्वप्राप्तेः । अननुरोधे



तु वायोरीश्वरनियामकत्वाभावादीश्वरस्य च वायुनियामकत्वाभावान्न तयोः सर्वैश्वर्यमित्यर्थः ।

ननूक्ताभ्यधिकाशङ्कानिरासाय 'एतेने'ति 'गौण्यसम्भवात्' इत्युक्तव्यवस्थाया अतिदेशो न युज्यते । आकाशाद्यपेक्षया स्वरूपातिरिक्तस्यानादित्वश्रुतिविषयस्यानादिभूतस्याभावात् । स्वरूपविषयत्वेन व्यवस्थायाः पूर्वमेव सिद्धत्वादित्यत आह ॥ ज्ञानाविस्मृत्येति ॥ ज्ञानस्य वृत्तिरूपस्य स्वरूपातिरिक्तस्य अविस्मृत्याऽपरिलोपेन वायावपि शरीराद्युत्पत्तिस्वरूपानुत्पत्तिभ्यामाकाशपदवाच्यदेवतासमानयोगक्षेमे प्रवाहतो वृत्तिज्ञानं स्वरूपातिरिक्तमादाय व्यवस्था सम्भवतीति हेतोः 'एतेने''त्यतिदेशो युक्त इत्यर्थः । नन्वेवं तर्हि अनुव्याख्याने व्यवस्थां विहाय कथमनुपपत्तिः सिद्धान्तयुक्तित्वेनोक्ता । 'एतेने'ति सूत्रा(न)नुगुणत्वादित्याह ॥ अनुपपत्तिस्त्विति ॥ तत्प्रापिका व्यवस्थाप्रापिका । साक्षात्सिद्धान्तयुक्तिर्व्यवस्थैव । तदभ्युपगमे 'अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः' इत्याद्यवगतोत्पत्त्यनुत्पत्तिविशिष्टे वायौ मुख्यानुत्पत्त्यनुपपत्तिः कारणत्वेनोक्तेत्यर्थः । नन्वनुपपत्तेर्व्यवस्थाप्रापकत्वं पूर्वाधिकरणेऽपि वक्तव्यमेव । तत्र मुख्यवायोरिव भूताकाशाभिमानिनो देहोत्पत्तिमत्त्वेन मुख्यानुत्पत्त्यनुपपत्तावपि अव्याकृताकाशचित्प्रकृत्योः कथं मुख्यानुत्पत्त्यनुपपत्तिः, देहोत्पत्तेरप्यभावादित्याह ॥ पराधीनविशेषेति ॥ मुख्यवायौ पराधीनविशेषवत्त्वमपि मुख्यानुत्पत्त्यनुपपत्तिहेतुत्वेन विवक्षितम् । तन्मात्रं तु देहाद्युत्पत्तिरहितयोरवकाशचित्प्रकृत्योश्च सममेव । तादृशोत्पत्तिमादाय मुख्यानुत्पत्त्यनुपपत्तेः सत्त्वाद्युक्तमनुपपत्तेर्व्यवस्थाप्रापकत्वं पूर्वाधिकरणेऽपीति भावः । यद्वा ननु किमनेन 'वायूत्पत्तिश्रुतिः शरीरोत्पत्तिविषया, अनुत्पत्तिश्रुतिर्ज्ञानविपरिलोपविषया' इति व्यवस्थाङ्गीकारेण । वायूत्पत्तिश्रुतिः पराधीनविशेषवत्त्वमात्रविषया । तदनुत्पत्तिश्रुतिस्तु देहाद्यनुत्पत्तिविषयेति व्यवस्था कुतो नाङ्गीकार्या । पूर्वाधिकरणसिद्धव्यवस्थाविलक्षणत्वादित्यत आह ॥ पराधीनेति ॥ भवेदेवं यदीयं व्यवस्था पूर्वाधिकरणसिद्धव्यवस्थाविलक्षणा स्यात् । न चैवम् । भूताकाशतदभिमानिनोरिव पूर्वाधिकरणेऽव्याकृताकाशतदभिमानिनोरपि वियच्छब्देन

विवक्षितत्वात् । तयोश्च शरीरादितोऽप्युत्पत्त्यसम्भवेन पराधीनविशेषवत्त्वमात्रेण व्यवस्थाया वाच्यत्वेन, अस्याः पूर्वाधिकरणसिद्धव्यवस्थावैलक्षण्याभावात् । अत एवोक्तं तदधिकरणीयतत्त्वप्रकाशिकायाम्– 'आकाशपदेन भूतावकाशतद्देवता उच्यन्त' इति । 'अवकाशतदभिमानिनोरप्यस्ति पराधीनविशेषलाभ-लक्षणोत्पत्तिः'इति च । अत एतदधिकरणावैयर्थ्यायोक्तविधैव व्यवस्थाऽङ्गीका(र्या)यैवेति भावः । एवं च वायोर्मुख्यानुत्पत्त्यनुपपत्तेः पूर्ववद्व्यवस्थया श्रुतिप्रामाण्यसम्भवाद्युक्तं विष्णोर्जगत्कारणत्वमिति हृदयम् । (अत्र पूर्वपक्षसिद्धान्तन्यायावप्यतिदेशेनैव पूर्वाधिकरणवत्सूचितौ ज्ञातव्यौ ।) ॥२॥

## असम्भवाधिकरणम् II-3-3

**न्या.वि. — न च सतः पराधीनविशेषवत्त्वम् स्वातन्त्र्यात् ॥ ३ ॥**

भा.बो. — ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ इत्यत्र 'असतः सदजायत, सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिविगानेन ब्रह्म उत्पत्तिमन्न वेति संशये उत्पत्तिमदेवेति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र (सदेव सोम्येदमग्र आसीदित्यादिश्रुतिविगानेन) 'सतः साम्यम्'इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च सत इति ॥ अस्त्येव सतः परब्रह्मण उत्पत्तिः । न चानादित्वश्रुतिविरोधः । अनादित्वेऽप्यनादिभूतयोरपि नभोनभस्वतोरुत्पत्तिवत् स्वरूपलाभाद्युत्पत्त्यसम्भवेऽपि पराधीनविशेषवत्त्वरूपोत्पत्त्यङ्गीकारात् । तथा चोत्पत्तिमत्त्वेनाकाशादिना साम्याद्ब्रह्मणो न जगत्कर्तृत्वमिति पूर्वः पक्षो नेत्यर्थः । कुतो नेत्यतस्तद्धेतुत्वेन 'स्वातन्त्र्यम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ स्वातन्त्र्यादिति ॥ गगनपवनादीनामस्वातन्त्र्यादेवोत्पत्तिरिति भावः । एवं च ब्रह्मणः स्वातन्त्र्येणानुत्पत्त्युपपत्तेर्नोत्पत्तिमत्वेनाकाशादिसाम्यमिति युक्तं जगत्कारणत्वमिति हृदयम् । (अत्र पूर्वपक्षन्याय एवशब्दार्थेन तुशब्देन सूचितः । सिद्धान्तन्यायश्च 'सतः' इत्यनेन सूचितः) ॥ ३ ॥



## तेजोऽधिकरणम् II-3-4

**न्या.वि. — न च विष्णोरेव तेजस उत्पत्तौ द्वारकारण-वैयर्थ्यम् । द्वारमनुसृत्यैव विष्णोः प्रवृत्तेः ॥ ४ ॥**

भा.बो. — ॐ तेजोऽतस्तथा ह्याह ॐ ॥ इत्यत्र 'वायोरग्निस्तत्ते-जोऽसृजत' इति श्रुतिविगानेन तेजःकिं वायोर्जायते ब्रह्मणो वेति सन्देहे वायोरिति पूर्वः पक्षः । ब्रह्मण इति सिद्धान्तः । तत्र 'द्वारवैयर्थ्यम्'इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च विष्णोरिति ॥ एवेति वाय्वपेक्षाराहित्यमुच्यते । तथा चायमर्थः । 'वायोरग्निः'इति श्रुतिप्रामाण्यनिर्वाहार्थं तेजसो वायुद्वारा परमात्मजातत्वं वदन् प्रष्टव्यः ब्रह्म किं वायुद्वारमन्तरेण स्रष्टुमीष्टे न वेति । द्वितीये ब्रह्मवायूभयकारणत्वापत्त्याऽऽद्य एव पक्षः स्वीकार्यः । तत्र च विष्णोरेव वाय्वनपेक्षया तेजस उत्पत्तावङ्गीकृतायां वायुरूपद्वारकारणवैयर्थ्यम् । तथा च द्वारवैयर्थ्यात्तेजसो वायुब्रह्मोभयकारणकत्वमिति न ब्रह्मण एव प्राधान्येन कर्तृत्वमिति नेत्यर्थः । कुतो नेत्यतस्तद्धेतुत्वेन 'अनुसारिता'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ द्वारमिति ॥ तेज आदिकं प्रति वाय्वादेरकारणत्वेऽपि वाय्वादिद्वारमनुसृत्यैव विष्णोरिच्छयैव लीलया तेजःप्रभृतिसर्जनार्थं प्रवृत्तेः श्रुत्यादिसिद्धत्वादित्यर्थः । एवं (च) शक्तत्वेऽपि ब्रह्मणः श्रुतिसिद्धत्वेन द्वारानुसाराद्युक्तं सर्वकर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायो वायुद्वारा तेजसो ब्रह्मजातत्वमिति सिद्धान्तयता द्वारवैयर्थ्यादुभयकारणत्वमिति सूचनेन सूचितः । सिद्धान्तन्यायश्च 'तथा ह्याह'इत्यनेन विष्णोर्वायुद्वारा तेजसो जनकत्वम-शेषश्रुत्यनुसारि इत्यर्थकेन सूचितः) ॥ ४ ॥

## अबधिकरणम् II-3-5

**न्या.वि. — न च तेजस एवापामुत्पत्त्यङ्गीकारे घर्मात्स्वेदादिदृष्टयनुसारित्वमिति गुणाधिक्यम् । मुख्यार्थ-परित्यागप्राप्तेः ॥ ५ ॥**

भा.बो.— ॐ आपः ॐ ॥ इत्यत्र 'अग्नेरापस्तदपोऽसृजत' इति श्रुतिविगानेन, तेजसोऽनन्तरं प्राप्ता आपः किं तेजसो जायन्ते ब्रह्मणो वेति सन्देहे तेजस इति पूर्वः पक्षः । ब्रह्मण इति सिद्धान्तः । तत्र 'दृष्टयुक्त्यनुसारित्वम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च तेजस इति ॥ द्वारकारणत्वव्यावृत्त्यर्थ एवशब्दः । ततश्च द्वारतामन्तरेण स्वातन्त्र्येण च तेजस अपामुत्पत्त्यङ्गीकारे घर्मात्स्वेदादि-दृष्टेस्तदनुसारित्वं दृष्टिमूलिका या 'विमता आपस्तेजसो जायन्ते अस्वात् स्वेदादिवत्' इति युक्तिः तदनुसारित्वमिति हेतोः 'अग्नेरापः' इति श्रुतेरुक्तयुक्ति-युक्तत्वगुणयोगेन आधिक्यं प्राबल्यम् । यद्वा इतिशब्दः प्रकारार्थः । तदनुसारित्वमित्येवंरूपगुणेनाधिक्यं प्राबल्यमित्यर्थः । 'युक्त्यनुसारित्वम्'इति वक्तव्ये यत् 'दृष्टी' इत्युक्तमनुव्याख्याने तदभ्यधिकाशङ्काप्रदर्शनार्थम् । अन्यथा 'तेजोऽतस्तथा ह्याह'इत्यनेन न्यायेन 'अग्नेरापः' इति श्रुतेरपि निर्णीतत्वान्न पूर्वपक्षोत्थापकत्वम् । अत एव दृष्टेरेव प्राधान्यादत्र दृष्टयनुसारित्वमित्येवोक्तम् । अन्यथा दृष्टयुक्त्यनुसारित्वमित्यवक्ष्यत् ।

तथा च भाष्यम्– 'घर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः' इति । ततश्च दृष्टयुक्त्यनुसारित्वादपां साक्षात्तेजोजातत्वान्न ब्रह्मणः सर्वकारणत्वमिति च नेत्यर्थः । कुतो नेत्यतस्तद्धेतुत्वेन 'मुख्यता'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ मुख्यार्थेति ॥ 'इदं सर्वमसृजत' इति, 'कर्ता सर्वस्य वै विष्णुः' इति श्रुतिस्मृतिगतसर्वशब्दस्यासङ्कुचितसर्वरूपमुख्यार्थपरित्यागप्राप्तेरित्यर्थः । उक्तयुक्त्युपेतायाः 'अग्नेरापः' इति श्रुतेस्तेजसो द्वारकारणत्वप्रतिपादकत्वेन सावकाशत्वमिति भावः । ततश्च 'इदं सर्वमसृजत'इत्यादिवाक्यगतसर्वशब्दस्य सकलपदार्थग्रहणमुख्यताला भात्सर्वजगत्कर्तृत्वं विष्णोर्युक्तमिति भावः । (अत्र पूर्वपक्षन्यायोऽप्शब्दप्रयोगादेव सूचितः । अथवा पृथगधिकरणारम्भात्सूचितः । सिद्धान्तन्यायश्च पूर्वसूत्रात् 'अतस्तथा ह्याह'' इत्यनुवृत्तौ सत्यां 'स इदं सर्वमसृजत' इति श्रुतिप्रदर्शकेन 'तथा ह्याह'इत्यनेन सूचितः ।) ॥ ५ ॥



## पृथिव्यधिकरणम् II-3-6

**न्या.वि. — न चाद्भ्यो वाऽन्नमुत्पद्यत इत्याद्युक्त-प्रसिद्धान्नाख्यान्यार्थाविरोधेन प्रसिद्धान्ननामस्वीकारे बहुवाक्यानु-वर्तितेति गुणः । अन्नशब्दस्य प्रयोगबाहुल्यात्पृथिव्यामपि शक्तिमत्त्वात् । अधिकारादीनां निरवकाशत्वाच्च । बहुवाक्यानु-रोधोऽप्यत्रैवेति ॥ ६ ॥**

भा.बो.— ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ इत्यत्र 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेम हीति । ता अन्नमसृजन्त, 'अद्भ्यः पृथिवी' इति श्रुतिविगानेनाऽऽपः किमन्नस्य द्वारकारणमुत पृथिव्या इति सन्देहे नापः पृथिव्याः कारणं, नाप्यन्नस्येति पूर्वः पक्षः । पृथिव्याः कारणमिति सिद्धान्तः । तत्र 'उक्ताऽन्यार्थाऽविरोधतः, प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता'इत्युक्तं पूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चाद्भ्य इति ॥ इत्यादीत्यादिपदेन 'ता अन्नमसृजन्त' 'ता आपोऽन्नमसृजन्त' इत्यादिग्रहणम् । नाऽपः पृथिव्याः कारणं, नाप्यन्नस्य । उदाहृतश्रुतिद्वयस्य परस्परविरुद्धत्वात् । निरवकाशत्वेनान्यतरग्रहणायोगात् । न च 'ता अन्नमसृजन्त'इत्यादि श्रुतिगतान्नशब्दस्य पृथिव्यर्थत्वेन तस्याः सावकाशत्वम् । 'ता अन्नमसृजन्त' इत्यादिश्रुत्युक्तः प्रसिद्धरूपोऽन्नाख्यः पृथिवीसकाशादन्योऽर्थो यः तदविरोधेन तद्वाचकत्वेनेति यावत्, प्रसिद्धस्य अन्नमित्यस्य नाम्नः स्वीकारे, 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति' 'अद्भ्य एव तध्द्यन्नाद्यं जायते' इत्यादिबहुवाक्यानुवर्तिता । तथा 'अन्नमशितं त्रेधा विधीयते' इति प्रसिद्धान्नलिङ्गप्रतिपादकबहुवाक्यानुवर्तितेति गुणलाभादित्यर्थः । उपलक्षणमेतत् । नापि पृथिवीशब्दस्यान्नार्थत्वेन 'अद्भ्यः पृथिवी'इति श्रुतेः सावकाशता । अद्भ्य एवान्नसृष्टयङ्गीकारे, 'अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्' इति विरोधादित्यपि ग्राह्यम् । एवं च श्रुतिद्वयस्याप्रामाण्यान्न तत्समन्वयेन विष्णोर्जगत्कारणत्वं सिध्यतीति नेति भावः । कुतो नेत्यतस्तद्धेतुत्वेन 'शक्तिमत्त्वम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अन्नशब्दस्येति ॥

'पृथिव्यामपि'इति पूर्वोत्तराभ्यां सम्बध्यते । अपिपदेनान्नसमुच्चयः । 'आपश्च पृथिवी चान्नम्' 'पृथिवी वा अन्नम्' 'ता आपोऽन्नमसृजन्त' 'पृथिवी वा अन्नम्' इत्यादिश्रुतावन्न इव पृथिव्यामप्यन्नशब्दस्य प्रयोगबाहुल्यात् । प्रयोगबाहुल्यस्य शक्तिकल्पकत्वात्पृथिव्यामन्नशब्दस्य शक्तिमत्त्वात् 'ता अन्नमसृजन्त' इत्यत्रान्नशब्देन पृथिव्येवोच्यत इत्यपां पृथिवीं प्रत्येव द्वारकारणत्वमित्यर्थः । अनेन 'शब्दान्तरादिभ्यः' इति सौत्रो हेतुर्विवृतः ।

अन्नशब्दस्योभयत्रापि शक्तिसद्भावाविशेषात्पृथिवी(मात्र)परत्वे को विशेषहेतुरित्यतः 'अधिकाररूप'इति सूत्रोक्तं 'शक्तिमत्त्वं च'इत्यनुव्याख्यान-गतचशब्दोक्तन्यायमाह ॥ अधिकारादीनामिति ॥ 'तत्तेजोऽसृजत, तदपोऽसृजत । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादेरस्य प्रकरणस्य भूताधिकारत्वात्, आदिपदोक्तस्य कार्ष्ण्यप्राचुर्यरूपपृथिवीलिङ्गादेः प्रसिद्धान्ने निरवकाशत्वाच्च 'ता अन्नमसृजन्त' इत्यत्रान्नशब्देन पृथिव्येवोच्यत इत्यर्थः । ननु पूर्वपक्षे बहुवाक्यानुवर्तित्वस्योक्तत्वादनिर्णय इत्यत आह ॥ बहुवाक्येति ॥ अत्र सिद्धान्ते। एवेति वदता पूर्वपक्षे बहुवाक्यानुवर्तित्वस्यासिद्धिरुक्ता भवति । 'अद्भ्यो वाऽन्नमुत्पद्यते'इत्यादावन्नशब्दस्य पृथिवीपरत्वात् । 'तदेव भूयिष्ठमन्नं भवति' 'अन्नमशितं' इत्यादौ पार्थिवार्थत्वात् । एवं चान्नशब्दस्य पृथिव्यामपि शक्तिमत्त्वेनान्नश्रुतेः पृथिवीपरत्वेन श्रुतिविरोधाभावादपां पृथिवीकारणत्वसिद्धेर्युक्तं विष्णोर्वस्त्वन्तरद्वारा जगत्कारणत्वमिति भावः । (अत्र पूर्वपक्षन्यायः शब्दान्तरेति आपश्च पृथिवी चान्नमित्यादिपृथिवीशब्दोपेतश्रुत्यन्तरपरशब्दप्रयोगेन, तस्माद्यत्र क चेत्यादिपृथिवीशब्दरहितश्रुतिव्यावर्तनात्सूचितः । सिद्धान्तन्यायश्च 'आपश्च पृथिवी चान्नम्' इत्यभिधानरूपश्रुतिपरान्तरशब्देन सूचितः । चशब्दसूचितस्त्वधिकाररूपे'त्यनेनोक्तः ॥ ६ ॥

## तदभिध्यानाधिकरणम् II-3-7

न्या.वि. — न च रुद्रादीनां लयकारित्वाङ्गीकारे, पितुरन्यस्यैव मारकत्वदृष्टेर्लोकदृष्टचनुसारित्वमिति गुणः ।



**लोकपितृवैरूप्याद्विष्णोर्यथा- वाक्यमङ्गीकारोपपत्तेः । अन्यथा 'न विष्णोरन्यो विलयकृन्न विष्णोरन्यो विमुक्तिदः' इत्यादिश्रुति-विरोधात् । रुद्रस्य तु कचित्संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वात् ॥ ७ ॥**

भा.बो.— ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ इत्यत्र 'यत्प्रयन्त्यभिसंविशन्ति, रुद्रो माविशान्तकः' इति श्रुतिविगानेनाधिभूताधिदैवानि किं भगवता लीयन्ते रुद्रेण वेति सन्देहे रुद्रेणैवेति पूर्वः पक्षः । भगवतैवेति सिद्धान्तः । तत्र 'लोकदृष्टचनुसारित्वम्' इत्युक्तपूर्वपक्षन्यायमर्थात्तत्साध्यप्रदर्शन-पूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च रुद्रादीनामिति ॥ आदिपदेन यमादीनां ग्रहणम् ॥ पितुरन्यस्येति ॥ विष्णोस्तु जगदुत्पादकत्वेन पितृत्वादिति भावः ॥ लोकेति ॥ लोके च पितुरन्यस्यैव मारकत्वदर्शनादित्यर्थः । एवं च लोकदृष्टचनुसारित्वात्सर्जकविष्णोरन्यस्यैव रुद्रादेः संहर्तृत्वेऽङ्गीकार्ये विष्णोः संहारकत्वादिश्रुतेरप्रामाण्यान्न जगत्कर्तृत्वादि तस्य युक्तमिति नेत्यर्थः । तद्धेतुत्वेन 'वैरूप्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ लोकेति ॥ विष्णोर्ममत्वादिदोषराहित्येन लोकपितृविलक्षणत्वात् । 'इदं सर्वं विलोपयति, 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः' इत्यादि श्रुतिस्मृतिवाक्यमनतिक्रम्य विष्णोरेव संहर्तृत्वाङ्गीकारोपपत्तेरित्यर्थः । ननु रुद्रादीनामेव संहर्तृत्वाङ्गीकारे बाधकाभावात्किमिति लोकवैलक्षण्यं विष्णोः कल्पनीयमित्यत आह ॥ अन्यथेति ॥ मुक्तेरपि लयविशेषत्वात् 'न विष्णोरन्यो विमुक्तिदः' इति श्रुतिशेषोदाहरणम् । यद्वक्ष्यति 'विमुक्तिलययोर्विशेषाभावाच्च' इति । ननु 'रुद्रो मा विशान्तकः' इत्यादिवाक्यानां का गतिरित्यत आह ॥ रुद्रस्य त्विति ॥ रुद्रादीनां त्वित्यर्थः । संहारद्वारत्वमपि न सर्वत्रेति कचिदित्युक्तम् । ततश्च विष्णोर्लोकपितृवैरूप्याद्युक्तं तस्यैकस्यैव सृष्टिसंहारादिकर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'सः' इत्युत्पादकत्वेन प्रकृतपरमात्मपरामर्शिना तस्य संहारकर्तृत्वोक्त्या सूचितो भवति । सिद्धान्तन्यायश्च एवकारार्थकतुशब्देनोत्पादकस्यैव संहर्तृत्वोक्त्या सूचितः । अथवा विशेषार्थकतुशब्देनोक्तः ।) ॥ ७ ॥

## विपर्ययाधिकरणम् II-3-8

**न्या.वि. — न च लोकानुसारित्वम् । 'क्रमादुत्पद्यते, क्रमाद्विलीयते, क्रमेणैवोत्पत्तिर्विलयश्च, क्रमेणैवास्योत्पत्तिविलयौ' इत्यादिलोकानु- सारिबहुवाक्यानुरोधश्च यथोत्पत्तिलये ।**

**द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा ।**
**सृष्टावन्यो लये चाऽन्य इति वेदविदो विदुः ॥**

**इति श्रुतेः क्रमवाक्यस्य सावकाशत्वाद्वैरूप्यं**
**बहुप्रकारत्वं क्रमस्य ॥ ८ ॥**

भा.बो.— ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ इत्यत्र 'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते' 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्चैव' इति श्रुतिविगानेन अधिभूतादीनि किमुत्पत्तिक्रमानुसारेण लीयन्ते व्युत्क्रमेण वेति सन्देहे उत्पत्तिक्रमेणैव (लयः) इति पूर्वः पक्षः । व्युत्क्रमेणैवेति सिद्धान्तः । तत्र 'लोकदृष्टचनुसारित्वम्'इति प्रागुक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च लोकेति ॥ लोके उत्पत्तिक्रमानुसारेणैव लयस्य प्रायिकत्वादिति भावः । न्यायं प्रकारान्तरेण विवृणोति ॥ क्रमादुत्पद्यत इति ॥ अत एव 'लोकानुसारी'त्युक्तम् । यथोत्पत्तिलये उत्पत्तिक्रमेणैव लये । एवं च लोकदृष्टचनुसारिक्रमश्रुतिविरोधेन व्युत्क्रमश्रुतेर-प्रामाण्यवत् श्रुत्यन्तरस्याप्यप्रामाण्यान्न विष्णोर्जगत्कारणत्वं युक्तमिति च नेत्यर्थः । तद्धेतुत्वेन 'वैरूप्यम्'इत्युक्तमेव सिद्धान्तन्यायं पूर्वपक्ष्युदाहृतश्रुतेः श्रुत्यैव सावकाशत्वं वदन् विवृणोति ॥ द्विविध इति ॥

अत्र 'वैरूप्यम्'इत्यनुवादेन 'बहुप्रकारत्वम्'इति व्याख्यातम् । अनेकप्रकारत्वमित्यर्थः । अनेन रूपशब्दः प्रकारवचनः । द्वि(वि)विधं अनुक्रमत्वव्युत्क्रमत्वाख्यं रूपं यस्येति विरूपम् । तस्य भावो वैरूप्यमिति न्यायो विवृतो भवति । अधिभूतादि, उत्पत्तिक्रमवैपरीत्येनैव लीयते । न च लोकानुसारिबहुवाक्यविरोधः । क्रमस्य व्युत्क्रमानुक्रमभेदेनानेकप्रकारत्वात्



'क्रमाद्विलीयते' इति वाक्यस्य व्युत्क्रमपरत्वेन सावकाशत्वात् । न च क्रमानेकत्वे मानाभावः । 'द्विविधः' इति श्रुतेः इत्यर्थः । कुतो नेत्यतस्तावत्पूर्वपक्ष्युदाहृतश्रुतेः सावकाशत्वं प्रदर्शयति ॥ द्विविध इति ॥ व्युत्क्रमानुक्रमभेदेन क्रमस्य द्वैविध्यात् क्रमवाक्यस्य व्युत्क्रमपरत्वेन सावकाशत्वात् यथोत्पत्तिविलये न बहुवाक्यानुरोध इत्यर्थः । सावकाशत्वप्रकारमेव व्यञ्जयन्न्यायमनूद्य विवृणोति ॥ वैरूप्यमिति ॥ बहुप्रकारत्वं अनेकप्रकारत्वमित्यर्थः । एवं च क्रमस्य व्युत्क्रमानुक्रमभेदेन वैरूप्याद्व्युत्क्रमेण लयेऽपि श्रुतिप्रामाण्योपपत्तेर्युक्तं विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'उपपद्यते च' इत्यनेन निषेध्यतया सूचितः । सिद्धान्तन्यायश्च 'उपपद्यते' इत्यनेनैव सूचितो भवति ।) ॥ ८ ॥

## अन्तराधिकरणम् II-3-9

**न्या.वि. — न च केषाञ्चित्क्रमाल्लयः, केषाञ्चिद्व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्टचनुसारादन्तरा विज्ञानमनसी व्युत्क्रमः । 'सर्वं वा एतत्क्रमादुत्पद्यते, व्युत्क्रमाल्लीयते' इति श्रुतौ, सर्वस्यापि व्युत्क्रमाल्लयसङ्ग्रहात् । तल्लिङ्गस्य तु चराचरव्यपाश्रयविज्ञानादि-विषयत्वेनैव सावकाशत्वात् ॥ ९ ॥**

भा.बो. — ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥ इत्यत्र 'अक्षरात्परमादेव' इति श्रुत्या, 'प्राणान्मनो मनसश्च विज्ञानं, यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति लिङ्गदर्शनेन च किमधिभूतादीनि सर्वाण्युत्पत्तिक्रमवैपरीत्येन लीयन्ते कानिचित्क्रमेणापि वेति सन्देहे सर्वेषां न व्युत्क्रमेण लयः किन्तु केषांचित्क्रमात् केषाञ्चिद्व्युत्क्रमादिति पूर्वः पक्षः । सर्वेषां व्युत्क्रमेणैव लय इति सिद्धान्तः । अत्र लोकदृष्टचनुसारित्वमिति प्रागुक्तमेव न्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च केषाञ्चिदिति ॥ लोकदृष्टचनुसारादिति ॥ लोके पितुः पुरतः पुत्रस्य, पुत्रस्य पुरतः पितुर्मरणदर्शनादित्यर्थः । व्युत्क्रम इत्यनेन 'अन्तरा विज्ञानमनसी क्रमेण' इत्यत्र क्रमशब्दो व्युत्क्रमपर इत्युक्तं भवति । नन्वेतत् सम्भावकमेवोक्तं न निश्चायकमिति

चेत्सत्यम् । तथापि 'प्राणान्मनो मनसश्च विज्ञानम्' इति मनस्तत्त्वोत्पन्नस्य विज्ञानतत्त्वस्य 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति मनस्तत्त्वलयानन्तरमेव लयोक्त्यन्यथानुपपत्तिरूपात् 'तल्लिङ्गात्' इति सूत्रांशोक्तलिङ्गादेव विज्ञानमनसोर्यथोत्पत्तिविलयनिश्चय इति । एवं च लोकदृष्टचनुसारिलिङ्गदर्शनेन विरुद्धायाः श्रुतेरप्रामाण्यान्न विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन 'सर्वसङ्ग्रहः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ सर्वं वा एतदिति ॥ ननूक्तलिङ्गबलात् 'सर्वं वा' इति श्रुतिगतसर्वशब्दस्यार्थसङ्कोचः क्रियत इत्यत आह ॥ तल्लिङ्गस्य त्विति ॥ तस्य विज्ञानमनसोर्यथोत्पत्तिविलयसाधकस्येत्यर्थः। आदिपदेन मनोग्रहणम् । श्रुतिद्वयान्यथानुपपत्तिर्हि लिङ्गम् । तत्र यद्यपि 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्येव तत्त्वलयक्रमः तथापि नायमुत्पत्तिक्रमः । न च 'मनसश्च विज्ञानं' इति श्रुतिविरोधः । तस्याः चराचरविषयकवृत्तिरूपज्ञानस्य मनोरूपेन्द्रियजन्यत्व-प्रतिपादकत्वेनैव सावकाशत्वादित्यर्थः । एवं च 'सर्वं वा' इति श्रुतौ लीयमानस्य सर्वस्यापि सङ्ग्रहाद्व्युत्क्रमेणैव लयसिद्धेः श्रुतिप्रामाण्याद्युक्तं विष्णोर्जगत्कारणत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'अन्तरा विज्ञानमनसी क्रमेण' इति केषाञ्चित्क्रमाल्लयस्य केषाञ्चिद्व्युत्कमाल्लयस्योक्त्या सूचितः । अन्यथा 'विज्ञानमनसोः क्रमेण' इत्यवक्ष्यत् । सिद्धान्तन्यायश्च 'अविशेषात्' इत्यनेन सूचितः ।) ॥ ९ ॥

## आत्माधिकरणम् II-3-10

न्या.वि. — न च चेतनत्वेन साम्याद्विष्णोरपि देहलयः । 'सर्वे वा एते चिदात्मानो ब्रह्मन् लयमनुप्राप्य विष्णोरुदरे संविशन्ति' इति तस्योदरे सर्वसङ्ग्रहणादिश्रुतिभ्यो नित्यत्वाव-गमात्तद्देहस्य । अश्रुतत्वाच्चान्यथा ॥ १० ॥

भा.बो.— ॐ नात्मा श्रुतेर्नित्यत्वाच्च ॐ ॥ इत्यत्र 'नित्यो नित्यानां, अन्तस्तमसि निलीनः' इति श्रुतिविरोधेन परमात्मा लीयते न वेति सन्देहे



लीयत इति पूर्वः पक्षः । न लीयत इति सिद्धान्तः । तत्र 'जीवसाम्यम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च चेतनत्वेनेति ॥ साम्यात् जीवेनेति शेषः । विष्णोरित्यत्रापि सम्बध्यते । तथा च 'विष्णुर्लयवान् चेतनत्वाज्जीववत्, इत्युक्तं भवति । स्वरूपलयस्या-सम्भवाद्देहेत्युक्तम् । (अनेन सौत्रः प्रतिज्ञांशो 'नात्मा देहतो लीयते' इति व्याख्यातो भवति ।) न च 'असम्भवस्तु सतोऽनुपपत्तेः' इत्यत्र स्वातन्त्र्यहेतुना परमात्मनोऽनुत्पत्तेरुक्तत्वात्कथं लय इति वाच्यम् । स्वतन्त्रस्य लीलया विग्रहग्रहणपरित्यागोपपत्त्याऽधिकाशङ्कयैतदधिकरणोत्थानादिति भावः । एवं च चेतनत्वेन जीवसाम्येनेश्वरस्य लयसिद्धेः प्रबललयश्रुतिविरोधेन नित्यत्वश्रुतेरप्रामाण्यात् न विष्णोर्जगत्कारणत्वं युक्तमिति च नेत्यर्थः । कुतो नेत्यतः तत्र साक्षाद्धेतुप्रदर्शनपूर्वकं तत्साधकत्वेन 'सर्वसङ्ग्रहः' इत्युक्तमेव सिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ सर्वे वा इति ॥ ब्रह्मन् ब्रह्मणि, चतुर्मुखे ॥ सर्वसङ्ग्रहणादीति ॥ प्रलये विष्णोरुदरे सर्वेषामपि चिदात्मनां सङ्गृहीतत्वप्रतिपादकश्रुतिभ्य इत्यर्थः । विष्णुदेहस्यानित्यत्वे प्रलये सर्वस्य तदुदरस्थत्वं न स्यादित्यर्थः । (अनेन 'नित्यत्वाच्चे'ति सौत्रो हेतुर्व्याख्यातः ।) साधकाभावान्न देहलय इत्याह ॥ अश्रुतत्वादिति ॥ अन्यथा लयत्वेन निलीनश्रुतेरपि हितत्वपरत्वात्, चेतनत्वयुक्तेः श्रुतिविरोधेनाप्रामाण्यादित्यर्थः । एवं च प्रलये विष्णोरुदरे सर्वसङ्ग्रहणात्तद्देहस्य लयाभावाद्युक्तं विष्णोर्ज-गत्कारणत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'श्रुतेः' इति जीवाद्विशेषोक्त्या सूचितः । सिद्धान्तन्यायश्च 'नित्यत्वाच्च ताभ्यः' इत्यनेन सर्वसङ्ग्रहादिश्रुतिभ्यो नित्यत्वावगमादिति प्रतिपादयता सूचितः) ॥ १० ॥

## ज्ञोऽधिकरणम् II-3-11

न्या.वि. — न चानादित्वाज्जीवस्य पराधीनविशेषाप्राप्तिः । ''इदं सर्वमसृजते''ति सर्वस्मिन्गृहीतत्वात् । पराधीनविशेष-वत्त्वेऽप्यनादित्वस्याविरोधात् ॥ ११ ॥

भा.बो.— ॐ ज्ञोऽत एव ॐ ॥ इत्यत्र 'नित्यो नित्यानां, 'सर्व एते चिदात्मानो व्युच्चरन्ति'इति श्रुतिविगानेन जीवः किमुत्पद्यते न वेति सन्देहे नोत्पद्यत इति पूर्वः पक्षः । उत्पद्यत इति सिद्धान्तः । तत्रानादिता इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चानादित्वादिति ॥ जीवस्येति पूर्वोत्तराभ्यां सम्बध्यते । जीवस्य स्वरूपोत्पत्त्यभावस्य सिद्धान्तिनाऽप्यङ्गीकृतत्वाद्विवादविषयप्रदर्शनार्थं पराधीनविशेषाप्राप्तिरित्युक्तम् । न चाकाशादौ व्यभिचारः । तस्य पक्षसमत्वादिति भावः । एवं च जीवस्यानादितयोत्पत्त्यसम्भवान्न सर्वकर्तृत्वं विष्णोर्युक्तमिति च नेति भावः । तद्धेतुत्वेन 'सर्वसङ्ग्रहः' इत्युक्तमेव सिद्धान्तन्यायं विवृणोति ॥ इदं सर्वमिति ॥ गृहीतत्वात् जीवस्येति शेषः । नन्वनादित्व-बलात्सर्वशब्दसङ्कोच इत्यत आह ॥ पराधीन इति ॥ एवं च 'इदं सर्वमसृजत' इति सर्वपदार्थे सर्वस्मिन् जीवस्यापि सङ्ग्रहात्तस्योत्पत्तिसिद्धेर्युक्तं विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायोऽनादित्वेऽप्युत्पत्तिर्युज्यत इत्यर्थप्रतिपादकेन 'युक्तेश्च' इति सूत्रेण सूचितः । सिद्धान्तन्यायश्च 'अत एव' इत्यनेन सर्वसङ्ग्राहकश्रुतेरित्यर्थप्रतिपादकेन सूचितः) ॥ ११ ॥

## उत्क्रान्त्यधिकरणम् II-3-12

**न्या.वि. — न च सर्वदेहस्पर्शज्ञानाद्रसादीनां च तत्र तत्र परिज्ञानाज्जीवस्यानणुत्वम् । उत्क्रान्तिगत्यादेः । आदिशब्देन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिः । अतोऽणुत्व-मनणुत्वं चेति भावः ॥ १२ ॥**

भा.बो.— ॐ उत्क्रान्तिगत्यागतीनां ॐ ॥ इत्यत्र 'व्याप्ता ह्यात्मानः, 'अणुर्ह्येष आत्मा' इति श्रुतिविगानेन जीवः किं व्याप्तोऽणुर्वेति सन्देहे व्याप्त इति पूर्वः पक्षः । अणुरिति सिद्धान्तः । अत्र 'तत्र तत्र परिज्ञानं' इत्युक्तपूर्व-पक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सर्वदेहेति ॥ जीवस्येति पूर्वेणोत्तरेण च सम्बध्यते । एवं च तत्र तत्रसर्वदेहे जीवस्य स्पर्शज्ञानात्तत्र तत्र रसादीन्द्रियाधिष्ठानेषु रसादीनां युगपत्परिज्ञानाच्च जीवस्य



अनणुत्वं अणुत्वाभावः । एवं च 'आत्मा कात्स्न्र्यं' इत्यत्र देहपरिमाणस्य निरस्तत्वात्परिशेषसिद्धं व्याप्तत्वमिति च नेत्यर्थः । तद्धेतुत्वेन 'गत्यादिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ उत्क्रान्तिगत्यादेरिति ॥ अनेनानुव्याख्यानगत-गतिशब्द उपलक्षणार्थ इत्युक्तं भवति । ननु उत्क्रान्तिगत्यादिहेतोः (निराकृतमध्यमपरिमाणस्य) जीवस्याणुत्वे सर्वदेहादौ स्पर्शादिज्ञानोपपत्तिः कथमित्यत आह ॥ आदिशब्देनेति ॥ गत्यादीत्यनुव्याख्यानगतादिशब्देनेत्यर्थः । (अनेन 'अविरोधश्चन्दनवत्,' ''गुणाद्वा लोकवत्'' इति सूत्रद्वयतात्पर्यमुक्तं भवति ।) सूक्ष्मतेजोरूपेण चिद्गुणेन जीवस्य व्याप्त्या सर्वदेहादौ युगपत्स्पर्शादिज्ञानोपपत्तिरित्यर्थः । नन्वेवं सति 'उत्क्रान्तिगत्यागतीनाम्' 'गुणाद्वा लोकवत्' इति सूत्रयोर्विरुद्धार्थत्वं स्यादित्यतस्तदभिप्रायमाह ॥ अत इति ॥ सूत्रयोः (उक्त)क्रमेण स्वरूपचिद्गुणविषयत्वादित्यर्थः । एवं च स्वरूपचिद्गुणाभ्यामणुत्वव्याप्तत्वसम्भवान्न तच्छ्रुत्यप्रामाण्यमिति भावः । (अत्र पूर्वपक्षन्यायः 'अविरोधश्चन्दनवत्' 'गुणाद्वा लोकवत्' इति सूत्राभ्यां तत्र तत्र परिज्ञानप्रदर्शकाभ्यां सूचितः । सिद्धान्तन्यायश्च 'उत्क्रान्तिगत्यागतीनाम्' इति सूत्रेणोक्तः । आदिपदोक्तस्तु 'गुणाद्वा लोकवत्' इत्यनेन सूचितः ।) ॥१२॥

## व्यतिरेकाधिकरणम् II-3-13

**न्या.वि.— न च जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यम् । ईशशक्त्यैव बहुरूपत्वादेः ॥ १३ ॥**

भा.बो.— ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ इत्यत्र 'स नित्यो निरवयवः स एकधा न सप्तधा' इति, 'स पञ्चधा स सप्तधा' इति च श्रुतिविगानेन जीवः किमेकरूपः किं वाऽनेकरूप इति सन्देहे एकरूप एवेति पूर्वः पक्षः । अनेकरूप इति सिद्धान्तः । तत्र 'गुणसाम्यम्'इत्युक्तं विपक्षबाध-कतर्करूपपूर्वपक्षन्यायं आपादकप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च जीवस्येति ॥ शक्तौ, अङ्गीकृतायामितिशेषः । (तथा गुणसाम्यं स्यादिति शेषः) एवं च जीवस्यानेकरूपत्वे ईशेन गुणसाम्यं प्राप्नोतीति तर्कसहितैकरूप्य-श्रुतिविरोधेनानेकश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति

च नेति भावः । कुतो नेत्यतस्तद्धेतुत्वेन 'ईशशक्तिः'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ ईशशक्त्यैवेति ॥ योगिनामपि योगाराधितेश्वरप्रसाद-रूपशक्त्यायत्तत्वाद्बहुरूपत्वादेः । आदिपदेनांशस्यापि अंशेनान्यत्र गमनं गृह्यते । ईशपदप्रयोगेन जीववत्परमात्मनोऽप्येतदशक्यमिति शङ्कां वारयति । एवं चेशशक्त्यैव बहुरूपत्वेन गुणसाम्याभावात् श्रुतेः स्वरूपांशविषयत्वेन विरोधाभावाद्युक्तं विष्णोर्जगत्कारणत्वमिति भावः । (अत्र पूर्वपक्षन्यायो योगशक्तेरपि ईश्वराधीनत्वप्रतिपादकश्रुतिप्रदर्शकेन सूचितः । सिद्धान्तन्यायश्च 'दर्शयति च' इत्यनेनोक्तः) (?) ॥ १३ ॥

## पृथगुपदेशाधिकरणम् II-3-14

**न्या.वि. — न च श्रुत्या जीवेश्वरैक्यम् । सर्वमानविरोधात् । श्रुतेः सादृश्यैक्यादिना सावकाशत्वात् । बहुमानविरोधे एकस्य दौर्बल्यात् । धर्मिग्राहकविरोधाच्च ॥ १४ ॥**

भा.बो. — ॐ पृथगुपदेशात् ॐ ॥ इत्यत्र 'तत्त्वमसि' अहं ब्रह्मास्मि इति, 'नित्यो नित्यानां चेतनश्चेतनानां' 'द्वासुपर्णा' इत्यादिश्रुतिविगानेन जीवः किं ब्रह्मणो भिन्न उताभिन्न इति सन्देहे अभिन्न इति पूर्वः पक्षः । भिन्न एवेति सिद्धान्तः । तत्र श्रुतिरित्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च श्रुत्येति ॥ तत्त्वमसि, अहं ब्रह्मास्मीत्यादिकया श्रुत्या जीवेश्वरयोरैक्यमिति च नेत्यर्थः । कुतो नेत्यतः 'सर्वमानविरोधिता' इत्युक्तसिद्धान्तन्यायं तद्धेतुत्वेन विवृणोति ॥ सर्वमानेति ॥ ऐक्यस्येति शेषः । सर्वैरनुभवरूपैर्मानैरित्यर्थः । तर्ह्यपौरुषेयतयाऽसम्भवादप्रामाण्यायाः श्रुतेः का गतिरित्यत आह ॥ श्रुतेरिति ॥ सादृश्यं च तदैक्यं चेति विग्रहः । आदिपदेन 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिश्रुतिप्रतिपाद्यस्थानैक्यमत्यैक्ययोर्ग्रहणम् । विपरीतं किं न स्यादित्यत आह ॥ बहुमानविरोध इति ॥ भेदग्राहकानुभवादि-बहुमानविरोधेऽभेदप्रतिपादकत्वेनाभिमतस्य श्रुतिरूपैकमानस्य दौर्बल्याच्च । सावकाशत्वकल्पने हेत्वन्तरं चाह ॥ धर्मिग्राहकेति ॥ जीवेश्वररूपधर्मिग्राहकानु-भवागमयोः परस्परं भिन्नत्वेनैव तद्ग्राहकत्वादिति भावः । एवं च



सर्वमानविरोधान्नेश्वरेणैकीभूतो जीवः, किं तु पृथगेव वर्तत इति हृदयम् । (अत्र पूर्वपक्षन्यायः 'तद्गुणसारात्तद्व्यपदेशः प्राज्ञवत्' इत्यनेन 'तत्त्वमसि' इत्याद्यैक्यश्रुतिगतिं वदता सूत्रेण सूचितः । सिद्धान्तन्यायश्च 'पृथगुपदेशात्' इत्यनेनोक्तः । उपदेशग्रहणस्य प्रत्यक्षाद्युपलक्षकत्वात् ।) ॥ १४ ॥

## यावदधिकरणम् II-3-15

**न्या.वि. — न चोत्पत्तिमत्त्वाद्विनाशित्वं जीवस्य । अनित्यत्वे तदभीष्टमोक्षाद्यसिद्धेः । न हि पराधीनविशेषवत्त्वमात्रेण विनाशित्वम् । तादृशानामेव नित्यत्वश्रुतिविरोधात् ॥ १५ ॥**

भा.बो. — ॐ यावदात्मभावित्वाच्च न दोषस्तदर्शनात् ॐ ॥ इत्यत्र 'ब्रह्मँल्लयमभ्युपैति, 'आनन्त्याय कल्पते' इति श्रुतिविगानेन जीवो नित्योऽनित्यो वेति सन्देहे अनित्य इति पूर्वः पक्षः । नित्य एवेति सिद्धान्तः । तत्र 'उत्पत्तिमत्त्वम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चोत्पत्तिमत्त्वादिति ॥ 'ज्ञोऽत एव'इत्यत्र जीवस्योत्पत्तेर्निर्णीतत्वादिति भावः । एवं चोत्पत्तिमत्त्वेन जीवस्यानित्यत्वमिति युक्तिसहिता-नित्यत्वश्रुतिविरोधेन नित्यत्वश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन 'अभीष्टासिद्धिः'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अनित्यत्व इति ॥ जीवस्येत्यत्रापि सम्बध्यते । ननु तर्हि विनाशित्वव्याप्तोत्पत्तेः का गतिरित्यत आह ॥ न हीति ॥ यद्विनाशित्वेन व्याप्तं आत्मलाभलक्षणोत्पत्तिमत्त्वं, न तत् 'ज्ञोऽत एव'इत्यत्रोक्तम् । तत्र यदुक्तं पराधीनविशेषलाभलक्षणोत्पत्तिमत्त्वं, न तद्विनाशित्वेन व्याप्तमित्यर्थः । पराधीनविशेषवत्त्वं कुतो न विनाशित्वेन व्याप्तमित्यत आह ॥ तादृशानामेवेति ॥ पराधीनविशेषलाभलक्षणोत्पत्तिमतामेव 'अविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन' इति नित्यत्वश्रुतिविरोधादित्यर्थः । एवं च जीवस्यानित्यत्वेऽभीष्टा-सिद्धेर्नित्यत्वमेवेति युक्तं श्रुतिसमन्वयेन कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायो 'यावदात्मभावित्वात्' इत्यनेन निषेध्यतया सूचितः । सिद्धान्तन्यायश्च 'न दोषः' इत्यनेन आनन्त्यानवाप्तिरूपदोषो नेत्यर्थकेन अनित्यत्वे तदभीष्टमोक्षाद्यसिद्धिरिति विपक्षबाधकतर्करूपः सूचितः) ॥ १५ ॥

## पुंस्त्वधिकरणम् II-3-16

**न्या.वि. — न च स्वगुणाननुभूत्यनुपपत्तेः पूर्वज्ञानादीनां सामस्त्येनाभावः । पूर्वमव्यक्तानां पश्चात्सुव्यक्त्युपपत्तेः ॥१६॥**

भा.बो.— ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ इत्यत्र 'विज्ञानात्मा सह देवैश्च सर्वैः स आनन्दः स बलः स ओजः' इति, 'स दुःखाद्विमुक्त आनन्दीभवति । सोऽज्ञानाद्विमुक्तो ज्ञानी भवति । सोऽबलाद्विमुक्तो बलीभवति' इति श्रुतिविगानेन जीवो ज्ञानादिरूपो न वेति सन्देहे ज्ञानादिरूपो नेति पूर्वः पक्षः । ज्ञानादिरूप इति सिद्धान्तः । तत्र स्वगुणाननुभूतिरित्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च स्वगुणेति ॥ (अत्र स्वशब्दस्तन्त्रेणोपात्तः । तत्र जीवपरस्य षष्ठीतत्पुरुषः ।) ज्ञानादीनाम् स्वरूपभूतानाम् । तथा च न जीवो ज्ञानादिस्वरूपः । स्वगुणानां ज्ञानादीनामननुभूतेरित्यर्थः । ननु मुक्तौ स्वगुणाननुभूतिरसिद्धैव । मुक्तेः पूर्वं स्वगुणाननुभूतिरज्ञानादिप्रतिबन्धाद्युज्यत इति न तया तदभावः कल्पयितुं शक्यत इत्यत उक्तम् । पूर्वज्ञानादीनां सामस्त्येनेति । नानभिव्यक्तत्वमात्रेणाभावः किन्तु सामस्त्येन स्वरूपेऽप्यभाव इत्यर्थः । कुत इत्यत उक्तं ॥ स्वगुणेति ॥ स्वस्याहमिति नित्याभिव्यक्तत्वेन स्वरूपभूतत्वेनाननुभूत्यनुपपत्तेः । न च प्रतिबन्धात्तदुपपत्तिः । स्वरूपस्याप्रतिबन्धत्वे स्वरूपभूतगुणानामननुभूतिर्येन प्रतिबद्धेन, तस्याप्रतिबन्धस्यानुपपत्तेरिति भावः । एवं च स्वगुणाननुभूत्या जीवस्यानन्दादिरूपत्वाभावादानन्दादिश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन'सुव्यक्तिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ पूर्वमिति ॥ मुक्तेः पूर्वम् अज्ञानावृतत्वेन अव्यक्तानां, पश्चात् मुक्त्यनन्तरमज्ञाननिवृत्तेः, सु सम्यक् व्यक्त्युपपत्तेरित्यर्थः । अनेन स्वगुणाननुभूतिः स्वगुणानां प्रतिबद्धत्वेनाव्यक्तत्वाद्युज्यते मुक्त्यनन्तरम-भिव्यक्तत्वेन सैव नास्तीत्युक्तं भवति । अव्यक्तीति वदता पूर्वमपि सुप्त्यादावीषदभिव्यक्तिः सूचिता । न च स्वरूपस्याप्रतिबद्धत्वेन तदभिन्नज्ञानादीनां प्रतिबन्धायोगः, विशेषबलात्तदुपपत्तेरिति । एवं च



मोक्षानन्तरमेव सुव्यक्तेस्तत्पूर्वमननुभूत्युपपत्तेर्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायोऽनुभवव्यपदशयोरभिव्यक्तिहेतुकत्वं वदता 'अभिव्यक्तियोगात्' इत्यनेन निषेध्यतया सूचितः । सिद्धान्तन्यायश्च अभिव्यक्तियोगादित्यनेनैवोक्तः) । ॥ १६ ॥

## कर्तृधिकरणम् II-3-17

**न्या.वि.— न चेश्वरस्यैव कर्तृत्वे कल्पनालाघवम् । जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यात् । तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्च ॥ १७ ॥**

भा.बो.— ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ इत्यत्र 'नान्यः कर्ता'इति, 'यत्कर्म कुरुते तदभिसम्पद्यते' इति श्रुतिविगानेन जीवः किं कर्ता न वेति सन्देहे नेति पूर्वः पक्षः । कर्तेति सिद्धान्तः । तत्र 'अल्पकल्पनम्'इत्युक्तं पूर्वपक्षन्यायं तत्साध्यं सूचयन् विवृण्वन् प्रतिक्षिपति ॥ न चेश्वरस्यैवेति ॥ न च 'जीवस्यैवे'त्यपि वक्तुं शक्यत्वात्किं विनिगमकमिति वाच्यम् । 'इतरव्यपदेशात्' इत्यादावीश्वरस्यैवानन्ययोगेन कर्तृत्वस्य श्रुत्यादिना समर्थितत्वादिति भावः । एवं चेश्वरस्यैव कर्तृत्वाङ्गीकारेऽल्पकल्पनमिति युक्तिसहिताकर्तृत्वश्रुतिविरोधेन कर्तृत्वश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन 'शास्त्रसिद्धिः' इत्युक्तसिद्धान्तन्यायं विपक्षबाधकतर्कसाध्यं प्रदर्शयन् विवृणोति ॥ जीवस्येति ॥ जीवस्य सर्वथा कर्तृत्वाभावे 'प्रातः सन्ध्यामुपासीत' इत्यादिविधि-निषेधरूपशास्त्रस्य वैयर्थ्यप्रसङ्गात्, तस्यापि जीवस्यापि कर्तृत्वे, अङ्गीक्रियमाणे सति शास्त्रस्य उक्तलक्षणस्य, अर्थस्य प्रयोजनस्य सिद्धेरित्यर्थः । अनुग्राहकतर्कसहितस्यैव साधकत्वमिति चशब्दः । एवं च जीवस्य कर्तृत्वे शास्त्रप्रयोजनसिद्धेर्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायो(अ)प्रामाणिकत्वपरिहारेण कल्पनागौरवस्यापि परिहारात्'कर्ता'इत्यादिसूत्रे सूचितः । सिद्धान्तन्यायश्च 'शास्त्रार्थवत्त्वात्' इत्यनेनैवोक्तः ।) ॥ १७ ॥

## अंशाधिकरणम् II-3-18

**न्या.वि. — न च नानाश्रुतेरप्रामाण्यम् । दृष्टभेदानुसारेण तासामर्थोपपत्तेः । अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वात् ॥ ॥ १८ ॥**

भा.बो. — ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ इत्यत्र 'अंशा एव हीमे जीवाः' इति 'नैवांशो न सम्बन्धः' इति श्रुतिविगानेन जीवः किमीश्वरांशो न वेति सन्देहे जीवो न हरेरंशो नाप्यनंश इति निर्णयो युज्यत इति पूर्वः पक्षः । अंशो भवत्येवेति सिद्धान्तः । तत्र 'नानाश्रुतिः'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नानश्रुतेरिति ॥ नानाप्रकारेण श्रवणादित्यर्थः । अप्रामाण्यम् श्रुतिद्वयस्येति शेषः । यद्वा नानाश्रुतेः नियमेनांशत्वानंशत्वरूपविरुद्धार्थप्रतिपादकश्रुतेः विरुद्धार्थत्वरूपनानात्वादेवाप्रामाण्यमित्यर्थः । एवं च श्रुतेर्नानात्वेन श्रुतिद्वयस्याप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । कुतो नेत्यतस्तद्धेतुत्वेन 'विपर्ययः' इत्युक्तसिद्धान्तन्यायं विवरितुं श्रुतिगतिं तावदाह ॥ दृष्टेति ॥ जीवेश्वरप्रतियोगिकभेदस्य प्रत्यक्षसिद्धत्वेन तदनुसारेण तासामंशत्वादिप्रतिपादकश्रुतीनामंशत्वरूपाभेदाख्यार्थोपपत्तेरित्यर्थः । किमर्थमेवं श्रुतिगतिः कल्पनीयेत्यतः सिद्धान्तन्यायं विवृणोति ॥ अप्रामाण्येति ॥ वेदे चापौरुषेयत्वेन वक्तृविपरीतज्ञानमूलत्वासम्भवादित्यर्थः । एवं च वक्तुर्विपर्ययात् भ्रमाद्वाक्यस्याप्रामाण्यम् । वेदे च तदसम्भवादंशत्वश्रुतेरर्थान्तरे प्रामाण्यमेवेति युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायोऽशत्वमङ्गीकृत्यानंशत्वश्रुतेर्गतिं वदता 'प्रकाशादिवत्' इति सूत्रेण सूचितः । सिद्धान्तन्यायश्च 'प्रकाशादिवत्' इति श्रुतिगत्युक्त्याऽनं-शत्वप्रतिपादकश्रुतेरपौरुषेयत्वेन वक्तृमिथ्याज्ञानमूलकाप्रामाण्यासम्भव इति सूचनेन सूचितः ।) ॥ १८ ॥



## अदृष्टाधिकरणम् II-3-19

**न्या.वि. — न च वैचित्र्यमनाभासत्वे कारणम् । जीवानां सामान्यतः आभासत्वेऽपि विशेषाददृष्टाद्वैचित्र्योपपत्तेः ॥ १९ ॥**

**इति श्रीमन्न्यायविवरणे द्वितीयाध्यायस्य तृतीयः पादः ॥**

भा.बो.— ॐ अदृष्टाऽनियमात् ॐ ॥ इत्यत्र 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतिविरोधपरिहारप्रकरणान्न जीवः परमात्मनः प्रतिबिम्ब इति विकल्पितश्रुतिविगानेन जीवो भगवत्प्रतिबिम्बो न वेति सन्देहे नेति पूर्वः पक्षः । प्रतिबिम्ब इति सिद्धान्तः । तत्र 'वैचित्र्यम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्य-प्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च वैचित्र्यमिति ॥ जीवानां सुरासुरनरतिर्यक्त्वादिरूपं प्रमितं वैचित्र्यमनाभासत्वे अप्रतिबिम्बत्वे कारणमित्यर्थः । एवं च जीवानां वैचित्र्येणाविचित्रेश्वरप्रतिबिम्बत्वाभावात् प्रतिबिम्बत्वश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन 'विशेषकारणम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ जीवानामिति ॥ सामान्यतः जीवत्वेन रूपेण आभासत्वेऽपि भगवत्प्रति-बिम्बत्वेऽपि, अनाद्यविद्याकर्मादिरूपविशेषाददृष्टात् कारणाद्वैचित्र्योपपत्तेरित्यर्थः । एवं च विशेषकारणाद्वैचित्र्योपपत्तेर्जीवस्येश्वरप्रतिबिम्बत्वसम्भवाद्युक्तं श्रुतिसमन्वयेन हरेर्जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायो वैचित्र्यस्यान्य-थासिद्धिं वदता सूचितः । सिद्धान्तन्यायश्च 'अदृष्टाऽनियमात्' इत्यनेनोक्तः ।) ॥ १९ ॥

इति श्रीमन्न्यायविवरणभावबोधे द्वितीयाध्यायस्य तृतीयः पादः

# अथ चतुर्थः पादः

## प्राणाधिकरणम् II-4-1

**न्या.वि. — न च प्राणानामुत्पत्त्यङ्गीकारे, 'प्राणा एवानादयः' इत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोधः । 'आत्मैवेदमग्र आसीत्स प्राणमसृजत, स प्राणान्' इत्यादिवचनादनादित्व एव स्पष्टार्थवद्विशेषश्रुतिविरोधात् । 'इदं सर्वमसृजते'ति सामान्यवचनस्याधिक्यं सिद्धान्ते । विशेषमात्रश्रुतेः सावकाशाया उभयश्रुतेः प्राबल्यात् ॥ १ ॥**

भा.बो.— श्रुत्यादिप्रसिद्धप्रबलयुक्त्युपेतश्रुतीनामध्यात्मविषयाणां परस्परविरोधपरिहारार्थमयं पादः प्रवृत्तः । एतत्पादीयाधिकरण- पूर्वपक्षसिद्धान्तन्यायाः सङ्ग्रहेणानुव्याख्यायामुक्ताः

'तत्र स्पष्टार्थवत् श्रुतिः ।
विशेषश्रुतिवैरूप्यं माहात्म्यं व्यक्तसद्गुणः ।
दृष्टा युक्तिः समानत्वं कर्तृशक्तिर्विमिश्रिता ।
युक्तयः पूर्वपक्षेषु सुनिर्णीतास्तु तादृशाः ।
युक्तयो निर्ण(यार्थे)यस्यैव स्वयं भगवतोदिताः ॥ इति ॥ तत्र

ॐ तथा प्राणाः ॐ ॥ इत्यत्र 'प्राणा एवेदमग्र आसुः, अथ प्राणा एवानादयः' इति 'एतस्माज्जायते प्राणः' इति श्रुतिविगानेन प्राणाः किमुत्पत्तिमन्तो न वेति सन्देहे नोत्पत्तिमन्त इति पूर्वः पक्षः । उत्पत्तिमन्त इति सिद्धान्तः । तत्र 'स्पष्टार्थवत् श्रुतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्राणानामिति ॥ स्वपक्षसाधकस्यैव परपक्षदूषकत्वमिति ज्ञापयितुं विरोधमुखेनैव न्यायो विवृतः । अन्यथा 'स्पष्टार्थवद्विशेषश्रुतेः प्राणानामनादित्वम्' इत्यवक्ष्यत् । यद्वा 'स्पष्टार्थवत् श्रुतिः'इत्यत्र 'विशेषश्रुतिवैरूप्यम्'इत्यतो वैरूप्यपदमनुकर्षणीयमिति भावेनैवं न्यायविवरणं कृतम् । एवमन्यत्रापि द्रष्टव्यम् । स्पष्टार्थवती



अनादित्वरूपस्पष्टार्थप्रतिपादिका विशेषश्रुतिः 'प्राणा एव'इति प्राणरूपार्थविशेषमधिकृत्य प्रवृत्ता । तया विरोधः प्राणानामुत्पत्त्यङ्गीकारे इत्यर्थः । एवं च स्पष्टार्थवच्छ्रुत्या प्राणानामनादित्वेऽङ्गीकार्ये न सर्वकर्तृत्वं विष्णोर्युक्तमिति नेति भावः । कुतो नेत्यतस्तद्धेतुत्वेन 'स्पष्टार्थवच्छ्रुति'रित्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ आत्मैवेदमिति ॥ अस्या अपि श्रुतेः 'आत्मैव' इत्यवधारणेनान्यानादित्वनिषेधकत्वेन 'असृजत'इति स्पष्टमुत्पत्तिप्रतिपादकत्वेन 'प्राणं, प्राणान्' इत्यर्थविशेषमधिकृत्य प्रवृत्तत्वेन च स्पष्टार्थवद्विशेषश्रुतित्वं द्रष्टव्यम् । एवकारेण प्राणानादित्वश्रुतेः सावकाशत्वेन सिद्धान्ताविरोधकत्वमाह । अत एव 'सावकाशायाः' इति वक्ष्यति । न च एवं सति श्रुतिद्वयस्यापि साम्यात्कथं निर्णय इत्यत आह ॥ इदं सर्वमिति ॥ श्रुतित्वाविशेषात्कथमनया निर्णय इत्यत आह ॥ विशेषेति ॥ विशेषश्रुतिमात्रादिति योजना । सूक्ष्मरूपानादित्वप्रतिपादकत्वेन सावकाशायाः इत्यर्थः । एवं च सामान्यश्रुतिसाहित्येन प्रबलस्पष्टार्थवद्विशेषश्रुत्या प्राणोत्पत्तिसिद्धेर्युक्तमीश्वरस्य श्रुतिसमन्वयेन जगत्कर्तृत्वमिति भावः । (अत्र पूर्वपक्षन्यायः 'गौण्यसम्भवात्' इत्यनेन, अनादित्वश्रुतेर्गतिं वदता सूचितः । सिद्धान्तन्यायश्च 'असम्भवात्' इत्यनेन, उत्पत्तिश्रुत्यसम्भवादित्यर्थकेन, 'प्रतिज्ञानुपरोधाच्च' इत्यनेन चोक्तः ।) ॥ १ ॥

## मनोधिकरणम् II-4-2

**न्या.वि. — न च 'नित्यं मनोऽनादित्वात्' इति विशेषश्रुतिविरोधः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति विशेषश्रुतेः ॥ २ ॥**

भा.बो.— ॐ तत्प्राक्श्रुतेश्च ॐ ॥ इत्यत्र 'एतस्माज्जायते प्राणो मनः' इति, 'तत्र नित्यं मनोऽनादित्वात्' इति श्रुतिविरोधेन मनः किमुत्पत्तिमन्न वेति सन्देहे नेति पूर्वः पक्षः । उत्पत्तिमदेवेति सिद्धान्तः । तत्र 'विशेषश्रुतिवैरूप्यम्'इत्युक्तं न्यायं पूर्वपक्षसम्बन्धित्वेन तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नित्यमिति ॥ अनिश्चितस्य हेतुत्वेन

कथनासम्भवात् हेतुतयाऽनादित्वप्रतिपादकत्वेन 'नित्यं मनः' इति विशिष्य मनोविषयत्वेन चास्याः श्रुतेर्विशेषविषयत्वं ज्ञातव्यम् । वैरूप्यमित्यस्यार्थो विरोध इति । 'मनस उत्पत्तिमत्त्वे' इति शेषः । एवं च विशेषश्रुतेर्वैरूप्यान्मनसोऽनादित्वे न सर्वकर्तृत्वं विष्णोर्युक्तमिति नेति भावः । (अयं च न्यायोऽनादित्वश्रुतिगतिप्रदर्शकस्मृतिसमुच्चायकचशब्देन विपक्षबाधकतर्करूपः सूचितः ।) तद्धेतुत्वेन 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ एतस्मादिति ॥ अस्याः पृथङ्मनसो जन्माभिधायकत्वेन विशेषश्रुतित्वं द्रष्टव्यम् । श्रुतेः श्रुतिविरोधात् । 'मनोऽनादित्वस्येति शेषः । न चानादित्वश्रुतिविरोधः । तस्याः सूक्ष्मरूपानादित्वपरत्वात् । एवं च मनस उत्पत्तिप्रतिपादकविशेषश्रुतिविरोधात् न मनोऽनादित्वमिति युक्तं हरेः सर्वकर्तृत्वमिति भावः । (अयं च न्यायः 'श्रुतेः'इत्यनेन विपक्षबाधकतर्करूप उक्तः ।) ॥ २ ॥

## वागधिकणम् II-4-3

**न्या.वि. — न च 'वाग्वाव नित्ये'ति विशेषश्रुतिविरोधः, 'मनसो वा व वागुत्पद्यते, वाचो व्याहरण'मिति विशेषश्रुतेः ॥ ३ ॥**

भा.बो.— ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ इत्यत्र 'सर्वेन्द्रियाणि च' इति, 'न ह्येषोत्पद्यत' इति च श्रुतिविगानेन वागिन्द्रियमुत्पद्यते न वेति सन्देहे नोत्पत्तिमदिति पूर्वः पक्षः । उत्पत्तिमदिति सिद्धान्तः । तत्र 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न च वाग्वा वेति ॥ अस्याश्च वागिन्द्रियविषयत्वे तस्य चानादित्वपरत्वे चास्यां हि श्रुतिरवतिष्ठत इति वाक्यशेषाद्विशेषश्रुतित्वं ज्ञातव्यम् । वाक्पदेन श्रुतिग्रहणे श्रुत्याश्रयत्वासम्भवात् । न हि श्रुतौ श्रुतिरवतिष्ठते । उत्पत्तिमत्त्वे च वाचोऽनादित्वश्रुत्याश्रयत्वासम्भवादिति भावः । विरोधः वागुत्पत्तेः इति शेषः । एवं च विशेषश्रुतिवैरूप्याद्वागिन्द्रियस्यानादित्वेऽङ्गीकार्येऽयुक्तमीशस्य सर्वकर्तृत्वमिति च नेति भावः । (अयं च न्यायः नानुत्पत्तिरिति अनुत्पत्तिं



निषेधता अनुत्पत्तावुपन्यसनीयं किञ्चित्प्रमाणं सूचितम् । तच्चात्र प्रत्यक्षमनुमानं वा न सम्भवतीति श्रुतिरेव सूचिता । तद्वैरूप्यलक्षणविपक्षबाधकतर्क इति सूचितः ।) तद्धेतुत्वेन 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ मनस इति ॥ (वाक्पदस्यात्र वागिन्द्रियपरत्वेनास्याविशेषश्रुतित्वोपपादनार्थं 'वाचो व्याहरणम्'इत्यंशोदाहरणम् ।) श्रुतेः श्रुतिविरोधात् । वागनादित्वस्येति शेषः । न वागिन्द्रियस्यानुत्पत्तिमत्त्वम् । 'मनसो वा व वाक्' इति मनोजन्यत्वश्रुतिविरोधात् । न चात्र वाक्पदं व्याहरणपरमिति वाच्यम् । 'वाचो व्याहरणम्'इति व्याहरणहेतुत्वश्रवणात् । तस्य च वागिन्द्रियलिङ्गत्वादिति भावः । वागिन्द्रियस्य श्रौतानादित्वानादिश्रुत्याश्रयत्वविरोधपरिहारस्तु ,

वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता ।
उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन ॥

इति वचनेन ज्ञातव्यः । एवं चोदाहृतवचनसाहित्येन प्रबलविशेषश्रुत्या वागिन्द्रियस्योत्पत्तिसिद्धेर्युक्तं हरेर्जगत्कर्तृत्वमिति भावः । (अयं च न्यायः 'तत्पूर्वकत्वात्' इत्यनेन, 'मनसो वागुत्पद्यत' इति श्रुतिसूचनेन सूचितः ।) ॥ ३ ॥

## सप्तगत्यधिकरणम् II-4-4

**न्या.वि. — न च 'दशेमे पुरुषे प्राणाः आत्मैकादशः' 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति संख्याविशेषश्रुत्योरेव परस्परं विरोधः । 'गुहाशयां निहिताः सप्त सप्त' इति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वात्सङ्ख्याश्रुत्योर्विषयवैलक्षण्यात् ॥ ४ ॥**

भा.बो.— ॐ सप्त गतेर्विशेषितत्वाच्च ॐ ॥ इत्यत्र 'सप्त प्राणाः' इति, 'दशेमे पुरुषे प्राणाः' इति च श्रुतिविगानेन प्राणाः सप्तोत दशेति सन्देहे प्राणाः सप्तैव दशैवेति सङ्ख्यानिर्णयाभाव इति पूर्वः पक्षः । दशैवेति निर्णय इति सिद्धान्तः । तत्र 'विशेषश्रुतिवैरूप्यम्'इत्युक्तमेव पूर्वपक्षसम्बन्धितया विवृण्वन्

प्रतिक्षिपति ॥ न च दशेति ॥ सङ्ख्याविशेषः प्राणगतदशत्व सप्तत्वरूपः । तथा च दशत्वसप्तत्वरूपविशेषप्रतिपादकश्रुत्योः परस्परवैरूप्येणाप्रामाण्यान्न श्रुत्येश्वरस्य जगत्कर्तृत्वसिद्धिरिति नेति भावः । (अयं च न्यायः श्रुतिगति-प्रदर्शकस्मृतिसमुच्चायकचशब्देन सूचितः ।) तद्धेतुत्वेन 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ गुहाशयामिति ॥ न सङ्ख्याश्रुत्योः परस्परविरोधेनाप्रामाण्यम् । दशत्वश्रुतेः पञ्चकर्मेन्द्रिय-पञ्चज्ञानेन्द्रियपरत्वम् । सप्तत्वश्रुतेर्मनोबुद्धिसहितश्रोत्रादिसप्तज्ञानेन्द्रियपरत्वमिति विषयवैलक्षण्यात् । न च 'सप्त प्राणाः' इत्युक्तानां ज्ञानेन्द्रियत्वं कुत इति वाच्यम् । गुहा हृदयं, आशयः स्थानं यस्य बुद्धेस्तामुद्दिश्य श्रोत्र-चक्षुः-स्पर्शन-रसन-घ्राण-मनो-बुद्धिरूपाः प्रतिशरीरं सप्त सप्त निहिताः, इति श्रुतौ सप्तभावस्य सप्तसङ्ख्यायाः बुद्धीन्द्रियविषयत्वेन ज्ञानसाधनेन्द्रियनिष्ठत्वेन विशेषितत्वादित्यर्थः । अनेन विशेषश्रुत्योः सङ्ख्याविशेषश्रुत्योः, वैरूप्यात् विलक्षणविषयोपेतत्वादिति न्यायो विवृतो भवति । एवं च (गुहाशयामिति वाक्यशेषेण) विशेषश्रुति(त्योः वैलक्षण्यात्) वैरूप्यान्न श्रुत्योः परस्परं विरोध इति सङ्ख्याविशेषानिर्णय इति श्रुतिप्रामाण्योपपत्तेर्युक्तं हरेः सर्वकर्तृत्वमिति भावः । (अयं च न्यायो 'विशेषितत्वात्' इत्यनेनोक्तः ।) ॥ ४ ॥

## अण्वधिकरणम् II-4-5

**न्या.वि.— न च 'दिवीव चक्षुराततम्' इति व्याप्त्याख्य-विशेषवाचकश्रुतिविरोधः 'अणूनि वा इन्द्रियाणि तेषां प्रकाशो व्याततः' इति ततोऽप्यणुत्ववाचकविशेषश्रुतिविरोधात् ॥ ५ ॥**

भा.बो.— ॐ अणवश्च ॐ ॥ इत्यत्र 'दिवीव चक्षुराततम्' इति 'अणुभिः पश्यति' इति श्रुतिविगानेन प्राणाः किं व्याप्ता उताणव इति सन्देहे व्याप्ता इति पूर्वः पक्ष । अणव एवेति सिद्धान्तः । तत्र 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न च दिवीवेति ॥ विरोधः- प्राणाणुत्वस्येति शेषः । नन्वणुत्वेऽपि श्रुतिसद्भावात्कथं निर्णय



इति चेत् न, विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्व्याप्तेरुक्तत्वेन, एतच्छ्रुतेः प्राबल्यात् । अतिसुदृढस्यैव दृष्टान्तत्वेनोपपादनात् । एवं च विशेषश्रुति-विरोधादणुत्वाभावेनाणुत्वश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । (अयं च न्यायो व्याप्तत्वसमुच्चायकचशब्देन केवलाणुत्वाङ्गीकारे विशेषश्रुतिविरोध इति सूचनेन सूचितः ।) तद्धेतुत्वेन 'विशेषश्रुतिवैरूप्यम्' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ अणूनीति ॥ अत्र 'तेषां प्रकाशो व्याततः' इति 'दिवीव'इति श्रुतिसिद्धव्याप्तत्व-मङ्गीकृत्याणुत्वस्योक्तत्वात् । ततोऽपि 'दिवीव'इति श्रुतितोऽपि अस्या विशेषश्रुतित्वं ज्ञातव्यम् । विरोधः स्वरूपेण चक्षुरादिप्राणव्याप्तत्वस्येति शेषः । एवं च विशेषश्रुतिविरोधात् प्राणानामणुत्वसिद्धेर्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वमिति भावः । (अयं च न्यायः 'अणवश्च' इत्यनेन केवलव्याप्त्यङ्गीकारे अणुत्वश्रुतिविरोध इति सूचनेन सूचितः ।) ॥ ५ ॥

## मुख्यप्राणाधिकरणम् II-4-6

**न्या.वि.— न च यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते ॥ इत्यादिमाहात्म्य-वचनात् मुख्यप्राणस्य नोत्पत्तिरिति वाच्यम् ।**

**महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् ।**
**किं नाम न सृजेदेष येन शक्त्येदमावृतम् ॥**

**इति श्रुतेस्ततोऽपि माहात्म्याद्विष्णोः ॥ ६ ॥**

भा.बो.— ॐ श्रेष्ठश्च ॐ ॥ इत्यत्र 'नैष प्राण उदेति' इति 'आत्मत एष प्राणो जायते' इति श्रुतिविगानेन मुख्यप्राण उत्पत्तिमान्न वेति सन्देहे नेति पूर्वः पक्षः । उत्पत्तिमानेवेति सिद्धान्तः । तत्र 'माहात्म्यम्' इत्युक्तन्यायं पूर्वपक्षसम्बन्धित्वेन वायुप्रोक्तवचनमुदाहृत्य साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च यत्प्राप्तिरिति ॥ एवं च सर्वजन्मादिहेतुत्वरूप-माहात्म्यरूपयुक्तिसहितानादित्व श्रुतिविरोधेनोत्पत्तिश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन

विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । (अयं च न्यायः श्रेष्ठपदप्रयोगेन सूचितः ।) तद्धेतुत्वेन 'माहात्म्यम्'इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेनापि श्रुत्युदाहरणपूर्वकं विवृणोति ॥ महत्त्वादिति ॥ प्राणकर्तृत्वे सर्वकर्तृत्वरूपं हेत्वन्तरमाह ॥ किं नामेति ॥ येन स्वशक्त्येदं सर्वं जगत् आवृतं वशीकृतमेव एष विष्णुः किं नाम न सृजेत्? सर्वं सृजेदेवेत्यर्थः । ततोऽपीत्यनेन सिद्धान्तन्यायस्य प्राबल्यमाह । एवं च प्राणस्य प्राणोत्पादकत्वरूपाति-माहात्म्यवद्विष्णुजातत्वोपपत्तेर्युक्तं श्रुतिसमन्वयेन हरेर्जगत्कारणत्वमिति भावः । (अयं च न्यायः 'न वायुक्रिये' इति सूत्रगेन 'मुख्यप्राणः परस्माच्च' इति स्मृतिसूचकेन 'उपदेशात्' इत्यनेन सूचितः ।) ॥ ६ ॥

## चक्षुराद्यधिकरणम् II-4-8

**न्या.वि. — न च प्राणादिपञ्चकस्य व्यक्तसद्गुणत्वान्मुख्य-प्राणवृत्तित्वमेव ।**

**अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च ।**
**तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः॥**

**इति श्रुतेर्मुख्यप्राणस्य ततोऽपि व्यक्तसद्गुणत्वात् ॥ ७,८ ॥**

भा.बो.— ॐ चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॐ ॥ इत्यत्र 'न प्राणः किञ्चिदाश्रितः', 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति श्रुतिविगानेन मुख्यप्राणः स्वतन्त्रः परतन्त्रो वेति सन्देहे स्वतन्त्र एवेति सिद्धान्तः । अस्मिन्नप्यधिकरणे 'माहात्म्यम्'इत्यनेनैव पूर्वपक्षसिद्धान्तन्यायावभिहितौ । 'यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत्' इत्युक्तसर्वचेष्टकत्वरूपमाहात्म्येन पूर्वपक्षोत्थानात् । सर्वकर्ताऽपि सन् प्राणः परमाधारतः स्थितः' (इति) परमत्वरूपमाहात्म्येनैव सिद्धान्तितत्वात् । एतदेवाभिप्रेत्योक्तं तत्वप्रकाशिकायाम् 'अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेन' इति । 'ननु स्वातन्त्र्ये युक्तियुक्तश्रुति-सद्भावान्न श्रुतिमात्रेण निर्णय इत्यत आह सर्वेति' इति (च) । अत्र विवरणं तु पूर्वाधिकरणसम्बन्धिविवरणेनैव कृतम् । अत एव पूर्वाधिकरणे



'इत्यादिमाहात्म्यवचनात्'इति आदिपदप्रयोगः । पृथगविवरणं तु प्रमाणमात्रभेदेन सर्वसाम्यादिति ज्ञातव्यम् । (अत्र 'अकरणत्वाच्च' इत्यनेन अकरणत्वादि-माहात्म्यं पूर्वपक्षन्याय इत्युक्तं भवति ।) ॥ ७ ॥

**भा.बो.** — ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ इत्यत्र 'सर्वे वा एते मुख्यदासाः' इति, 'मुख्यस्यैव स्वरूपाणि' इति श्रुतिविगानेन प्राणादयः पञ्च किं मुख्यप्राणस्य दासाः उत स्वरूपाणीति सन्देहे दासा एवेति वा स्वरूपाण्येवेति वा अन्यतरपक्षनियम एवेति पूर्वः पक्षः । उभयरूपा इति सिद्धान्तः । तत्र 'व्यक्तसद्गुणाः' इत्युक्तन्यायं द्वितीयपूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न च प्राणादिपञ्चकस्येति ॥ प्राणोऽपानो व्यान उदानः समान इति प्राणादिपञ्चकस्य, 'पायूपस्थे अपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भव(वं)ति नाडीसहस्राण्यासु व्यानश्चरत्यथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापं पृथिव्यां या देवता सैषा पुरुषस्याऽपानमवष्टभ्य' इत्यादिव्यक्तसद्गुणत्वान्मुख्यप्राणस्य वृत्तित्वमेव स्वरूपत्वमेव न तु दासत्वमित्यर्थः । दासानामपि व्यक्तसद्गुणत्वे मुख्यप्राणसाम्येन दासत्वमेव न स्यात् । एवं च व्यक्तसद्गुणेभ्यः प्राणादिपञ्चकस्य मुख्यप्राणस्वरूपत्वेऽङ्गीकार्ये दासत्वश्रुतेरप्रामाण्याच्च श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । तद्धेतुत्वेन 'व्यक्तसद्गुणाः' इत्युक्तमेव न्यायं सिद्धान्तसम्बन्धित्वेन श्रुत्युदाहरणपूर्वकं विवृणोति ॥ अशेषेति ॥ गुणपूर्णानि इति दासापेक्षया मुख्यप्राणस्वरूपेषु गुणानामाधिक्यमाह । अत एव 'दासाः सद्गुणैर्युताः' इत्येवोक्तम् । मुख्यप्राणस्य प्राणादिस्वरूपस्य, ततोऽपि दासेभ्योऽपि व्यक्तसद्गुणत्वादित्यर्थः । ततश्च दासानां व्यक्तसद्गुणत्वेऽपि न मुख्यप्राण-साम्यापत्तिः । एवं च दासेभ्योऽपि स्वरूपाणामधिकव्यक्त- सद्गुणत्वे-नाधिक्योपपत्तेर्दासत्वस्वरूपत्वसम्भवात् श्रुतिप्रामाण्योपपत्तेर्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति भावः । (इमौ च न्यायौ 'व्यपदिश्यते' इत्यनेन 'अशेषगुणपूर्णानि' इति, श्रुतौ अशेषव्यक्तसद्गुणरूपत्वेन, व्यक्तसद्गुणपञ्च-दासकत्वेन, व्यपदिश्यत इत्युक्तेः सूचितौ) ॥ ८ ॥

## प्राणाणुत्वाधिकरणम् II-4-9

**न्या.वि. — न चाणुत्वे प्राणस्य 'महान्वै मुख्यप्राणो येन व्याप्तं चराचरम्' इति दृष्टायुक्तिः । 'अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिः' इति दृष्टाऽयुक्तिरनणुत्वे प्राणस्य ॥ ९ ॥**

भा.बो.— ॐ अणुश्च ॐ ॥ इत्यत्र 'प्राण एवाधस्तात्' इति, 'अणुनैतत्सृज्यते' इत्यादिश्रुतिविगानेन मुख्यप्राणो व्याप्तो न वेति सन्देहे व्याप्त एव मुख्यप्राण इति पूर्वः पक्षः । अणुरेवेति सिद्धान्तः । तत्र 'दृष्टाऽयुक्तिः' इत्युक्ततर्करूपन्यायं आपादकप्रदर्शनपूर्वकं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न चाणुत्व इति ॥ महान् वै व्याप्तो वा इति प्रतिज्ञा । येन मुख्यप्राणेन चराचरं सर्वं जगद्व्याप्तमिति हेतुः । उपलक्षणं चैतत् । 'सप्तस्कन्धगतो लोकान् यो बिभर्ति महाबलः' इति हरिवंशवचनमपि ग्राह्यम् । ततश्च इत्यादिरूपप्रमाणेन दृष्टस्य निश्चितस्य सकलजगद्व्यापकस्य, अयुक्तिः अयोगः प्राणाऽणुत्व इत्यर्थः । एवं च दृष्टाऽयुक्त्या मुख्यस्य व्याप्तिसिद्धेरणुत्व-श्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वं युक्तमिति च नेति भावः । (अयं च न्यायः केवलाणुत्वाङ्गीकारे, 'महान्वै मुख्यप्राणः' इति दृष्टस्य श्रुत्युक्तस्य व्यापकत्वस्यायुक्तिः स्यादित्यस्मान्महत्त्वसमुच्चायकचशब्देन सूचितः ।) तद्धेतुत्वेन 'दृष्टाऽयुक्तिः'इत्युक्ततर्कपरन्यायमापादनप्रदर्शनपूर्वकं सिद्धान्त-सम्बन्धित्वेनापि विवृणोति ॥ अणुर्वा इति ॥ अत्रापि प्रतिज्ञाहेतुरूपत्वं द्रष्टव्यम् । इति प्रमाणदृष्टस्याणुत्वस्य प्राणस्यानणुत्वे, व्याप्तत्वे, अयुक्तेरयोगादित्यर्थः । न च 'महान्वै' इत्यादिश्रुतिविरोधः । यतो बहिर्देहाद्वर्तमानेन मुख्यवायुरूपेण व्याप्तत्वं तदर्थ इति भावः । (एवं च महत्त्वे, प्रमाणदृष्टस्याणुत्व-स्यायुक्तेरणुत्वस्याङ्गीकार्यमाणत्वाद्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति भावः । (अयं च न्यायः केवलमहत्त्वाङ्गीकारे 'अणुर्वै मुख्यप्राणः' इति दृष्टस्य नाडीसञ्चारित्वस्यायुक्तिः स्यादिति सूचकेन 'अणुः'इत्यनेन सूचितः ॥ ९ ॥



## ज्योतिराद्यधिकरणम् II-4-10

**न्या.वि.— न चेन्द्रियाणां जीवाकरणत्वे दृष्टायुक्तिः । क्वचिदतद्वशत्वस्यापि दृष्टत्वात् । 'यश्चक्षुषि तिष्ठन्' इत्यादिदृष्टायुक्तेरीशाधीनत्वानङ्गीकारे । लौकिकदृष्टेस्त्वीशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेः ॥ १० ॥**

भा.बो.— ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥ इत्यत्र 'जीवस्य करणान्याहुः प्राणान्' इति, 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति' इति श्रुतिविगानेनेन्द्रियाणि जीवकरणान्युत ब्रह्मकरणानीति सन्देहे जीवकरणानीति पूर्वः पक्षः । ब्रह्मकरणानीति सिद्धान्तः । तत्र 'दृष्टाऽयुक्तिः'इत्युक्तं तर्करूपं न्यायं आपादकप्रदर्शनपूर्वकं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न चेन्द्रियाणामिति ॥ जीवाकरणत्वे जीवाप्रयोज्यत्वे, अनुभवेन दृष्टस्य जीववशत्वस्य, अयुक्तिः अयोगः । एवं च जीवाकरणत्वे दृष्टाऽयुक्तेर्ब्रह्मकरणत्वाभावाद्ब्रह्मकरणत्वश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति च नेति भावः । (अयं च न्यायः 'प्राणवता शब्दात्' इत्यनेन, 'तस्य च नित्यत्वात्' इत्यनेन वा जीवकरणत्वश्रुतेर्गतिं वदता, ईश्वरकरणत्वाङ्गीकारे दृष्टस्य 'जीवस्य करणान्याहुः' इति श्रुत्युक्तस्य जीवकरणत्वस्यायुक्तिः स्यादिति सूचकेन सूचितः ।) तद्धेतुत्वेन 'दृष्टाऽयुक्तिः'इत्युक्ततर्करूपं न्यायं पूर्वपक्षनिरासकत्वेन विवृणोति ॥ क्वचिदिति ॥ 'इन्द्रियाणाम्' इत्यनुवर्तते । क्वचित् विषयविशेषे कालविशेषे वा । अतद्वशत्वस्य जीवानधीनत्वस्यापि दृष्टत्वात् अनुभवसिद्धत्वान्न जीवकरणत्वमित्यर्थः । तदुक्तं– 'उपलब्धिवदनियमः' इति । ततश्च जीवकरणत्वे दृष्टस्यातद्वशत्वस्यायुक्तेरिति विवृतं भवति । अनेन पूर्वपक्षहेतोरसिद्धिरुक्ता भवति । इदानीं स्वपक्षसाधकत्वेनापि विवृणोति ॥ यश्चक्षुषीति ॥ आदिपदेन 'यो वाचि तिष्ठन्' इत्यादेः सङ्ग्रहः । इत्यादिश्रुत्या दृष्टस्य प्रमितस्य, ईशाधीनत्वस्य ईशकरणत्वस्यानङ्गीकारेऽयुक्तेरित्यर्थः । तर्हि 'चक्षुषा पश्यामि'इत्याद्यनुभवस्य, 'जीवस्य करणान्याहुः' इति श्रुतेश्च का गतिरित्यत

आह ॥ लौकिकदृष्टेस्त्विति ॥ श्रुतेरित्यपि ग्राह्यम् । जीवानुसारित्वं जीवाधीनत्वम्। तथा चेन्द्रियाणां नियमेन जीवानधीनत्वम् । इदमहं चक्षुषा पश्यामीत्यादीच्छायामपि तद्दृष्टेः । क्वचित्तद्दृष्टिरस्तु ईश्वरदत्तजीवाधीनत्व-विषयकत्वेनोपपन्नेति भावः । यथोक्तं– 'स्वातन्त्र्यं तु जडान् प्रति' इति । एवं च दृष्टाऽयुक्तेर्ब्रह्मकरणत्वमेवाङ्गीकार्यमिति युक्तं श्रुतिसमन्वयेन जगत्कारणत्वमिति भावः । (अयं च न्यायः 'तदामननात्' इत्यनेन जीवकरणत्वाङ्गीकारे 'यः प्राणे तिष्ठन्' इत्यादि श्रुत्युक्तस्येश्वरकरणत्वस्यायुक्तिः स्यादिति सूचनेन सूचितः ।) ॥ १० ॥

## इन्द्रियाधिकरणम् II-4-11

न्या.वि. — न चेशवशत्वसाम्यात् मुख्यप्राणस्याप्यन्यसाम्यम् । 'यदस्मिन्निदं सर्वमध्यार्ध्नोत्, । 'प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्' इत्यादिश्रुतेरीशसाम्यस्यापि भावात्। 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति मध्यमत्वोपपत्तेः ॥ ११ ॥

भा.बो.— ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ इत्यत्र 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि' इति 'द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादशे''ति श्रुतिविगानेन सर्वेषां त्रयोदशानामपि प्राणानामिन्द्रियत्वमुत द्वादशानामेवेति सन्देहे सर्वे प्राणा इन्द्रियाणीति पूर्वः पक्षः । मुख्यप्राणमृते द्वादशैवेति सिद्धान्तः । तत्र समानत्वमित्युक्तन्यायं साध्यप्रदर्शनपूर्वकं पूर्वपक्षसम्बन्धित्वेन विवृण्वन् प्रतिक्षिपति ॥ न चेशवशत्वसाम्यादिति ॥ अन्यसाम्यं अन्येन चक्षुरादिना इन्द्रियत्वादिना साम्यमित्यर्थः । एवं च मुख्यस्यापि चक्षुरादिना समानत्वेनेन्द्रियत्वात् त्रयोदशत्वश्रुतिविरोधेन द्वादशत्वश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वमिति च नेति भावः । (अयं च न्यायः 'वैलक्षण्यात्'इत्यनेन, ईश्वरवशत्वसाम्येऽपि एवं तावद्वैलक्षण्यादिति वदता सूचितः ।) तद्धेतुत्वेन 'समानत्वम्'इत्युक्तन्यायं श्रुत्युदाहरणपूर्वकं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ यदस्मिन्निति ॥ यत् किञ्चिज्जगत्प्रसिद्धं, इदं सर्वं अस्मिन् प्राणेऽध्यार्ध्नोत् । त्रिदिवे स्वर्गलोके,



यत्प्रतिष्ठितमेतत्सर्वं प्राणस्य वशे तिष्ठतीत्यादेः प्रमाणादीशसाम्यस्यापि भावान्नान्यसाम्यमित्यर्थः । अपिपदेनेशवशत्वेन चक्षुरादिसाम्यं समुच्चिनोति । ननु प्राणस्येशसाम्ये एतेन मातरिश्वेत्युक्तविरोध इत्यत आह ॥ प्राणस्येति ॥ नन्वीशसाम्यमीशवशत्वं च मुख्यप्राणस्य विरुद्धमित्यतो वाऽऽह ॥ प्राणस्येति ॥ एवं च मुख्यप्राणस्य सर्वजगत्कर्तृकारयितृत्वेनेशसमानत्वेनेन्द्रियत्वाभावाद्द्वा-दशत्वश्रुतेरप्रामाण्यासम्भवाद्युक्तं श्रुतिसमन्वयेन जगत्कर्तृत्वमिति भावः । (अयं च न्यायो 'भेदश्रुतेः'इत्यनेन 'स्थित एव हीदम्'इतीश्वरसाम्यश्रुतेरिति वदतोक्तः । 'श्रेष्ठात्' इत्यनेन वा सूचितः ।) ॥ ११ ॥

## संज्ञाधिकरणम् II-4-12

न्या.वि. — न च विरिञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टा ।

त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥
अतो रूपस्य नाम्नश्च व्यवहारस्य चैकराट् ॥
हरिरेव यतः कर्ता पिताऽतो भगवान्प्रभुः ॥
इत्यादेस्तस्यैव कर्तृत्वशक्तेर्विरिञ्चस्य तु द्वारतयोपपत्तेः ॥१२॥

भा.बो.— ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ इत्यत्र 'विरिञ्चो वा इदं विरेचयति' इति, 'अथ कस्मादुच्यते परम इति, परमाद्ध्येते नामरूपे व्याक्रियेते' इति श्रुतिविगानेन शरीरादिकं किं विरिञ्चसृष्टं परमात्मसृष्टं वेति सन्देहे विरिञ्चसृष्टमिति पूर्वः पक्षः । परमात्मसृष्टमेवेति सिद्धान्तः । तत्र 'कर्तृशक्तिः'इत्युक्तन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च विरिञ्चस्येति ॥ आदिपदेनेश्वरसङ्ग्रहः । कर्तृत्वशक्तेः नामरूपात्मकदेहादि-सर्जकत्वशक्तेः स एव विरिञ्च एव स्वातन्त्र्येण, न त्वीश्वरकृतसृष्टिद्वारत्वेन । एवं च विरिञ्चस्यापि कर्तृत्वशक्तेर्विद्यमानत्वेन 'विरिञ्चो ह वा'इति प्रबलश्रुतिविरोधेन 'अथ कस्मादुच्यते' इति श्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेन विष्णोर्जगत्कर्तृत्वं युक्तमिति च नेति भावः । (अयं च न्यायः 'त्रिवृत्कुर्वतः'

इत्यनेन त्रिवृत्कुर्वत इत्यस्य सावधारणत्वाङ्गीकारेण परमात्मन एव देहादिस्रष्टृत्वं नान्यस्येति वदता निषेध्यतया सूचितः ।) तद्धेतुत्वेन 'कर्तृशक्तिः' इत्युक्तन्यायं प्रमाणोदाहरणपूर्वकं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ त्रिवृत्क्रियेति ॥ त्रिवृत्क्रिया यतो विष्णोः, अतो रूपस्य नाम्नश्चेत्यन्वयः । तदुपपादनं 'रूपञ्च'इत्यादि । हरिरेव कर्ता यतः, अतः पितेत्यर्थः । तस्यैव 'हरेरेवे'ति सावधारणत्वादित्यर्थः । 'विरिञ्चो वा' इत्यादेः का गतिरित्यत आह ॥ विरिञ्चस्य त्विति ॥ एवं च विष्णोरेव कर्तृशक्तेः श्रुतिप्रामाण्यसम्भवाद्युक्तं विष्णोर्जगत्कर्तृत्वमिति भावः । (अयं च न्यायः 'त्रिवृत्कुर्वत उपदेशात्' इत्यनेनोक्तः ।) ॥ १२ ॥

## मांसाधिकरणम् II-4-13

**न्या.वि. — न च विमिश्रितत्वाद्भूतानां विमिश्रतायामविशेषः । 'अन्नमशितं त्रेधा विधीयते' इत्यादिना मिश्रतायामपि विशेषोक्तेः ।**

**सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि विशेषिता ।**
**भौमं मांसमसृग्वारि तेजो मज्जा विशेषतः ॥**
**इत्यादेश्च ॥ १३ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमन्न्यायविवरणे द्वितीयाध्यायस्य चतुर्थः पादः ॥**

**द्वितीयाध्यायश्च समाप्तः ॥**

भा.बो.— ॐ मांसादिभौमं यथाशब्दमितरयोश्च ॐ ॥ इत्यत्र 'अद्भ्यो ह्रीदमुत्पद्यते आपो वा व मांसं' इति, 'पृथिवी शरीरं' इति, 'सोऽग्नेर्देवयोन्या आहुतिभ्यो हिरण्यशरीरः' इति 'इमास्तिस्रो देवताः' इति श्रुतिविगानेन देहः किमाप्यः किं वा पार्थिवः किं वा तैजसः उत भूतत्रयात्मको वेति सन्देहे आप्य एव, पार्थिव एव, तैजस एवेति वा पूर्वः पक्षः । भूतत्रयात्मक इति सिद्धान्तः । तत्र 'विमिश्रता' इत्युक्तन्यायं साध्यप्रदर्शनपूर्वकं पूर्वपक्षसम्बन्धित्वेन



विवृण्वन् प्रतिक्षिपति ॥ न च विमिश्रितत्वादिति ॥ भूतानामिति पूर्वोत्तराभ्यां सम्बध्यते । शरीरगतभूतानां अप्तेजःपृथिवीरूपाणां, परस्परमिश्रतायामभ्युपेतायां मिश्रत्वादेव अविशेषः 'आपः शरीरम्' इत्यादि शरीरस्य अप्त्वादिना विशेषोक्तिर्न स्यादित्यर्थः । एवं च भूतानां विमिश्रतायां विशेषोक्त्ययोगात्तत्प्रतिपादकश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति च नेति भावः । (अयं च न्यायः 'वैशेष्यात्तु तद्वादस्तद्वादः' इत्यनेन विमिश्रत्वेऽपि 'इदं पार्थिवमिदमाप्यम्' इति विशेषोक्तेर्निमित्तकथनेन सूचितः ।)

तद्धेतुत्वेन विमिश्रतेत्युक्तन्यायं प्रमाणोदाहरणपूर्वकं सिद्धान्तसम्बन्धित्वेनापि विवृणोति ॥ अन्नमशितमिति ॥ मिश्रतायामपि विशेषोक्तेरित्यनेन 'विमिश्रता' इत्यत्र 'वि' इत्युपसर्गार्थ उक्तो भवति । (ततश्च विशेषेण सह मिश्रतेति न्यायविवरणं कृतं भवति ।) ननु अन्नमित्यादिविशेषोक्तेर्भूतानाममिश्रत्वेऽपि सम्भवात्कथं मिश्रतायामपि विशेषोक्तिः कथं वा कारणविशेषमन्तरेण मिश्रतयां विशेषोक्तिः । न हि कारणविशेषमन्तरेण बहुषु सत्सु, देवदत्तोऽत्रास्तीति विशेषोक्तिर्दृष्टेत्यत आह ॥ सर्वं चेति ॥ आदिपदेन 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता' इत्यादि भाष्योदाहृतप्रमाणसङ्ग्रहः । एवं च विमिश्रतया देहस्य पाञ्चभौतिकत्वेऽपि श्रुतिप्रामाण्योपपत्तेर्युक्तं हरेः श्रुतिसमन्वयेन जगत्कर्तृत्वमिति भावः । (अयं च न्यायः 'यथाशब्दमितरयोश्च' इत्यनेन भूतानां विमिश्रत्वात्तज्जन्यस्य शरीरस्याप्यनेकभूतकार्यत्वमिति वदता सूचितः । अत एव तद्व्याख्याते तत्वप्रकाशिकायां 'न मांसादीनां केवलपार्थिवादित्वं, किं नाम, तत्राप्तेजसोश्च कार्यमङ्गीक्रियते शब्दवशात् । अतो मांसस्याप्यत्वोक्तिर्युक्तेति भावः' इति ।) ॥ १३ ॥

॥ इति श्रीमन्न्यायविवरणभावबोधे श्रीरघूत्तमयतिकृते
द्वितीयाध्यायस्य चतुर्थः पादः ॥
द्वितीयाध्यायश्च समाप्तः ॥

# तृतीयाध्याये प्रथमः पादः

## तदंतराधिकरणम् III-1-1

**न्या.वि. — 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' इति वचनात्स्वाभाविकमरणमेव मुक्तिरिति न मन्तव्यम् । मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशान्मरणे भूतवियोगस्यैवाभावात् । 'भूतयुक्तः परं लोकमिमं लोकं च गच्छति' इत्यादिवचनाच्च ॥ १ ॥**

भा.बो.— वैराग्यसाध्योपास्तिसाधनभक्तेः पुरुषप्रयत्नाविषयत्वेनाविधेयत्वात् तदुत्पत्त्यर्थं भगवत्प्रीतिसाधनविचार परतृतीयाध्याये मोक्षसाधनेषु वैराग्यस्य प्राथमिकत्वात्तत्प्रतिपादनाय प्रथमः पादः प्रवृत्तः । तदन्तर्गताधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः ।

स्वाभाविकाऽन्यथानामस(ह)हाभावान्यथोक्तयः ।
अविशेषविशेषौ च सहभावो विमिश्रता ।
विरुद्धोक्तिः सहस्थानं वैयर्थ्यं चान्यथागतिः ॥
युक्तयः पूर्वपक्षस्य गुणाधिक्याऽर्थतो भवौ ।
उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता ।
योग्यता बलवत्त्वं च विभागः कारणाभवः ।
क्लृप्तिरन्या गतिश्चैव सिद्धान्तस्यैव साधकाः ॥ इति ।

ॐ तदन्तरप्रतिपत्तौ रंहतिसम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ॥ इत्यत्र 'अथातो ब्रह्मजिज्ञासा'इति सूत्रगताथशब्देन वैराग्यादेर्मोक्षसाधनतोक्त्या वैराग्यादेर्मोक्षान्वयव्यतिरेकदर्शनाद्वैराग्यादिकं मुमुक्षुणाऽनुष्ठेयं न वेति सन्देहे नानुष्ठेयं मुमुक्षुणेति पूर्वः पक्षः । अनुष्ठेयमेवेति सिद्धान्तः । तत्र 'स्वाभाविका' इत्युक्तन्यायं प्रमाणोदाहरणपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ भूतबन्धस्त्विति ॥ मरणस्य स्वाभाविकत्वं नाम 'जातस्य हि ध्रुवो मृत्युः' इत्यादिप्रमाणोक्तनियतत्वम् । तादृशमरणेऽपि सर्वात्मना भूतवियोगो भवतीति पूर्वपक्ष्यभिप्राय



इति ज्ञातव्यम् । एवं च भूतवियोगरूपमरणस्यैव मोक्षत्वात् मरणस्य स्वाभाविकत्वेन वैराग्यानपेक्षणात् । जिज्ञासासूत्रानुपपत्तिरिति न मन्तव्यमिति भावः । (अयं च न्यायः 'तदन्तरप्रतिपत्तौ' इत्यनेन स्वाभाविकमरणमेव मुक्तिरिति सूचितः ।) तद्धेतुत्वेन 'गुणाधिक्य' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ मुक्तिसाधनत्वेनेति ॥ गुणानामाधिक्यम् अपरोक्षत्वादिरूपम् । नन्वपरोक्षज्ञानाद्यभावेऽपि स्वाभाविकमरण एव भूतवियोगस्य जायमानत्वात्तस्यैव च मोक्षत्वादुपदिष्टमपि ज्ञानादिकं न मुक्तिसाधनं व्यभिचारादित्यत आह ॥ भूतयुक्त इति ॥ भूतेत्यतः पूर्वं सर्वात्मनेति शेषः । मरण एव सर्वात्मना भूतवियोगे गुणाधिक्योपदेशो न स्यात् । एवं च मुक्त्यर्थं गुणाधिक्योपदेशेन स्वाभाविकमरणस्य मुक्तित्वाभावादनुष्ठेयमेव मुमुक्षुणा वैराग्यादिकमिति न जिज्ञासा सूत्रानुपपत्तिरिति भावः । (अयं च न्यायः मरणं विना देहान्तरप्राप्तेरयोगात् 'सम्परिष्वक्तः' इत्यनेन, मुक्तिव्यतिरिक्तमरणे भूतपरिष्वङ्गः, मुक्तिरूपे तु तदभावः, इत्यत्र ज्ञानादिगुणाधिक्यस्यैव नियामकत्वात्सूचितः ।) ॥ १ ॥

## त्र्यात्मकत्वाधिकरणम् III-1-2

**न्या.वि.— 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्यत्र भूतानीति सामान्यनामानुक्त्वाऽऽपामिति विशेषनामकथनादपामेव सहगतिरिति न वाच्यम् । त्र्यात्मकत्वादपामर्थतः सर्वभूतानां गतिप्राप्तेः ॥ २ ॥**

भा.बो. — ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ इत्यत्र 'भूतपरिष्वक्तो रंहति'इति साधारणवचनस्योभयथाप्युपपत्त्या मरणे सर्वभूतानि किं जीवं परिष्वज्य गच्छन्ति उत नेति सन्देहे न सर्वाणीति पूर्वः पक्षः । सर्वाणीति सिद्धान्तः । तत्र 'अन्यथानाम' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ इति तु पञ्चम्यामिति ॥ उदाहृतश्रुतौ भूतानीत्यनुक्त्वा, आपः इत्येव वचने अपामपि भूतत्वात्पूर्वपक्षसाधकत्वं न स्यादित्यतः सामान्यनामानुक्त्वेत्युक्तम् । सामान्य(नामा)पेक्षया विशेष(नाम्नोऽ)स्यान्यथात्वा(त्त)द्व्याख्यानार्थं

विशेषनामेत्युक्तम् । अपामेवेत्येवकारसामर्थ्येन न सर्वभूतानां जीवेन सहगमनमिति साध्यसिद्धिः । एवं च श्रुतौ 'आपः' इत्यन्यथानामोक्तेः समस्तभूतपरिष्वङ्गाभावादेकस्य च शरीरानारम्भकत्वान्मरण एव मोक्षसिद्धेर्व्यर्थं वैराग्यादीति न वाच्यमिति भावः । (अयं च न्यायः 'भूयस्त्वात्' इत्यनेन 'अप्' शब्दप्रयोगगतिं वदता सूचितः । सामान्यनामापेक्षया विशेषनाम्नोऽन्यथात्वात् ।) तद्धेतुत्वेन 'अर्थतो भवः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ त्र्यात्मकत्वादिति ॥ सर्वभूतानां गतीति शेषोक्तिः । भवशब्दस्यार्थः प्राप्तेरिति । एवं च सर्वभूतगतेरर्थतो भवान्मरणस्यैव मुक्तित्वाभावेनानुष्ठेयमेव वैराग्यादीति भावः । (अयं च न्यायः 'त्र्यात्मकत्वात्' इत्यनेन अपां भूतत्रयात्मकत्वादपां सहगमनेन भूतानां सहगतिरपि सिद्धैवेति सूचितः।) ॥ २ ॥

## प्राणगत्यधिकरणम् III-1-3

**न्या.वि.— न च भूतानि गच्छन्तीति सहैवानुक्तेस्तदभावः । प्राणगतेरुपपत्तित उक्तत्वात् ॥ ३ ॥**

**भा.बो.—** ॐ प्राणगतेश्च ॐ ॥ इत्यत्र साधकबाधकप्रमाणाभावेन भूतानां जीवेन सह गत्यगतिसम्भवाद्भूतानि मरणे जीवेन सह गच्छन्ति न वेति सन्देहे न गच्छन्तीति पूर्वः पक्षः । गच्छन्तीति सिद्धान्तः । तत्र सहाभावेत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भूतानीति ॥ भूतानीत्यतः परमध्याहृतेन जीवेनेत्यनेन सहैवेत्यस्य सम्बन्धः । एवकारस्य गच्छन्त्येवेति वा सम्बन्धः । अनुक्तेः उक्त्यभावादित्यर्थः । एतेन 'सहाभाव' इत्येतज्जीवेन सह गत्युक्त्यभाव इति विवृतं भवति । न च प्रश्नव्याख्यानरूपोक्तेः सद्भावादसिद्धो हेतुरिति वाच्यम् । तयोरपि भूतैः सहगमनस्यानुक्तत्वात् । आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेणासम्भवादिति तदुपमर्देन प्रत्यवस्थानादिति भावः । एवं च सहगत्युक्त्यभावान्न भूतानां सहगमनमिति पूर्वपक्षो नेति भावः । (अयं च न्यायः 'प्राणगतेः' इत्यनुमानेन भूतगतिं साधयता,जीवेन सहगत्युक्तेरभाव इति सूचितः ।) तद्धेतुत्वेन 'उपपत्तिः'इत्युक्तसिद्धान्तन्यायमुपपत्तिप्रदर्शनपूर्वकं विवृणोति ॥ प्राणगतेरिति



॥ प्राणगतेरुपपत्तित इति सामानाधिकरण्यम् । अनुक्तेरिति पूर्वपक्षदूषणाय उक्तत्वादित्युक्तम् । वस्तुतः सिद्धत्वादित्यर्थः । अयं भावः । अस्ति तावद्भूतानामिन्द्रियैरविनाभावः । 'यत्र वा व भूतानि तत्र करणानि'इति श्रुतेः । अतो व्यापकप्राणगतेस्तद्व्याप्यभूतानां चास्ति जीवेन सहगतिः । तथा च प्रयोगः– भूतानि जीवेन सहगमनवन्ति, तत्सहगन्तृप्राणाविनाभूतत्वात्, यद्येन सह यत्राविनाभूतं तत्तेन सह गच्छति । यथा राज्ञा सह गन्त्रमात्याविनाभूतभृत्यः इति । तथा चोपपत्तितो भूतगतिसिद्धेः प्रागुक्तं युक्तमिति । (अयं च न्यायोऽविनाभावसूचकचशब्दशिरस्केन प्राणगतेश्चेत्यनेनोक्तः ।) ॥ ३ ॥

## अग्न्यादिगत्याधिकरणम् III-1-4

**न्या.वि.— न च 'अग्निं वागप्येति' इत्याद्यन्यथोक्तेः प्राणानां च न सहगतिः । द्विरूपत्वात्प्राणानाम् ॥ ४ ॥**

**भा.बो.—** ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ इत्यत्र निर्णायकप्रमाणाभावेन मरणे प्राणा जीवेन सह गच्छन्ति न वेति सन्देहे नेति पूर्वः पक्षः । गच्छन्तीति सिद्धान्तः । तत्र 'अन्यथोक्तिः'इत्युक्तन्यायं साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाग्निमिति ॥ आदिपदेन 'वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्'इति श्रुतिशेषग्रहणम् । जीवेन सहगत्युक्त्यपेक्षया वागादीनामग्न्यादिगत्युक्तेरन्यथात्वम् । ततश्च प्राणाविनाभूतभूतानामपि जीवेन सहगत्युक्त्यपेक्षया वागादीनामग्न्यादिगत्युक्तेरन्यथात्वम् । ततश्च प्राणाविनाभूतभूतानामपि जीवेन सहगतिरिति चशब्दः । एवं च प्राणगतेरन्यथोक्तेः प्राणानां जीवेन सहगत्यभावात्तद्व्याप्तभूतानामपि सहगत्यभावान्मरणमेव मोक्ष इति वैराग्यादिवैयर्थ्यमिति नेति भावः । (अयं च न्यायोऽग्न्यादिगतिश्रुतेः इत्यनेनोक्तः ।) तद्धेतुत्वेन 'द्विरूपत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ द्विरूपत्वादिति ॥ 'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति'इति प्रमाणबलात्प्राणानां भागेनाग्न्यादीन्प्रति गतेर्विद्यमानत्वेन यत्रास्येति श्रुतेस्तद्विषयत्वादित्यर्थः । एवं च प्राणानां द्विरूपत्वादेकेन रूपेण जीवेन सहगतिसद्भावात्तद्व्याप्तभूतानामप्यस्ति

जीवेन सहगतिरिति न वैराग्यादिवैयर्थ्यमिति भावः । (अयं च न्यायो 'भाक्तत्वात्' इत्यनेनोक्तः ।) ॥ ४ ॥

## प्रथमा(मे श्रवणा)धिकरणम् III-1-5

**न्या.वि. — न च 'प्रथमतो भूतानि जुह्वति' इति विशेषानुक्तेर्भूतानामसहगतिः। भूतानि जुह्वति' इत्युपक्रमादपि 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारस्याधिक्यात् तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्यापत्तेः । उपक्रमविरोधेनोपसंहारानुपपत्तेः । उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकार्यम् । व्याख्यानस्य पश्चात्तनत्वनियमात् । उपक्रमानुसारित्वनियमेऽप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायते ॥ ५ ॥**

भा.बो.— ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ इत्यत्र मरणे सति जीवेन सहगतिमत्प्राणानामनेवंविधानां च वस्तूनां दर्शनेन, भूतानि जीवेन सह गच्छन्ति न वेति सन्देहे, नेति पूर्वः पक्षः । गच्छन्तीति सिद्धान्तः । तत्र 'अविशेष'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रथमत इति ॥ सूत्रे 'प्रथमे' इति, अत्र 'प्रथमतः' इति, 'प्रथमाग्नौ' 'उपक्रमे' इति चोभयार्थकं तन्त्रेणोपात्तम् । विशेषानुक्तेरित्यनेन अविशेषेत्येतत् विशेषोक्त्यभाव इति विवृतं भवति । यदि भूतानां मरणकाले जीवेन सहगतिः स्यात् तर्हि 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युपक्रमवाक्ये, ह्याख्य प्रथमाग्नौ श्रद्धयेष्टवत उत्क्रान्तस्य श्रद्धां जुह्वतीति श्रद्धासाहित्येन होमश्रवणवत्, भूतानि जुह्वतीति भूतसाहित्येन होमश्रवणं स्यादिति भावः । एवं च (श्रद्धां जुह्वतीतिवद्भूतानि जुह्वतीति विशेषोक्त्यभावात्) अविशेषाद्भूतानां सहगत्यभावेन मरणस्यैव मोक्षत्वाद्व्यर्थं वैराग्यादीति नेति भावः । (अयं च न्यायः 'प्रथमेऽश्रवणात्' इत्यनेनोपक्रमे भूतानि जुह्वतीति विशेषोक्त्यभावादित्युक्तः) । तद्धेतुत्वेन आधिक्यमित्युक्तसिद्धान्तन्यायं तत्साध्यत्वेन 'ता एव ह्युपपत्तेः'इति सौत्रसिद्धान्तांशार्थप्रदर्शनपूर्वकं विवृणोति ॥ भूतानीति ॥ अत्र श्रद्धामिति वक्तव्ये



भूतानीत्युक्तिः 'किमु श्रद्धां जुह्वती'त्युपक्रमात्' इति कैमुत्यद्योतनार्था । अत एवापिपदम् । अन्यथा तद्व्यर्थं स्यात् । यद्वा भूतानां सहगतौ 'भूतानि जुह्वती'त्युपक्रमः स्यादिति यदुक्तं तन्न, 'भूतानि जुह्वती'त्युपक्रमादपि 'इति तु पञ्चम्यामाहुतावापः' इत्युपसंहारस्यैवाधिक्यादिति । ततश्चैवमुपक्रमाभावेऽपि प्रबलोपसंहारबलाद्भूतानां सहगतिः सिद्ध्यतीति भावः ॥ (आधिक्यादिति ॥ एकप्रकरणे प्रथमेनार्थे धीस्थे, चरमस्य तद्विषयस्य, प्रथमस्थाचारस्य, विरोधेनाप्यवैयर्थ्यायावश्यकल्पनीयक्रमव्याख्यानस्य प्राबल्यादित्यर्थः । अनेन सौत्रहिशब्दाभिप्राय उक्तो भवति) ।

ता एवेत्येवकारेण सौत्रेणानूदितेन अपां प्रस्तुतत्वं श्रद्धाशब्दार्थत्वस्यावश्यकत्वं चाह, न तु श्रद्धाशब्दस्य तद्व्यतिरिक्तार्थान्तरव्यावृत्तिः । श्रद्धाशब्देनाजहल्लक्षणया श्रद्धयाद्भिश्च विशिष्टस्य जीवस्य विवक्षितत्वात् । ननूपसंहारस्य व्याख्यानत्वेन प्राबल्येऽपि कुतस्तदनुसारेणात्रोपक्रमोक्तश्रद्धाशब्दस्याबर्थकत्वोपपत्तिरित्यतः 'उपपत्तेः'इति सूत्रांशाभिप्रायमाह ॥ उपक्रमविरोधेनेति ॥ उपसंहारानुसारेणोपक्रमार्थकल्पन एव प्रबलोपसंहारोपपत्तेः । अन्यथा तदनुपपत्तेरिति भावः । यद्वा दुर्बलोपक्रमविरोधेन प्रबलोपसंहारस्यार्थान्तरकल्पनस्यानुपपत्तेरिति व्याख्येयम् । यद्युपक्रमगतश्रद्धाशब्दस्य तन्मात्रार्थत्वं तर्ह्यपामप्राप्तत्वेन 'आपः पुरुषवचसो भवन्ति'इति अपामनुवादो न स्यात् । अप्राप्तानुवादस्यासम्भवेन विरुद्धत्वात् । न च 'पर्जन्यो वा व गौतमाग्निः'इत्यादिवाक्यानां मध्येमार्ग(र्ग) प्राप्तसोमादिविषयत्ववत् आपः पुरुषवचसो भवन्तीत्युपसंहारस्य मध्येमार्गं प्राप्ताब्विषयकत्वेनागमनमात्रविषयकत्वं वाच्यम् । भूतानि त्यजतीत्यनुक्त्वा 'सोमो राजा सम्भवति'इत्यादिवत्, 'आपो भवन्ति'इत्यनुक्त्वा 'आपः पुरुषवचसो भवन्ति'इत्यनुवादादिति । ननु तथापि उपसंहारानुसारित्वमुपक्रमस्य कुत इत्यत आह ॥ उपक्रमप्रामाण्यार्थमिति ॥ एवशब्देनाङ्गीकारस्यावश्यकत्वमाह । तथा चोपसंहारस्योपक्रमव्याख्यानरूपत्वेन प्राबल्यादुपक्रमप्रामाण्योपपत्त्यर्थमेवोपसंहारानुसारित्वमवश्यमङ्गीकर्तव्यम् । व्याख्यानाननुसारिव्याख्येयस्य तदर्थे प्रामाण्यादर्शनादित्यर्थः । अनेन 'उपपत्तेः'इत्येतदुपक्रमप्रामाण्योपपत्तेरिति प्रकारान्तरेण व्याख्यातं भवति ।

नन्ववैयर्थ्यान्यथानुपपत्त्या कल्प्यमानं व्याख्यानत्वं परस्योपसंहारस्यैव नोपक्रमस्येत्यत्र को विशेषहेतुरित्यत आह ॥ व्याख्यानस्येति ॥ नोपक्रमस्य व्याख्यानरूपत्वं कल्प्यम् । तस्य पश्चात्तनत्वनियमात्– तद्व्याख्यानं तत्पश्चात्तनमिति व्याप्तेः । अतः परिशेषादुपसंहारस्यैव पश्चात्तनस्य व्याख्यानरूपत्वं कल्प्यमिति भावः ।

ननु 'अथ कस्मात्'इत्यादौ व्याख्यानस्य पश्चात्तनत्वेऽपि 'वानात्सूतेर्देवनाद्वासुदेवः' इत्यादौ व्याख्यानस्य पूर्वतनत्वस्यापि दर्शनेन व्यभिचारात्कथं व्याख्यानस्य पश्चात्तनत्वनियम इति चेन्न, यतोऽत्र पश्चात्तनत्वं नाम पश्चात्पाठो न विवक्षितः किं तु पश्चादुपस्थितत्वम् । लोके व्याख्येयोपस्थितिं विना तद्व्याख्याने प्रवृत्तेरेवादर्शनादसम्भवाच्च । तथा च लोकानुसारेण व्याख्येयव्याख्यानयोस्तद्भावोपपत्तये पूर्वोपस्थितत्व पश्चादुपस्थितत्वनियमस्यावश्यकत्वे, 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन 'वानात्सूतेः'इत्यत्रापि व्याख्यानस्यैव पश्चादुपस्थितत्वमङ्गीकार्यम् । उपोद्घातप्रक्रियया पूर्वपाठोपपत्तेः। ननु 'वानात्सूतेः'इत्यादौ पश्चात्पठितस्यापि व्याख्येयस्य वासुदेवादिपदस्य पूर्वमुपस्थितिवत् , पश्चात्पठितस्याप्युपसंहारस्य पूर्वमुपस्थितिसम्भवेन व्याख्यानत्वप्रयोजकपश्चादुपस्थितत्वलक्षणपश्चात्तनत्वमुपसंहारस्यासिद्धमिति चेन्न, 'वानात्सूतेः'इति पूर्ववाक्यस्य पश्चात्पठितवासुदेवपदव्याख्यानत्ववत् उपक्रमस्योपसंहारव्याख्यानरूपत्व-स्याक्लृप्तत्वेन पाठक्रमापवादकाभावान्नियतस्वाध्यायदशायां पाठक्रमानुसारेण जातयोरुपक्रमोपसंहारविषयकोपस्थित्योः पूर्वतनत्वपश्चात्तनत्वनियमस्यैवानुसरणात् । उपसञ्जातविरोधित्वेनोपसंहारदौर्बल्यं वदता परेणापि, तस्य पश्चादुपस्थितत्वस्यावश्यमङ्गीकार्यत्वाच्च । पश्चादुपस्थितस्यैव उपस्थितविरोधिकत्वरूपोपसञ्जातविरोधित्वसम्भवात् । उपस्थितिश्च पौरुषेयवाक्ये प्रणेतुः पुरुषस्य, वेदे त्वीश्वरस्य । तत्रेश्वराभिप्रायप्रवेशेन तस्येश्वरवाक्यत्वात्। यथोक्तं तत्वनिर्णयटीकायां 'पुरुषाभिप्रायप्रवेशोऽपि'इति । कर्मनिर्णयटीकायां च 'वेदोऽपौरुषेय इत्यस्माकं परेषां च यद्यपि समं तथापीश्वरवाक्यत्वं समस्तस्यापि वेदस्य वयमङ्गीकुर्मो न परे इति । ननु तथाप्युपक्रम एवोपसंहारापेक्षया प्रबल इत्यङ्गीकर्तव्यम् । उपक्रमाभावे उपसंहारस्वरूपनिष्पत्तेरेवाभावेन



उपसंहारस्योपजीवकत्वात् । येन विना हि यस्यानुत्थानं तत्तस्योपजीव्यम् । न ह्यनुपक्रान्तस्योपसंहारोऽस्तीत्याशङ्क्य परिहरति ॥ उपक्रमेति ॥ अनुसारित्वं सापेक्षत्वम् ।

अपिपदेन 'येन विना यस्यानुत्थानं तत्तस्योपजीव्यमित्यस्य भ्रमबाधादौ व्यभिचारं सूचयति ॥ तथा च स्वरूपेणोपसंहारस्योपक्रमसापेक्षत्वनियमः तथापि 'नदं व ओदतीनाम्'इत्यादिमन्त्रस्य 'ता नदेन विहरति' इत्यादिनिश्चितप्रामाण्यव्याख्यानानुसारेणार्थनिर्णयप्रामाण्यनिर्णयादि दर्शनात् । उपक्रमोपसंहारयोश्च व्याख्येयव्याख्यानभावस्य समर्थितत्वादर्थप्रतीतिप्रामाण्यनिर्णयादावुपक्रम एवोपसंहारसापेक्ष इत्यर्थप्रतीत्या(दौ) उपसंहारस्यैव प्राबल्यमित्यङ्गीकार्यमिति भावः । एतेनैवोपक्रमोपसंहारयोरनुपसञ्जातविरोधित्वोपसञ्जातविरोधित्वाभ्यां प्राबल्यदौर्बल्ये इत्यपि परास्तम् । भ्रमबाधादौ व्यभिचारादिति भावः । तस्मादुपक्रमापेक्षयोपसंहारस्यैवाधिक्यात्तदनुसारेण मरणे भूतगतिसिद्धेर्न वैराग्यवैयर्थ्यमिति । (अयं च न्यायः 'उपपत्तेः'इत्यनेन 'इति तु पञ्चम्यामाहुतावापः' इत्युपसंहारोपपत्तेरिति सूचितः । अन्यथा 'ता एव'इत्यवधारणानुपपत्तिः।) ॥ ५ ॥

## अश्रुतत्वाधिकरणम् III-1-6

**न्या.वि. — न च विशेषाश्रवणनियम एव बलवान् । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात् । आर्थिकश्रवणमप्यनुक्तिं बाधत एव । किमु स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव ''नेष्टादिकारिणां प्रतीते''रिति परिहारान्तरमुक्तम् ॥ ६ ॥**

भा.बो. — ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ इत्यत्र पूर्ववदुभयविधवस्तुदर्शनेन मरणे भूतानि जीवेन सह गच्छन्ति न वेति सन्देहे न गच्छन्तीति पूर्वः पक्षः । गच्छन्तीति सिद्धान्तः । तत्र 'अविशेषः' इत्युक्तमेव पूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च विशेषाश्रवणेति ॥ यत्रास्य पुरुषस्य मृतस्य वागग्निमप्येति प्राणानामग्न्यादीन् प्रति गतिप्रतिपादकप्रत्यक्षश्रुतिवत् भूतानां

जीवेन सह गतिप्रतिपादकप्रत्यक्षश्रुत्यभावादभावनियम एवेत्यर्थः । बलवानिति– 'इति तु पञ्चम्यामाहुतावापः' इति अब्गतिश्रवणरूपभूतगतिगोचरार्थिकश्रवणाद्व्यापकगतौ व्याप्यगतिरावश्यकीति न्यायेन भूतव्यापकप्राणगतिश्रवणरूपगूतगतिगोचरार्थिकश्रवणादपीति भावः । अत एव 'त्र्यात्मकत्वात्' 'प्राणगतेश्च'इत्यादिना निर्णीतत्वान्नैवं संशयाद्यवकाश इति न वाच्यम् । तदुपमर्देनाभ्यधिकाशङ्कायाः प्रत्यवस्थानात् । एवं च विशेषाश्रवणरूपाविशेषान्न भूतानां सहगतिरिति वैराग्यादिवैयर्थ्यमिति नेति भावः । (अयं च न्यायः 'अश्रुतत्वात्'इत्यनेन विशेषश्रवणाभाव इत्युक्तः ।) तद्धेतुत्वेन 'अनुरूपता'इति सिद्धान्तन्यायं विवृणोति ॥ स्थानान्तरेति ॥ 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति' इति स्थानान्तरे जीवेन सह भूतानां गतिश्रवणस्यापि एतदनुरूपत्वादार्थिकश्रवणानुकूलत्वात्, आर्थिकश्रवणमेवाश्रवणनियमापेक्षया प्रबलमित्यर्थः । न त्वार्थिकश्रवणस्य नेष्टादिकारिणामिति स्थानान्तरश्रवणानुकूल्यकथनं व्यर्थम् । आर्थिकश्रवणस्यैवाश्रवणवाचकत्वोपपत्तेः । न च आर्थिकश्रवणस्य बाधकत्वोपयोगिप्राबल्याय संवादित्वेन तत्कल्पनमिति वाच्यम् । संवादकप्रमाणाभावेऽपि प्राणगतिरूपयुक्तेर्व्याप्तिपक्षधर्मतयोः श्रुतिसिद्धत्वेनापां गतेरुपसंहाररूपप्रमाणसिद्धत्वेनार्थिकस्य प्राबल्योपपत्तौ तदर्थं तस्यावक्तव्यत्वादित्यत आह ॥ आर्धिकश्रवणमिति ॥ अनुक्तिं बाधत एवेति युक्तेरपि व्याप्तिलिङ्गग्राहकप्रामाण्येनैव भवितव्यम् । तच्च भूतानां प्राणव्याप्तत्वेन, प्राणानां जीवेन सहगतौ श्रुतिरूपम्, अपां सर्वभूतात्मकत्वेन जीवेन सहगतौ श्रुत्युपसंहाररूपमस्तीत्यार्थिकश्रवणस्यापि विशेषश्रवणवदश्रवणबाधकत्वमित्यर्थः।) एवं च स्थानान्तरश्रवणस्यार्थिकश्रवणानुरूपत्वात्, भूतानां सहगतिरुपपन्नैवेति न वैराग्यादिवैयर्थ्यमिति भावः । (अयं च न्यायः ''इष्टादिकारिणां प्रतीते''रित्यनेन 'अथैनं यजमानमिति स्थानान्तरश्रवणस्यापीत्येतदनुरूपत्वमित्युक्तः।) ॥ ६ ॥



## भाक्ताधिकरणम् III-1-7

**न्या.वि.— न च 'अपाम सोमममृता अभूम' इति विशेषत एव मोक्षफलस्याप्युक्तेः कर्मैव मोक्षसाधनमिति मन्तव्यम् । 'नान्यः पन्था अयनाय विद्यते' 'स य आत्मानमेव लोकमुपास्ते' 'यावदिन्द्रो यावन्मनुः' इत्यादिश्रुतिबलादमृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेः ॥ ७ ॥**

भा.बो.— ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ इत्यत्र फलार्थमवश्यानुष्ठेयाननुष्ठेयसाधनदर्शनाद्वैराग्यसाधनं किं मुमुक्षुणावश्यमनुष्ठेयं न वेति सन्देहे नावश्यमनुष्ठेयमिति पूर्वः पक्षः । अवश्यमनुष्ठेयमिति सिद्धान्तः । तत्र 'विशेषः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च 'अपाम सोम'इति ॥ अपामिति श्रुतौ 'अमृता अभूम'इति विशेषाकारेणैव मोक्षरूपफलस्य साक्षात्कर्मसाध्यतोक्तेः स्वर्गादेरिव मोक्षस्यापि ज्ञानद्वारमन्तरेण कर्मैव साधनमित्यर्थः । एवं च 'अपामसोमम्'इति वचनविशेषात् कर्मैव मोक्षसाधनमिति वैराग्यादिवैयर्थ्यमिति न मन्तव्यमिति भावः । (अयं च न्यायः 'भाक्तम्'इत्यनेन अपामिति श्रुतेर्गतिकथनेन सूचितः।) तद्धेतुत्वेन 'योग्यता'इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ नान्यः पन्था इति ॥ यथायोग्यमिति सोमयागादिकर्मणः काम्यस्य बहुकालीनत्वगुणयोगेन स्वर्गाख्यगौणामृतत्वस्य काम्यत्वेऽपि जिज्ञासुकृतकर्मणो ज्ञानद्वारा पारम्पर्येणैव मुख्यामृतत्वस्य तदेकदेशलक्षणया । ज्ञानिकतृस्य तु लक्षणयाऽमृतसाधनत्वेन (ज्ञानरूपामृतत्वस्य वा) आत्मज्ञानलब्धमोक्षे आनन्दाभिवृद्धिलक्षणातिशयरूपामृतत्वस्य (वा) श्रुतिगतामृतशब्दार्थत्वेन योग्यत्वात्तस्यैवार्थस्य कल्पनोपपत्तेः । स(र्वथा)र्वात्मना न कर्मणा साक्षात्संसारनिवृत्तिः श्रुत्यर्थः (इत्यर्थः।)

कुतो नैवं श्रुत्यर्थ इत्यत उक्तं ॥ नान्यः पन्था अयनाय विद्यत इति ॥ अमृतशब्दस्य आनन्दाभिवृद्धिरूपमुक्त्यर्थत्वे श्रुतिमाह ॥ स य इति ॥ स्वर्गाख्यगौणमुक्त्यर्थत्वे च तामाह ॥ यावदिन्द्र इति ॥ आदिपदेन पारम्पर्येण

मोक्षसाधनीभूतज्ञानसाधनत्वे च 'कर्मणा ज्ञानमातनोति'इति द्रष्टव्या । अत्र सौत्रभाक्तशब्देन प्रथमः पक्षः, वाशब्दात्पक्ष(द्वयं)त्रयं ज्ञापितमिति ज्ञातव्यम् । यद्यपि भाष्यतट्टीकयोः पक्षद्वयमेव वाशब्दार्थत्वेनोक्तं तथापि कर्मनिर्णयटीकायां 'अमृतशब्दस्य तत्साधनज्ञानलक्षणया'इति पक्षान्तरमप्येतत्सूत्रार्थतयोक्तमिति । एवं च श्रुत्यर्थतयाऽनेकेषां योग्यतया वैराग्याद्यनुष्ठानमन्तरेण मोक्षासिद्धेर्न वैराग्यादिवैयर्थ्यमिति भावः । (अयं च न्यायो 'भाक्तं वा'इत्यनेन श्रुतेर्यथायोग्यमर्थवर्णनेन सूचितः) ॥ ७ ॥

## कृतात्ययाधिकरणम् III-1-8

**न्या.वि. — न चानुशयस्य सहभावात्स्वर्ग एव फलदत्वम् । भुक्तशेषानुशयवानित्यादिवचनाद्यथायोग्यमेव फलदानोपपत्तेः ॥ ॥ ८ ॥**

**भा.बो.—** ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ॥ इत्यत्र पूर्वाधिकरणोक्तन्यायतदनपेक्षफलनिष्पत्तिदर्शनाभ्यां वैराग्यादिकं मुमुक्षुणाऽवश्य-मनुष्ठेयं न वेति सन्देहे नानुष्ठेयमिति पूर्वः पक्षः । अवश्यमनुष्ठेयमिति सिद्धान्तः । तत्र 'सहभावः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चानुशयस्येति ॥ अनुशयस्य, (भुक्तकर्मशेषस्य) कर्मणः, स्वर्गं गच्छता जीवेन सहभावात्, स्वर्गेऽकिञ्चित्फल(द)त्वाङ्गीकारादेवेत्युक्तम् । एवं च कर्मणः सहभावेन स्वर्ग एव फल(द)त्वोपपत्तेः । तत्र कर्मान्तरोपादानाभावात् । कर्माभावे च तन्मूलसंसारोच्छेदः स्वयमेव भवतीति न मुमुक्षुणाऽवश्यमनुष्ठेयं वैराग्यादीति नेति भावः । (अयं च न्यायः 'कृतात्ययेऽनुशयवान्' इत्यनेन कर्मणा सहभावादिति सूचितः । सहभावाभावे, अत्ययेऽनुशयवत्त्वं च न स्यात् ।) तद्धेतुत्वेन 'योग्यता'इत्युक्तसिद्धान्तन्यायमेव विवृणोति ॥ भुक्तशेषेति ॥ आदिपदेन 'यतः शेषेण'इति श्रुतिग्रहणम् । स्मृतेः श्रुत्यपेक्षया विवक्षिताशेषार्थप्रतिपादकत्वात्प्रतीकेन ग्रहणम् । एवं च सहगतस्यापि किञ्चित्कर्मण एव फलदानयोग्यतया न सर्वकर्मक्षय इति न वैराग्याद्यनुष्ठाने वैयर्थ्यमिति भावः । (अयं च न्यायः 'अनुशयवान्'इत्यनेनैव कर्मणा



यथायोग्यमेव फलदत्वमिति सूचितः । यद्वा 'दृष्टस्मृतिभ्याम्'इति प्रमाणे विशेषोक्त्या सूचितः ।) ॥ ८ ॥

## यथैताधिकरणम् III-1-9

**न्या.वि.— न च मार्गस्यापि सहभावाद्यथागतमेवागमनमिति नियमः । वचनबलाद्यथायोग्यमेवागमनोपपत्तेः ॥ ९ ॥**

**भा.बो.—** ॐ यथेतमनेवं च ॐ ॥ इत्यत्र यथागमनमन्यथा च गमनदर्शनात्स्वर्गं गतः किं गतिप्रकारेणागच्छत्यन्यथा वेति सन्देहे गतिप्रकारेणैवेति पूर्वः पक्षः । अन्यथा चेति सिद्धान्तः । तत्र 'सहभावः' इति पूर्वोक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च मार्गस्येति ॥ सहेत्यतः पूर्वं मन(सि)सः इति शेषः । सिद्धान्तिना गमनस्योभयथाऽप्यङ्गीकारात् एवेत्युक्तम् । तस्यैव विवरणं नियम इति । न हि विज्ञातं पन्थानं विहायाविज्ञातेन गमने प्रयोजनमस्तीत्यर्थः । एवं च गमन(मार्ग)स्य स्मृतिविषयतया मनसि सहभावेन, तेनैव गमनसम्भवे स्वर्गफलस्यापि क्लेशानुषङ्गाभावाद्वैराग्यादिवैयर्थ्यमिति नेति भावः । अयं च न्यायः यथेतमित्यनेन मार्गस्य संस्कारविषयत्वेन मनसि सहभाव इति सूचितः।) तद्धेतुत्वेन पूर्वोक्तमेव योग्यतेति सिद्धान्तन्यायं विवृणोति ॥ वचनबलादिति ॥ 'धूमादभ्रम्'इति विशेषवचनबलाद्योग्यं मार्गमनतिक्रम्यैवागमनोपपत्तेरित्यर्थः । (न च सहभावरूपयुक्तिविरोधः आगमने जीवस्यास्वातन्त्र्येण तत्स्मरणस्या-गमनानुपयोगित्वेनाप्रयोजकत्वात् । अत एव यथायोग्यमेवेति नियमव्य-वच्छेदायावधारणम् ।) एवं च मार्गद्वयस्यापि योग्यतया स्वर्गादागमनस्याति-क्लेशानुषङ्गान्नवैराग्यादि वैयर्थ्यमिति भावः । (अयं च न्यायः 'यथेतमनेवं च'इत्यनेन यथायोग्यमेवागमनमिति सूचितः।) ॥ ९ ॥

## चरणाधिकरणम् III-1-10

**न्या.वि.— न च 'इष्टापूर्ते दत्तमित्युपासते' इत्युपशब्दे-नेष्टादिभिराचारस्य सहपाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन**

**भ्रमाद्वदन्तीति वाच्यम् । 'नान्यः पन्थाः' इत्यादिवचनादेवो-भयोरपि चरणशब्देनैवोक्तेर्योग्यत्वात् ॥ १० ॥**

भा.बो.— ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥ इत्यत्र गतागतनिमित्तयोरुभयोरपि सहभावदर्शनेन यज्ञादिकं गतागतसाधनं न वेति सन्देहे नेति पूर्वः पक्षः । साधनमिति सिद्धान्तः । अत्रापि 'सहभावः' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चेष्टापूर्त इति ॥ न गतागतं यज्ञादिकर्मफलम् किन्तु चरणफलमेव । 'रमणीयचरणाः, कपूयचरणा' इति श्रुतेः । न च तयोरभेदः, 'अचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः' इति स्मृतेरङ्गाङ्गिभावेन भेदात् । ननु 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्युपक्रम्य 'तस्मिन्याव-त्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनरावर्तन्ते' इति श्रुतेर्गतागतस्य यज्ञादि-फलत्वप्रतीतेरयुक्तं चरणफलत्वकल्पनमित्यत उक्तम्– चरणफलमिति । पुनरावृत्तिमित्येकदेशोत्कीर्तनं, गमनमपीत्यपि ग्राह्यम् । यद्यप्यनया श्रुत्या गतागतस्य यज्ञादिफलत्वप्रतीतिर्जायते तथापि सा भ्रान्तिरेव । गतागतस्य चरणफलत्वादित्यर्थः । ननु कुतः, भ्रान्तिनिमित्ताभावादित्यत उक्तं ॥ इष्टादिभिराचारस्येति ॥ उपलक्षणमेतत् । स्वर्गेण गतागतस्य सहपाठादित्यपि द्रष्टव्यम् । तथा च इष्टादिभिराचारस्य, स्वर्गेण गतागतस्य च सहोक्तिरेव भ्रान्तिनिमित्तमित्यर्थः । स्यादेतत् । यद्यत्र इष्टादिभिराचारस्य सहपाठ एव भवेत् । स एव कुतः । तद्वाचकपदाश्रवणादित्यत उक्तम् ॥ इष्टापूर्त इति ॥ तथा च उपशब्दस्य समीपवर्तिवस्तुवाचकत्वादाचारस्य च यज्ञादिसमीपवर्तित्वात् उपासत इति उपशब्देन इष्टादिभिराचारः सहपठित इत्यर्थः । नन्वेवमपि बाधकाभावात्कुतो भ्रान्तित्वमिति चेन्न । चरणश्रुतेर्विषयान्तराभावेनाप्रामाण्यस्यैव बाधकत्वादिति । एवं चेष्टादिपदोदितयजनादिरूपशब्दोक्तचरणस्य सहभावानिमित्ताचरणफलमेव गतागतमिष्टादिकरणफलमित्युत्पन्नज्ञानस्य भ्रमत्वाच्चेष्टादि गतागतसाधनं, किं तु अपुनरावृत्तिफलसाधनमिति न तदर्थं वैराग्यादि सम्पादानीयमिति नेति भावः । (अयं च न्यायः 'चरणात्' इत्यनन्यथासिद्धहेतुं वदता 'अथ य इमे ग्रामाः' इति श्रुतौ, करणचरणयोः सहपाठनिमित्तकगतागतस्य करणफलत्वप्रतीति-



र्भ्रान्तिरिति बाधकोद्धारोऽपि सूचितो भवतीति सूचितः ।) तद्धेतुत्वेन पूर्वोक्तमेव योग्यतेति सिद्धान्तन्यायं हेतुप्रदर्शनपूर्वकं विवृणोति ॥ नान्यः पन्था इति ॥ न चरणश्रुत्यन्यथानुपपत्त्या गतागतस्य यज्ञादिफलत्वप्रतीतिर्भ्रान्तिरिति कल्प्यम् । तस्या अन्यथोपपत्तेः । चरणशब्देनैवाजहल्लक्षणया मुख्यवृत्त्या चोभयोः कर्माचरणयोरप्युक्तेः प्रतिपादनस्य, योग्यत्वात् सम्भवादित्यर्थः ।

ननु उभयोरिति किमर्थं, कर्मण इत्येव वक्तव्यमिति चेन्न । कर्मकर्तृणां रमणीयत्वादेश्चरणसापेक्षत्वेन चरणाग्रहणे तदलाभात् । ननु गतागतस्य चरणफलत्वमेव किं न स्यात् । बाधकाभावादित्यत उक्तं ॥ नान्य इति ॥ एवकारेण श्रुतेर्निरवकाशत्वमाह । आदिपदेन 'इष्टापूर्तं मन्यमानाः' 'अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति' इत्यादिश्रुतिः, त्रैविद्या मामित्यादिस्मृतिश्च ग्राह्या । तथा च 'नान्यः पन्थाः' इत्यादिश्रुत्या कर्मणः पुनरावृत्तिशून्यफलकत्वस्य निषिद्धत्वात् 'त्रैविद्या' इत्यादिस्मृत्या तत्फल-कत्वदर्शनाच्च, अथ य इत्यादिसमाख्यानाच्च युक्तं चरणश्रुतिव्याख्यानमित्यर्थः । एवं च गतागतस्य कर्मफलत्वात्क्लेशसाधने, तस्मिन्साध्ये च विरक्तेन भाव्यमिति भावः । (अयं च न्यायः तदुपलक्षणार्थेत्यनेन नान्यः पन्थाः इति बाधकवशेन करण-चरणयोश्चरणशब्देनोक्तेर्योग्यत्वादित्युक्तः ।) ॥ १० ॥

## अनिष्टाधिकरणम् III-1-11

**न्या.वि. — न च भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसारः, अनिष्टादिकारिणां तदभावान्मुक्तिरिति वाच्यम् । तेषां प्रबलदोषश्रुतेः ॥ ११ ॥**

भा.बो. — ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ इत्यत्र इष्टापूर्त्यादिविशेषोक्त्यज्ञानित्वाभ्यां गतागतं किमिष्टादिकारिणामेवोत सर्वाज्ञानिनामपीति सन्देहे इष्टादिकारिणामेवेति पूर्वः पक्षः । सर्वाज्ञानिनामिति सिद्धान्तः । तत्र 'विमिश्रता'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भयेति ॥ भयेत्यतः पूर्वं प्रत्यवायेति ग्राह्यम् । कामादीति

॥ आदिपदेन विधिप्रतिषेधबन्धपरिग्रहः । संसार इति 'बिभ्यत्पतति पादपात्' इति ॥ न्यायादिति भावः । मुक्तिरिति ॥ स्वर्गमुक्त्यतिरिक्तं फलान्तरं नास्तीति पूर्वपक्ष्यभिप्रायः । एवं च विमिश्रबुद्धित्वादिष्टादिकारिणामेव गतागतमिति नियमो नेति भावः । (अयं च न्यायः 'अनिष्टादिकारिणामपि'इत्यनेन प्रत्यवायभयेन फलकामनया यजनादिकर्म कुर्वतां समुच्चयेन सूचितः ।) तद्धेतुत्वेन 'बलवत्त्वम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तेषामिति ॥ प्रबलेत्यनेन 'संयमने त्वनुभूय' इत्यादिसूत्रोक्तदुःखादिदोषसङ्ग्रहोऽपि कृतः । (एवं च भयकामनाद्यभावविरोधः । बिभ्यता फलकामशून्येनाप्युक्तविषयस्य मरणहेतुत्वादर्शनात् ।) एवं च बलवद्दोषश्रुत्याऽज्ञानां सर्वेषां गतागतमस्तीति भावः । (अयं च न्यायः प्रथमसूत्रस्थचशब्देन द्वितीयतृतीयसूत्राभ्यां च दोषबलवत्त्वमित्युक्तः।) ॥ ११ ॥

## अपिसप्ताधिकरणम् III-1-12

**न्या.वि.— न च नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धा ।**

**रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।**
**कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।**
**तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ ॥**

**इति विभागात् ॥ १२ ॥**

भा.बो.— ॐ अपिसप्त ॐ ॥ इत्यत्र 'अवरोहः' इति पूर्वोक्त्या, लोकदृष्ट्या च नरकं नित्यदुःखप्रदमुत नेति सन्देहे पुनरावृत्तिप्रदमेवेति पूर्वः पक्षः । नित्यदुःखप्रदमिति सिद्धान्तः । तत्र 'विरुद्धोक्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नरकभोगस्येति ॥ अनित्यत्वकथनात् 'यावदिन्द्राश्चतुर्दश । चकार नरकं शून्यम्'इत्यादावित्यर्थः । एवं च नरकस्यानित्यत्वे प्रमिते तन्नित्यत्वोक्तेर्विरुद्धत्वेन नित्यनरकाद्भगवद्द्वेषिणामप्यनित्यं नरकमिति न भगवद्द्वेषादौ अतिशयेन वैराग्याद्यापाद्यमिति पक्षो नेति भावः । (अयं च न्यायो नरकाणां नित्यत्वानित्यत्वविभागकथनेनानित्यत्वोक्त्या नित्यत्वोक्तिर्विरुद्धेति सूचितः ।) तद्धेतुत्वेन 'विभागः' इत्युक्तसिद्धान्तन्यायं स्मृत्युदाहरणपूर्वकं विवृणोति ॥ रौरव इति ॥ विभागात्– नरकाणां नित्यत्वानित्यत्वाभ्यामित्यर्थः । एवं च नरकाणां विभागान्न नित्यत्वोक्तिर्विरुद्धेति भावः । (अयं च न्यायो अपि सप्तेति सूत्रेणैवोक्तः।) ॥
॥ १२ ॥



## तत्राप्यधिकरणम् III-1-13

**न्या.वि. — न च सहस्थानादीशस्यापि नरकदुःखप्राप्तिः । स्वातन्त्र्यात्कारणाभावात् ॥ १३ ॥**

भा.बो.— ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ इत्यत्र दुःखयुक्ततद्रहितजाग्रदादिद्विविधावस्थादर्शनान्नरकं किं सदुःखं न वेति संशये नेति पूर्वः पक्षः । सदुःखमिति सिद्धान्तः । तत्र 'सहस्थानम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सहस्थानादिति ॥ ईशस्येति वदता 'सर्वं रमयति'इति श्रुतिबलेन नरकेऽपि नारकिजननियमनार्थमीशेन स्थातव्यमिति सहस्थानं नासिद्धमिति सूचितम् । यद्वा 'ईशस्यापीति' सिद्धान्त्यनिष्टत्वमाह । एवं च नरकस्य सदुःखत्वे ईशस्यापि सदुःखसहस्थानात् सदुःखत्वं स्यादिति नरकं निर्दुःखमेवेति भावः । (अयं च न्यायः तत्रापीत्यनेन सूचितः।) तद्धेतुत्वेन 'कारणाभावः' इत्युक्तसिद्धान्तन्यायं हेतुप्रदर्शनपूर्वकं विवृणोति ॥ स्वातन्त्र्यादिति ॥ अस्वतन्त्रे ह्यनपेक्षिताज्ञानादिदुःखकारणानि सम्भवन्ति । ईश्वरस्य स्वतन्त्रत्वात्सर्वज्ञत्वेनाज्ञानादिदुःखकारणाभावादिति भावः । एवं च दुःखकारणाभावादीश्वरस्य नरके सहस्थानेऽपि न दुःखप्राप्तिरिति भावः । (अयं च न्यायो दुःखानुभवसमुच्चायकचशब्देन सूचितः ।) ॥ १३ ॥

## विद्याधिकरणम् III-1-14

**न्या.वि. — न च साधनेन सह श्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यम् । अविहितत्वेन कारणाभावात् । अथैतयोः पथोरित्यस्य च साधनार्थत्वात् ॥ १४ ॥**

**भा.बो.**— ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ इत्यत्र लौकिकमार्गे स्वातन्त्र्यदर्शनेनालौकिकत्वेन च पितृयानदेवयानौ किं भूतैः स्वातन्त्र्येण गम्यौ न वेति सन्देहे स्वातन्त्र्येण गम्याविति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'सहस्थानम्'इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च साधनेनेति ॥ 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते, 'तेऽर्चिषमभिसम्भवन्ति, 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति श्रुतौ, विद्येष्टादिसाधनेन सह अर्चिरादिधूमादिभावलक्षण(स्य)फलस्य श्रवणात्, तद्वत्साधन इव फलेऽपि स्वातन्त्र्यमङ्गीकार्यम्। साधने स्वातन्त्र्याभावे तु वैराग्यादिसाधनमपि नोत्पादयितुं शक्यं स्यादिति तद्विधिवैयर्थ्यप्रसङ्गादिति भावः । एवं च (फलस्यैव साधयितुं शक्यत्वात्) फलार्थं न वैराग्यादिकमापाद्यमिति नेति भावः । (अयं च न्यायः 'प्रकृतत्वात्'इत्यनेन देवयानपितृयानवत् विद्याकर्मणोः प्रकृतत्वादिति सूचितः। अत एव भाष्ये तयोरपीत्यपिशब्दः।)

तद्धेतुत्वेन कारणाभाव इत्युक्तमेव सिद्धान्तन्यायं विवृणोति ॥ अविहितत्वेनेति ॥ फलस्ये(त्यर्थः)ति शेषः । अनेन स्वातन्त्र्यविहितत्वं कारणम्। तच्च वैराग्यादिसाधने 'ब्रह्मणो निर्वेदमायात्'इत्यादिना प्रमितं विध्यादिशास्त्रावैयर्थ्याय हि, तत्रेश्वरः स्वातन्त्र्यं ददातीति 'कर्ता शास्त्रार्थवत्त्वात्' इत्यत्रोक्तम्। फले तु विहितत्वाभावात् न साधनप्रतिबन्धिग्रहणं युक्तमित्युक्तं भवति । ननु तर्हि 'अथैतयोः पथोः' इति श्रुतौ 'नैकतरेण'इति कथं मार्गेण गतिनिषेधः । न हि पुरुषप्रयत्नाविषयेन गच्छन्तीति प्रयोगो युज्यत इत्यत आह ॥ अथैतयोरिति ॥ साधनार्थत्वादिति ॥ देवयानपितृयाणरूपमार्गद्वयसाधनतया प्रकृतविद्याकर्मविषयत्वादित्यर्थः । एवं च विहितत्वरूपकारणाभावात्फले जीवस्य स्वातन्त्र्याभावेन तदर्थं वैराग्यादिकमापाद्यमेवेति भावः। (अयं च न्यायः तुशब्देन विद्याकर्मणोर्विहितत्वरूपविशेषस्योक्तत्वादेव देवयानपितृयाणयोः फलभूतयोर्विहितत्वरूपकारणाभावसूचनेन सूचितः ।) ॥ ॥ १४ ॥



## न तृतीयाधिकरणम् III-1-15

**न्या.वि. — न च दुःखसहस्थायित्वादन्धे तमस्यपि सुखम्। ईशस्याप्रियत्वेनैव कारणाभावात् ॥ १५ ॥**

**भा.बो.**— ॐ न तृतीये तथोपलब्धेः ॐ ॥ इत्यत्र दुःखवतः सुखदर्शनेन, अलौकिकत्वेन च अन्धन्तमः सुखयुक्तं न वेति सन्देहे सुखयुक्तमेवेति पूर्वः पक्षः । नेति सिद्धान्तः । अत्रापि 'सहस्थानम्'इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च दुःखेति ॥ 'सुखस्य'इति शेषः । दुःखस्य सुखेन सहावस्थायित्वात् व्याप्तत्वादित्यर्थः । तथा च नाप्रयोजकता । न च वक्तव्यं सर्वसुख-दुःखयोरप्रत्यक्षत्वाद्व्याप्तिग्रहणानुपपत्तिरिति । 'यत्र दुःखं सुखं तत्र'इत्यागमेन व्याप्तिग्रहणोपपत्तिरिति भावः । एवं च दुःखस्य सुखेन सहावस्थानात् तमःप्राप्तानामपि सुखसम्भवात्तत्साधने भगवद्वेषादौ नातिशयेन वैराग्यमापाद्यमिति नेति भावः । (अयं च न्यायः 'तथोपलब्धेः'इत्यनेन तृतीयतमोव्यतिरिक्तनरकेषु सुख-दुःखयोः सहस्थानप्रतिपादकश्रुतिग्राहकेण सूचितः) । तद्धेतुत्वेन 'कारणाभावः' इत्युक्तमेव सिद्धान्तन्यायं विवृणोति ॥ ईशस्येति ॥ कारणेत्यतः पूर्वं ईशेच्छारूपेत्यध्याहार्यम्। इदमुक्तं भवति । विप्रतिपन्ना न सुखवन्तः । तथात्वेनेश्वरानिष्टत्वात् । यद्यथेश्वरानिष्टं तत्तथा न भवति । यथा शशो विषाणित्वेन इति । हेत्वसिद्धिपरिहारार्थमुक्तं अप्रियत्वेनैवेति ॥ अप्रियत्वहेतोः 'अत्यप्रिये सुखमपि' इति स्मृतिसिद्धत्वेन प्राबल्यमेवकारेणाह । अयमर्थः । नैते सुखित्वेनेश्वरेष्टाः तदप्रियत्वात्। यो यस्याप्रियः स सुखित्वेन न तदिष्टः । यथा राजविरोधी राज्ञ इति । न च व्याप्तिवचनविरोधः । तस्य तमोव्यतिरिक्तविषयत्वेन सावकाशत्वादिति । एवं चेश्वरेच्छारूपकारणाभावान्नान्धन्तमःप्राप्तानां सुखमिति भावः । (अयं च न्यायो 'लोके' इत्यनेन ईशाप्रियत्वाख्यः सूचितः।) ॥ १५ ॥

## तत्स्वाभाव्याधिकरणम् III-1-16

**न्या.वि.— न च धूमादिदेवतासहावस्थानात्कर्मिणोऽपि तत्पदप्राप्तिः । तन्निमित्तविद्याख्यकारणाभावात् ॥ १६ ॥**

भा.बो.— ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ इत्यत्र शब्दस्य शक्त्याद्यनेकवृत्तिसद्भावात्, 'धूमो भूत्वा'इत्यत्र भवनशब्दार्थः किं धूमादिदैवतैक्यमुत तत्पदप्राप्तिः, अथ तत्स्वाभाव्यापत्तिरिति सन्देहे तदैक्यं तत्पदप्राप्तिर्वेति पूर्वः पक्षः । तत्स्वाभाव्यापत्तिरिति सिद्धान्तः । अत्रापि 'सहस्थानम्'इत्युक्तमेव न्यायं द्वितीयपूर्वपक्षसाधकत्वेन तावद्विवृण्वन् प्रतिक्षिपति ॥ न च धूमादीति ॥ अयं भावः 'धूमो भूत्वा'इति सामानाधिकरण्य-श्रुतिरुक्तोभयरीत्या युज्यते । अन्यथा तद्विरोधः । न च श्रुतेरन्यथात्वं कल्पनीयम् । बाधकमन्तरेण मुख्यार्थत्यागायोगात् । न च कर्मिणो देवतैक्यवत् देवतापदप्राप्तिरप्यसम्भाविता । धूमादिदेवताभिः सहावस्थानात् स्नेहादिवशेन ताभिरेव स्वपदादेर्दानस्यापि युक्तत्वात् । एवं च कर्मिणो धूमादिदेवताभिः सहावस्थानादाकल्पसमाप्तिपरमसुखसाधनतत्पद- प्राप्तिसम्भवान्न कर्मिणि वैराग्यमापाद्यमिति नेति भावः । (अयं च न्यायः 'तत्स्वाभाव्यापत्तिः' इत्यनेनैव सूचितः ।) तद्धेतुत्वेन पूर्वोक्तमेव 'कारणाभावः' इति न्यायं विवृणोति ॥ तन्निमित्तेति ॥ विद्येत्युपलक्षणम् । अधिकारेत्यपि ग्राह्यम् । कर्मिप्राप्यत्वे, युगपदनेककर्मिसमवायेऽनेकेषां युगपदनेकपदप्राप्तिप्रसङ्गः । न च श्रुतेर्नैरर्थ्यम् । तत्स्वभावप्राप्तेरेव भवनशब्दार्थत्वात् । न चास्यापि पदप्राप्तिपर्यायत्वम् । तद्वतौ गतिरित्याद्येकदेशस्वभावत्वात् । न च शब्दार्थत्यागः । सादृश्ये च सामानाधि-करण्यप्रयोगदर्शनादिति भावः । एवं च विद्यादिकारणाभावात् न कर्मिणां धूमादिदेवतापदप्राप्तिरित्यापाद्यमेव वैराग्यादीति भावः । (अयं च न्यायः 'उपपत्तेः'इत्यनेन विद्याख्यकारणाभावेन तत्पदप्राप्तेरनुपपत्तेरिति सूचनेन सूचितः ।) ॥ १६ ॥



## नातिचिरेणाधिकरणम् III-1-17

**न्या.वि. — न च तैस्तैः सहावस्थानादतिचिरत्वम् । 'वत्सरात्पूर्वमेवतु' इति क्लृप्तकालादधिकावस्थाने कारणाभावात् ॥ १७ ॥**

भा.बो.— ॐ नातिचिरेण विशेषात् ॐ ॥ इत्यत्र चिराचिरगमनविशिष्ट-(द्विविध)पान्थदर्शनेन कर्मिणः स्वर्गान्निर्गत्य किं चिरेण गर्भवासं प्राप्नुवन्ति उताचिरेणेति सन्देहे चिरेणैवेति पूर्वः पक्षः । अचिरेणेति सिद्धान्तः । अत्रापि 'सहस्थानम्'इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च तैस्तैरिति ॥ धूमादिदेवैरित्यर्थः । 'आकाशाद्वायुम्'इति श्रुतौ बहूनामुक्तत्वात् तैस्तैरिति वीप्सा । ततश्चातिचिरत्वमागमनस्योपपादितं भवति । उपलक्षणं चैतत् । तत्र तत्र तत्स्वाभाव्येनातिमहासुखे सम्भवति तद्विहायागमने प्रयोजनाभावादित्यपि द्रष्टव्यम् । एवं च धूमादिदेवैः सहावस्थानात्, कर्मिणस्तल्लोकादागमनस्यातिचिरत्वेन, तत्रैव महासुखत्वसम्भवात्, न तत्र वैराग्यमापाद्यमिति नेति भावः । (अयं च न्यायः 'नातिचिरेण'इत्यनेन निषेध्यतया पूर्वपक्षसाध्यनिर्देशात्तद्धेतुत्वेन सूचितः ।) तद्धेतुत्वेन पूर्वोक्तमेव 'कारणाभावः' इति सिद्धान्तन्यायं विवृणोति ॥ वत्सरादिति ॥ न च महासुखप्राप्तेरिष्टत्वमेव कारणमिति वाच्यम् । तथा सति सर्वेषां दुःखाभावप्रसङ्गात् । न चेष्टापत्तिः । प्रत्यक्षोपलम्भाद्दुःखस्य । एवं च बहुकालं तत्र तत्रावस्थाने कारणाभावात् न कर्मिणां महासुखप्राप्तिरिति भावः । (अयं च न्यायः विशेषादित्यनेन 'वत्सरात्पूर्वमेव तु' इति प्रमाणविशेषक्लृप्तकालादधिक-कालावस्थाने कारणाभाव इति सूचितः ।) ॥१७॥

## अन्याधिकरणम् III-1-18

**न्या.वि. — न च व्रीह्यादिजीवैः सहावस्थानाद्दुःखप्राप्तिः । शब्दविहितत्वेन पापाख्यकारणाभावात् ॥ १८ ॥**

भा.बो.— ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ इत्यत्र लोके ग्रामान्तरगमनस्य दुःखहेतुत्वदर्शनादस्य स्वर्गमार्गस्य पुरुषार्थत्वेन कर्मिणः स्वर्गादागमने दुःखवन्तो न वेति सन्देहे दुःखवन्त इति पूर्वः पक्षः । नेति सिद्धान्तः । अत्रापि 'सहस्थानम्'इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च व्रीह्यादीति ॥ न चेश्वरे व्यभिचारः । अस्वातन्त्र्यस्य हेतुविशेषणत्वात् । न चासिद्धिः । 'त इह व्रीहियवाः' इति तेषां व्रीह्यादिभावदर्शनात् । न चाप्रयोजकता । व्रीह्यादिसहावस्थाने च तच्छेदनादिना दुःखनियमात् । न हि दुःखिना सहावस्थानेऽपि दुःखाप्राप्तावीश्वरवत्स्वातन्त्र्यं प्रमितमस्तीति भावः । तच्च दुःखं यज्ञादिफलमेव । आगमनादेर्यज्ञादिफलत्वस्य प्रतिपादितत्वात् । न च दुःखकारणाभावः । यज्ञानां हिंसायुक्तत्वेन ततः पापस्य सम्भवादिति पूर्वपक्षशेषो द्रष्टव्यः । एवं च सुखसाधनतया वेदोक्तस्य कर्मणो यथा दुःखसाधनत्वं तथा वैराग्यस्यापीति न वैराग्यमापाद्यमिति नेति भावः । (अयं च न्यायः 'अन्याधिष्ठिते' इत्यनेन सूचितः ।) तद्धेतुत्वेन प्रागुक्तमेव 'कारणाभावः' इति सिद्धान्तन्यायं विवृणोति ॥ शब्दविहितत्वेनेति ॥ यज्ञादेरिति शेषः । यज्ञादेर्हिंसायुतत्वेऽपि न पापहेतुत्वम् । निषिद्धहिंसाया एव तथात्वात् । यज्ञहिंसायाः 'अग्नीषोमीयं पशुमालभेत'इति शब्दविहितत्वादित्यर्थः । पापान्तरनिमित्तकदुःखानुभवस्य नायमवसर इति हृदयम् । नास्वातन्त्र्ये सति दुःखिसहावस्थानमात्रं दुःखप्राप्तौ हेतुः । जीवनियामकदेवेषु व्यभिचारात् । किन्तु पापविशेषवत्त्वम् । तच्च नास्तीति भावः । एवं च सुखसाधनतयोक्तस्य कर्मणो दुःखसाधनत्वाभावात् वैराग्यमापाद्यमेवेति भावः । (अयं च न्यायः शब्दादित्यनेन शब्दविहितत्वेन न पापसाधनत्वमित्युक्तः।) ॥ १८ ॥

## रेतोऽधिकरणम् III-1-19

**न्या.वि.— न च वैयर्थ्यं पितृशरीरागमने, 'ईशक्लृप्तैव पितरं प्रविश्यायाति मातरम्' इतीशक्लृप्तत्ववचनात् ॥ १९ ॥**



भा.बो.— ॐ रेतःसिग्योगोऽथ ॐ ॥ इत्यत्र 'यो वा रेतः सिञ्चति तमेवानुविशति 'इति श्रुत्या पितृप्रवेशे प्रयोजनादर्शनेन च कर्मी पितरं प्रविशति न वेति सन्देहे नेति पूर्वः पक्षः । प्रविशतीति सिद्धान्तः । तत्र 'वैयर्थ्यम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च वैयर्थ्यमिति ॥ एवं च पितृप्रवेशस्य वैयर्थ्यादागमने महाप्रयासाभावेन नातिवैराग्यं कर्मादावापाद्यमिति नेति भावः । (अयं च न्यायः 'रेतःसिग्योगः' इत्यनेन पितुरनुपयोगं परिहरता सूचितः । अन्यथा पितृयोग इत्येवावक्ष्यत् ।) तद्धेतुत्वेन क्लृप्तिरित्युक्त-सिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ ईशक्लृप्त्यैवेति ॥ ननूक्तमत्र वैयर्थ्यमिति चेन्न । शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेशस्यावश्यकत्वात् । अत एव सूत्रे लाघवात् पितृयोग इति वक्तव्ये 'रेतःसिग्योगोऽथ' इत्युक्तमिति । एवं चेशक्लृप्त्यैव पितृप्रवेशसद्भावेन आगमने महाप्रयासात् आपाद्यमेव वैराग्यमिति भावः । (अयं च न्यायः अथेत्यनेन 'ईशक्लृप्त्यैव पितरम्' इति प्रमाणसूचकेन सूचितः । ल्यपैवानन्तर्यप्रतिपादनात् ।) ॥ १९ ॥

## योन्यधिकरणम् III-1-20

**न्या.वि.— न च पितुः सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेर्योनिप्रवेशाभाव इति वाच्यम् । 'योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः' इति वचनात्सामान्यतो गत्यन्तराभावात् ।**

**विशेषकारणादेव विशेषाज्जनिरिष्यते ।**
**सामान्यजननं चैव नृणां सामान्यहेतुतः ।**

**इति वचनाच्च ॥ २० ॥**

**इति श्रीमन्न्यायविवरणे तृतीयाध्यायस्य प्रथमः पादः ॥**

भा.बो.— ॐ योनेः शरीरं ॐ ॥ इत्यत्र पितृद्वारा मातृयोनिप्रवेशा-प्रवेशयोरनुपपत्त्यदर्शनेन पितृद्वारा मातृयोनिं प्रविश्याथ शरीरं प्राप्नोति न वेति सन्देहे पितृद्वारा मातृयोनिं प्रविश्यैव शरीरं प्राप्नोतीति नियमो नास्तीति पूर्वः पक्षः । पितृद्वारा मातृयोनिं प्रविश्यैव शरीरं प्राप्नोतीति सिद्धान्तः । तत्र

'अन्यथागतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च पितुरिति ॥ अन्यतोऽन्नादेः । अयं भावः । मातृयोनिप्रवेश एव तावन्न विद्यते । 'देहं गर्भस्थितम्' इति वचनात् । मातृप्रवेशसद्भावेऽपि पितृद्वारैवेति न नियमः । अन्यतोऽन्नादेरपि प्रवेशोपपत्तेः । ननु शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेशस्यावश्यकत्वं पूर्वाधिकरणे समर्थितमिति चेन्न । अन्यथा मातृस्थरेतसैव परिणामोपपत्तेः । प्रागसिद्धशरीरप्राप्तिर(प्य)नुपपन्ना । 'देहं गर्भस्थितं क्वापि' इति वचनेन मातुरुदरस्थितगर्भस्थितेर्वा बहिर्निर्गते वा पूर्वसिद्धदेहप्रवेशस्योक्तत्वात् । एवं च शरीरप्राप्तावतिप्रयासाभावान्नाति-वैराग्यमापाद्यमिति नेति भावः । (अयं च न्यायोऽनुव्याख्यानोक्तरीत्या पूर्वसूत्रादनुवृत्तेनाथशब्देन प्रकारान्तरेण जननस्योक्तेः सूचितः ।) तद्धेतुत्वेन 'अन्यागतिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ योनिद्वारेणेति ॥ अनेनान्येन प्रकारेणागतिर्गत्यभावः । गत्यन्तराभाव इति यावत्। गतिशब्देन देहप्राप्तिरुच्यते । ततश्च सामान्यत उत्सर्गतः अन्येनान्नद्वारादिलक्षणप्रकारान्तरेणागतिर्देहप्राप्त्यभाव इति विवृतं भवति । यद्वा अन्नादिद्वारेण मातृशरीरप्राप्त्यादिलक्षणविशेषजनने वरादिरूपान्या गतिरस्ति । सामान्यतो जनने तु तादृशगत्यन्तराभावादिति न्यायविवरणाभिप्रायः । ननु गत्यन्तराभावात् कथमेतदित्यत आह ॥ विशेषकारणादिति ॥ विशेषकारणात् वरादिरूपादित्यर्थः । अत एवोदाहृतप्रमाणेऽपि प्रायश इत्युक्तम् । एवं चान्येन प्रकारेण गत्यभावात् पितृद्वारा मातृयोनिप्रवेशेनासिद्धशरीरप्राप्तिरिति शरीरप्राप्तौ महादुःखसद्भावादापाद्यमेव वैराग्यमिति भावः । (अयं च न्यायो'योनेः शरीरम्'इत्यनेन सामान्यजननस्य सामान्यतोऽन्येन प्रकारेणागतिरिति सूचितः।) ॥ २० ॥

इति श्रीमन्न्यायविवरणभावबोधे तृतीयाध्यायस्य प्रथमः पादः ॥



# अथ द्वितीयः पादः

## सन्ध्याधिकरणम् III-2-1

**न्या.वि. — पश्चाददृष्टेः स्वप्नविषयस्यासत्वं न वाच्यम् । अशक्यक(का)रणशक्तिमत्त्वादीश्वरस्य । संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेः । जाग्रत्त्वप्रतीति-मात्रस्य भ्रान्तित्वात् ॥ १ ॥**

भा.बो.— वैराग्यसाध्योपास्तिसाधनभक्तेः पुरुषप्रयत्नाविषयत्वेना-विधेयत्वात्तदुत्पत्त्यर्थं भगवन्माहात्म्यप्रतिपादनार्थोऽयं पादः प्रवृत्तः । एतत्पादीयाधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः ।

पश्चाददृष्टचविज्ञानकालदुःखपृथग्भवाः ।
स्थानभेदो विरुद्धत्वं न्यायसाम्यं सतो भवः ॥
गुणसाम्यमयोगश्च तर्कबाधो विलोमता ।
नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ॥
अशक्यकर्तृताशक्तिः स्वतोऽबोधस्त(थै)देव च ।
अमानक्लृप्तिः सन्मानव्यवस्थात्यल्पताभवः ।
विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् ।
अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ॥ इति ॥

ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या स्वप्नो भगवदधीनो न वेति सन्देहे नेति पूर्वः पक्षः । भगवदधीन इति सिद्धान्तः । तत्र 'पश्चाददृष्टिः'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ स्वप्नो पश्चाददृष्टेरिति ॥ उपलक्षणमेतत् । पूर्वमपीत्यपि ग्राह्यम् । अयं भावः । स्वप्नो नामार्थज्ञानात्मकः । तत्र तावत्स्वाप्नानां करितुरगादीनां परमेश्वरायत्तता नोपपद्यते । असत्यत्वात् । न तावदिमेऽनादिनित्याः । स्वप्नावस्थातः प्रागूर्ध्वं चोपलब्धिप्रसङ्गात् । न हि विद्यमाना अप्युपलब्धिसाधनेषु चक्षुरादिष्वनुपरतेषु नोपलभ्यन्ते, उपलभ्यन्ते चोपरतेष्विति सम्भवति । न चान्यत्रगताः,

अन्यैरप्यनुपलम्भात् । स्वाप्नाः पदार्था नानादिनित्याः । मध्यमपरिमाणोपेततया दृश्यमानत्वात् । घटवदित्यनुमानविरोधाच्च । नाप्युत्पत्तिविनाशवन्तः । तथात्वेऽपि घटादिवत्प्रागूर्ध्वमुपलम्भप्रसक्तेः । न च वाच्यं विद्युदादिवत्तदैवोत्पत्तिर्विनाशश्चातः प्रागूर्ध्वमनुपलम्भो न दोषायेति । इत्थम्भावे प्रमाणाभावात्, प्राङ्मृदादीनामूर्ध्वं कपालादीनामनुपलम्भापत्तेश्च । न चैवैषां तत्कालीने जन्मनि उपादानं निमित्तं च पश्यामः । कर्ता च न तावज्जीवात्मा, द्रष्टुर्निर्व्यापारत्वात् । अपरस्य चादर्शनात् ।

तथा च यावद्विशेषबाधे सामान्यबाधान्न सत्त्वं तेषाम् । अविद्यमानानेकतुरगकर्यादीन् पश्यामीत्युत्तरकालीनानुभवविरोधाच्च । 'स्वप्नमायासरूपा, 'स्वप्नमनोरथो यथा' इत्यादिश्रुतिस्मृतिविरोधाच्चेति । तदेवं न स्वाप्नानामर्थानामीश्वराधीनत्वम् । नापि ज्ञानस्य । तस्यापि निमित्ताभावेनापरमार्थत्वात् । इन्द्रियप्रवृत्तीनामुपरतत्वात् । मनसो बाह्यार्थेष्वस्वातन्त्र्यादिति । एवं च स्वप्नस्यासत्वादसतश्चेश्वराधीनत्वायोगान्न तस्य महामहिमत्वमिति नेति भावः । (अयं च न्यायः 'सन्ध्ये सृष्टिः इत्यनेन सूचितः । तेन पश्चाददृष्टेर्गत्युक्तेः पश्चाददृष्टिः पूर्वपक्षन्याय इत्युक्तं भवति ।) तद्धेतुत्वेन 'अशक्यकर्तृताशक्तिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अशक्यकारणेति ॥ सृष्ट्वा संस्कारमात्रतामापाद्येत्यत्र 'स्वप्नकालएव' इत्युपस्कर्तव्यम् । तथा च सृष्ट्वेत्यनेनानादित्वपक्षदोषा अनभ्युपगमेनैव निरस्ताः । तत्काल एव सृष्ट्वेत्यनेन प्रागुपलम्भप्रसङ्गः, संस्कारमात्रतामापाद्येत्यनेन पश्चादुपलम्भप्रसङ्गश्च निराकृतः । संस्कारेत्युपादानकीर्तनम् । न च तस्य गुणत्वेनोपादानत्वानुपपत्तिः । मनोवृत्तित्वेन द्रव्यत्वात् । संस्काराणां चातीन्द्रियत्वेन त्र्यणुकजन्मविनाशयोर्द्व्यणुकस्येव प्रागूर्ध्वं चानुपलम्भो न दोषाय । न चात्र प्रमाणाभावः । 'मनोगतांस्तु संस्कारान्'इति स्मृतिवचनस्यैव प्रमाणत्वात् । एतेनैतदपि प्रत्युक्तम्– यत्प्रतीतिकारणाभाव इत्युक्तं, मनस एव तत्कारणत्वेन स्मृत्युक्तत्वात् । ईश्वरस्येति कर्तृनिर्देशः । ननु कर्तुस्तदैव सृष्टिसंहारकारणत्वमसम्भावितमित्यत उक्तम्– ॥ अशक्येति ॥ एवं च सति अदृष्टादिकं निमित्तं प्रसिद्धमेव । न केवलमेवमर्थानां सत्यत्वसम्भवेन भगवदधीनत्वं किन्तु ज्ञानस्येत्यभिप्रेत्याह ॥ तस्यापीति ॥ सृष्ट्वेत्यनन्तरं 'प्रदर्श्य'



इत्युपस्कर्तव्यम् । तेनात्र तच्छब्देन तत्प्रदर्शनं परामृश्यते । तथा च न केवलमीश्वरः स्वाप्नान् गजादीन् सृष्ट्वा संस्कारतामापादयति किन्तु तान् प्रदर्श्य, तस्य दर्शनस्य तिरोधानमपि करोतीत्यर्थः ।

नन्वेतत्स्वाप्नस्य सत्यत्वे, 'अविद्यमानानेव करितुरगादीनपश्यमित्युत्तरकालिकतिरोधानानुभवविरोध इत्यत आह ॥ जाग्रत्त्वेति ॥ मात्रेति पदार्थस्वरूपं व्यावर्तयति । जाग्रत्त्वं नाम जागरानुभूतपदार्थैरैकत्वम् । तथा च स्वाप्न एवायं न जागरानुभूत इत्यनुभवात् जाग्रत्त्वप्रतीतिरेव भ्रान्तिर्न स्वाप्नपदार्थस्वरूपप्रतीतिः । नायं गज इति बाधाभावादिति भावः । ननु जाग्रत्त्वस्यापि सोपादानत्वसम्भवात्कथं तत्प्रतीतिर्भ्रान्तिरित्युच्यत इति चेन्न । न हि वयं कारणसामग्रीसंपादनसम्भवमात्रेणार्थानां सत्यतामातिष्ठामहे किंतु बाधाभावेनैव । सामग्र्यभावेनासत्त्वं ब्रुवाणं प्रति तु तदसिद्धिरुक्ता । अस्ति च जाग्रत्त्वप्रतीतेर्बाधः 'स्वाप्न एवाऽयं, न जागरानुभूत' इत्याद्युदयादिति भावः । नन्वेवं स्वाप्नपदार्थानां सत्यत्वे कथं श्रुतिस्मृतिभ्यां तदसत्त्वमावेद्यत इत्यत आह ॥ जाग्रत्वेति ॥ जाग्रत्त्वप्रतीतेर्भ्रान्तित्वात्तद्विषयं श्रुत्यादिकमिति भावः । एवं चेश्वरस्याशक्यकर्तृतायां शक्तेः स्वाप्नपदार्थानामीश्वरसृष्टत्वेन तदधीनत्वात् युक्तं तस्य महामहिमत्वमिति भावः । (अयं च न्यायो 'निर्मातारम्'इत्यनेन सूचितः ।)
॥ १ ॥

## पराभिध्यानाधिकरणम् III-2-2

**न्या.वि. — न चाविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्नतिरोधानं नेशेनेति वाच्यम् । बोधे जीवस्यास्वातन्त्र्यात् । ज्ञानाज्ञानयोस्तदन्यत्वे, जडत्वात्कैमुत्येनास्वातन्त्र्यात् । तत्स्वरूपत्वे तेनैव व्याख्यातत्वात् । उभयात्मकत्वे दोषद्वयापातात् । अनुभयात्मकत्वे स्वव्याहतेः । तावन्मात्रनिमित्तत्वे मानाभावात् । सर्वस्येश(हेतुत्वे)वशत्वे मानाच्च ॥ २ ॥**

भा.बो.— ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥ इत्यत्र सर्वस्य भगवदधीनत्वोक्त्या विशेषानुक्त्या, स्वप्नतिरोभावो भगवदधीनो

न वेति सन्देहे नेति पूर्वः पक्षः । भगवदधीन इति सिद्धान्तः । तत्र 'अविज्ञानम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाविज्ञानेति ॥ बाह्याविज्ञानादेव हि स्वप्नः प्रतीयते । अतो ज्ञानशक्त्यैव तिरोभावोऽप्युपपद्यते । शक्तिरेषा ज्ञानस्य, यत्समानविषयाज्ञानं नाशयतीति । एवं च न तस्य महामहिमत्वमिति नेति भावः । तद्धेतुत्वेन 'स्वतोऽबोधः' इत्युक्तं सिद्धान्तन्यायं विवृणोति ॥ बोध इति ॥ बोधे प्रबोधे । अनेनानुव्याख्याने, 'स्वतः' स्वातन्त्र्येण 'अबोधः' प्रबोधाभाव इति अकारप्रश्लेष इत्युक्तं भवति । नन्वज्ञाननिमित्तत्वात्स्वप्नस्य, ज्ञानेनैव स्वप्नतिरोधानसम्भवाज्जीवस्यास्वातन्त्र्यकथनं क्वोपयुक्तमित्यतो ज्ञानाज्ञानयोर्जीवाभिन्नत्वं वा, तत्स्वरूपत्वं वा, भिन्नाभिन्नत्वं वा, भिन्नत्वाभिन्नत्वोभयराहित्यरूपानुभयत्वं वेति विकल्पान् हृदि निधाय क्रमेण सर्वत्रापि दोषमाह ॥ ज्ञानाज्ञानयोरित्यादिना । तच्छब्देन जीवः परामृश्यते । अज्ञानज्ञानाभ्यामेव स्वप्नतिरोधानसम्भवात् किमीश्वरेणेति वदता पूर्वपक्षिणा ज्ञानाज्ञानयोरीश्वरभिन्नत्वमङ्गीकृतमेवेति तन्नोक्तम् । तथा चेश्वरलक्ष्मीभिन्नत्वे सति जीवभिन्नत्वं जडत्वे हेतुरिति नेश्वरादौ व्यभिचारः शङ्कनीयः । यदा चेतनस्य जीवस्यास्वातन्त्र्यं तदा किं वाच्यं जडरूपज्ञानाज्ञानयोरित्यभिप्रेत्य कैमुत्येनेत्युक्तम् । तेनैवास्वातन्त्र्यतयोक्तजीवेनैव । ज्ञानाज्ञानयोरपि जीववदस्वातन्त्र्यात्प्रबोधहेतुत्वानुपपत्तिरिति भावः ॥ दोषद्वयापातादिति ॥ भिन्नत्वमादाय जडत्वात्कैमुत्येनास्वातन्त्र्यम् । अभिन्नत्वमादाय जीवगतास्वातन्त्र्यमिति दोषद्वयापातादित्यर्थः ॥ व्याहतेरिति ॥ भिन्नं न भवतीत्युक्ते, अभिन्नमित्येवोक्तं स्यात् । भिन्नाभिन्नेऽभिन्नत्वराहित्याभावात् पुनर्न भवतीत्युक्ते व्याहतिः । एवमभिन्नं न भवतीत्युक्ते, भिन्नमित्येवोक्तं स्यात् । भिन्नाभिन्ने भेदराहित्याभावात् पुनर्भिन्नं न भवतीत्युक्ते व्याहतिरित्यर्थः । अज्ञानादेः स्वप्नादिनिमित्तत्वस्य प्रमाणसिद्धत्वादुक्तानुपपत्तिः कथंचित्परिहर्तव्येत्यत आह ॥ तावन्मात्रेति ॥ अनुभवस्य विद्यमानत्वात्कथं मानाभाव इत्यत उक्तं ॥ मात्रेति ॥ अनुभवस्य ज्ञानाज्ञानयोर्निमित्तत्वमात्रविषयत्वमिति भावः । न केवलं स्वप्नादेरज्ञानादिमात्रनिमित्तत्वे मानाभावादेवमङ्गीकारः किं तु ईशहेतुत्वे मानसद्भावाच्चेत्याह ॥ सर्वस्येति ॥ अनेन जीवादेरस्वातन्त्र्यमपि



प्रमापितं भवति । अत एव स्वप्नादेरित्यनुक्त्वा सर्वस्येत्युक्तम् । एवं च जीवस्य स्वतः स्वातन्त्र्येण प्रबोधाभावात्, ज्ञानादीनां जडत्वेन सुतरां स्वातन्त्र्याभावादीश्वरस्यैव स्वप्नतिरोधानहेतुत्वमिति भावः । (अत्र पूर्वकक्षसिद्धान्तन्यायौ 'ततो ह्यस्य बन्धविपर्ययौ'इत्यनेन दृष्टान्ते स्वातन्त्र्यज्ञानाज्ञानाधीनबन्धमोक्षयोः परमात्माधीनत्वोक्त्या, 'अविज्ञानं,' 'स्वतोबोध' इति क्रमात्सूचितौ ।) ॥२॥

## देहयोगाधिकरणम् III-2-3

**न्या.वि.— न च कालापेक्षयैव जागरितम् । अचेतनत्वादेव कालस्य । चेतनान्तरस्याप्यस्वातन्त्र्यात् ॥ ३ ॥**

**भा.बो.—** ॐ देहयोगाद्वासोऽपि ॐ ॥ इत्यत्र पूर्वोक्तरीत्या जाग्रदवस्था किमीश्वराधीना न वेति सन्देहे, नेति पूर्वः पक्षः । ईश्वराधीनेति सिद्धान्तः । तत्र 'कालः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च कालेति ॥ एवं च कालापेक्षया जागरणस्य जायमानत्वान्नेश्वरस्य महामहिमत्वमिति नेति भावः । (अयं च न्यायो वासोऽपीत्यपिपदात् 'पराभिध्यानात्तु' इत्यस्यानुकर्षादवधारणार्थकतुशब्देन कालनिषेधान्न कालाधीनत्वं जाग्रवदस्थाया इति सूचितः ।) तद्धेतुत्वेन 'तदेव' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अचेतनत्वादेवेति ॥ एतदनन्तरं 'अस्वातन्त्र्यात्' इति ग्राह्यम् । तथा च 'तदेव' इत्यनुव्याख्याने तच्छब्देन 'स्वतोऽबोध' इत्यत्राभिप्रेतास्वातन्त्र्यस्य निमित्तीभूताचेतनत्वस्य परामर्श इति भावः । कालस्यास्वातन्त्र्ये कैमुत्यद्योतनार्थं अचेतनत्वादेवेत्येवकारः । तदेवोपपादयति ॥ चेतनान्तरस्येति ॥ ईश्वरव्यावृत्त्यर्थमन्तरग्रहणम् । कालस्य निमित्तमात्रत्वमिति भावः । अत एव पूर्वपक्षे कालापेक्षयैवेत्युक्तम् । ननु मास्तु कालस्याचेतनत्वेन जागरणस्य तदधीनत्वं तथापि नेश्वराधीनत्वं सम्भवति । तस्य जीवाधीनत्वात् । जागरणे हि जीवस्य स्वातन्त्र्यं प्रतीयत इत्यतो वाऽऽह ॥ चेतनान्तरस्यापीति ॥ न केवलं कालस्येत्यपिशब्दः । एवं च कालस्याचेतनत्वादीश्वरस्यैव जाग्रदवस्थाप्रेरकत्वमिति युक्तं तस्य महामहिमत्वमिति भावः । (अयं च न्यायो निषेधहेत्वाकाङ्क्षायामस्वातन्त्र्यस्यैव तद्धेतुत्वसम्भवात्तत्प्रयोजकमचेतनत्वमित्यवधारणार्थकतुशब्देन सूचितः ।) ॥३॥

## तदभावाधिकरणम् III-2-4

**न्या.वि. — न च परमात्मनोऽन्यत्रावस्थाने दुःखित्वप्राप्ते-र्नाडीषु सुप्तिर्न भवति । उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणमित्यनवस्थितिदोषादतिप्रसङ्गात् ॥ ४ ॥**

**भा.बो.**— ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ इत्यत्र 'सता सोम्य तदा सम्पन्नो भवति, 'यत्रैतत्सुप्तः सम्पन्नः स्वप्नं न विजानात्यासु नाडीषु सुप्तो भवति'इति श्रुतिभ्यां सुप्तिः किं भगवति नाडीषु वेति सन्देहे भगवत्येव न नाडीष्विति पूर्वः पक्षः । नाडीस्थपरमात्मनीति सिद्धान्तः । तत्र दुःखमित्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूवकं विवृण्वन प्रतिक्षिपति ॥ न च परमात्मन इति ॥ दुःखित्वप्राप्तेरिति जाग्रत्स्वप्नयोः परमात्मनोऽन्यत्रावस्थाने दुःखित्वदर्शनादिति भावः । न्यायस्य पूर्वपक्षफलसम्बन्धस्तु मूल एव स्पष्टः । विपक्षबाधकैतन्न्यायोत्प्रेक्षामूलं च सूत्रे नाडीष्विति पदम् । तेन हि नाडीस्थपरमात्मनि सुप्तिरिति सिद्धान्तप्रदर्शनेन, नाडीषु सुप्तिर्नेति पूर्वपक्षसाध्यं द्योत्यते । तत्र दुःखाभावो हेतुः । तस्याप्रयोजकतापरिहारायान्यथा दुःखं स्यादिति विपक्षबाधकतर्कोन्नयनात् । (अयं च न्यायः आत्मनीत्यनेन नाडीषु सुप्त्यङ्गीकारे दुःखप्राप्तिपरिहारकेण सूचितः।)

तद्धेतुत्वेन 'अमानक्लृप्तिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ उभयेति ॥ नाडीस्थपरमात्मनि सुप्त्यङ्गीकारेण नाडीषु परमात्मनि चेत्युभयस्वीकारेण प्रमाणभूतस्य 'सता सोम्य तदा सम्पन्नः, 'नाडीषु सुप्तो भवति' इति श्रुतिद्वयस्य व्यवस्थोपपत्तौ सत्यामपि मानस्योदाहृतिरूपस्य या क्लृप्तिः– नाडीस्थपरमात्मनि सुप्तिरिति तदकारणमिति कृत्वा तदनभ्युपगम इति यावत् । अव्यवस्थितिदोषात् सर्वत्र प्रमाणेन प्रमेयव्यवस्थित्यभावरूपाद्दोषात् । प्रत्यक्षादिप्रमाणसिद्धस्यापि परित्यागरूपादतिप्रसङ्गादित्यर्थः । एवं च परमात्मन्येव सुप्त्यङ्गीकारेऽमानक्लृप्ति-प्रसङ्गान्नाडीस्थपरमात्मन्येव सुप्तिरिति युक्तं तस्य माहात्म्यमिति भावः । (अयं च न्यायः 'तच्छ्रुतेः'इत्यनेन सुप्त्यङ्गीकारे 'आसु तदा'इति 'सता सोम्य'इति श्रुतिलक्षणमानक्लृप्त्यभावः स्यादिति सूचितः ।) ॥ ४ ॥



## प्रबोधाधिकरणम् III-2-5

**न्या.वि.— न च प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित्तदेव । 'न ऋते त्वत्क्रियत' इति श्रुतेस्तत्रापि ईशकृतत्वे सम्यङ्ज्ञानात् ॥ ५ ॥**

**भा.बो.**— ॐ अतः प्रबोधोऽस्मात् ॐ ॥ इत्यत्र सर्वस्य भगवदधीनत्वोत्त्या सुप्तिप्रबोधो भगवधीन इति विशेषानुत्त्या च सुप्तिप्रबोधो भगवदधीनो न वेति सन्देहे नेश्वरैकाधीन इति पूर्वः पक्षः । ईश्वरैकाधीन इति सिद्धान्तः । तत्र 'पृथग्भावः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रबोधस्येति ॥ एवं च प्रबोधे पृथगपि कारणस्य भेरीताडनादेः भावात् सद्भावाच्च तस्य माहात्म्यमिति नेति भावः । (अयं च न्यायः सावधारणेन 'अस्मात्'इत्यनेन प्रतिषेध्यतया प्रबोधस्य कारणान्तरदृष्टिरिति सूचितः ।)

तद्धेतुत्वेन 'सन्मानम्'इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ न ऋत इति ॥ श्रुतेः सम्यङ्ज्ञानादिति सामानाधिकरण्येन सम्बन्धः । श्रुतेः स्पष्टार्थादिज्ञापनार्थं सम्यगित्युक्तम् । यद्वा 'यतस्तस्मिन्' इति भाष्यदिशा श्रुत्युपोद्बलितत्वरूपसम्यक्त्वयुक्तयुक्तिरूपसम्यङ्ज्ञानादित्यर्थः । अस्मिन्पक्षे उपोद्बलश्रुतेः सत्वाद्युक्तिरूपसम्यङ्ज्ञानादिति वैयधिकरण्येन योजना । अत एव व्यवधारणकारणम् ॥ तत्रापीति ॥ यत्र भेरीताडनादीनां कारणत्वं परेणोच्यते तत्रापीत्यर्थः । एवं च सम्यङ्ज्ञानादीश्वरस्यैव सुप्तप्रबोधकत्वमिति युक्तं तस्य माहात्म्यमिति भावः । (अयं च न्यायः 'अस्मात्'इत्यनेनान्यनिषेधेन परमात्मन एव प्रबोधकत्वोक्त्या न ऋत इति निरवकाशत्वापौरुषेयत्वरूप-सम्यक्त्वयुक्तेन 'न ऋत' इति श्रुतिमानेनेश्वरस्यैव प्रबोधकत्वमिति सूचितः । यद्वा 'अत' इत्यनेन, ''यतस्तस्मिन्'इति भाष्यदिशा श्रुत्युपोद्बलितत्वरूपसम्यक्त्वयुक्त-युक्तिरूपं मानं सन्मानमिति सूचितः।) ॥ ५ ॥

## कर्मानुस्मृत्यधिकरणम् III-2-6

**न्या.वि. — न च राजादीनां पृथग्दर्शनादीशान्तरकल्पना।**

**देशकालविशेषेऽपि स्वप्नादीनां स एव हि ।**
**तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत् ॥**

**इति श्रुतिमानात् ॥ ६ ॥**

**भा.बो.**— ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ इत्यत्रावस्थादीनां भगवदधीनत्वप्रतिपादकवाक्यस्योभयथाप्यर्थसम्भवात् किं सर्वजीवानां सर्वकालीनावस्थाः भगवदधीनाः किं वा केषाञ्चित् किञ्चित्कालीना इति सन्देहे केषाञ्चित्किञ्चित्कालीना एव भगवदधीना इति पूर्वः पक्षः । सर्वेषां सर्वकालीना इति सिद्धान्तः । तत्र 'पृथग्भावः' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च राजादीनामिति ॥ पृथग्दर्शनात् पृथत्त्वदर्शनात् खण्डेशत्वदर्शनादित्यर्थः । देशकालादिभेदेन नियामकान्तरकल्पनेत्यर्थः । अनेनेश्वरः खण्डेशो भवितुमर्हति अधिपतित्वात् राजादिवदिति प्रयोगः सूचितो भवति । (एवं च राजादीनां पृथगपि दर्शनात् तद्वदीश्वरानेकत्वसम्भवान्न सर्वावस्थाप्रेरकत्वरूपं सर्वैश्वर्यमिति नेति भावः । अयं च न्यायः पक्षान्तरनिषेधार्थकएवशब्देन ॰ निषेध्यतया राजादीनां पृथग्दर्शनान्न सर्वावस्थाप्रेरकत्वमिति सूचितः ।) तद्धेतुत्वेन 'सन्मानम्' इत्युक्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ देशेति ॥ खण्डेशः कदाचिदेव कस्यांचिदवस्थायामेव कांश्चिन्नियमयतीत्यर्थः । सच्छब्दार्थः श्रुतीति । ततश्चानुमानं बाधितविषयमिति भावः । एवं च सन्मानादीश्वरस्यैव सर्वावस्थाप्रेरकत्वमिति युक्तं तस्य माहात्म्यमिति भावः । (अयं च न्यायः शब्दपदेन श्रुतिमानाद्विष्णोः सर्वावस्थाप्रेरकत्वमिति सूचितः।) ॥ ६ ॥

## संपत्त्यधिकरणम् III-2-7

**न्या.वि. — न च मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादिति वाच्यम् । परिशेषमानादर्धप्राप्तित्वावगमात् ॥ ७ ॥**



**भा.बो.**— ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ इत्यत्र द्विविधावस्थादर्शनात् मोहावस्था किमीश्वरे तदन्यत्र वा इति सन्देहे ईश्वरे एवेति पूर्वपक्षः । ईश्वरेऽर्धप्राप्तिरिति सिद्धान्तः । तत्र 'पृथग्भावः' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चेति ॥ एवकारेण परमात्मविदूरत्वं सामीप्यार्धप्रवेशात् व्यावर्तयति । जाग्रत्स्वप्नाभ्यामिति शेषः । न चैवं सुप्तिसङ्करापत्तिर्दोषः । मोहस्य सुप्तिसमानधर्मतया तत्साङ्कर्यस्येष्टत्वात् । अत्र पृथग्भावः पृथत्त्वमिति न्यायो विवृतो भवति । अत एव पृथगवस्थात्वादित्युक्तम् । एवं च पृथग्भावान्मोहस्य जाग्रत्स्वप्नाभ्यां पृथत्त्वात् परमात्मनि समग्रप्रवेशेन सुप्तिसाङ्कर्येण पृथङ्मोहावस्थेति भगवतस्तत्प्रवर्तकत्वं नेति न वाच्यमिति भावः । (अयं च न्यायः परिशेषादित्यनेन परिशेषेण पृथगवस्थात्वमित्यपि वदता सूचितः । अत एवोक्तं तत्वप्रकाशिकायां 'परिशेषप्रकारान्तरप्रदर्शनं वैतत्' इति ।) तद्धेतुत्वेन 'सन्मानम्' इत्युक्तमेव सिद्धान्तन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृणोति ॥ परिशेषेति ॥ अर्धप्राप्तित्वावगमात्, मोहस्येति शेषः । अयमर्थः । न तावन्मोहस्य सुप्त्यन्तर्भावो युक्तः । मोहे 'एतावन्तं कालमहं दुःखमनुभवामि' इति दुःखानुसन्धानात् । तदुक्तं, 'दुःखमात्रप्रतिस्मृतेः' इति । सुप्तौ दुःखानुसन्धानाभावात् । नापि जाग्रत्स्वप्नयोरन्तर्भावः । मोहे दुःखात्मकालाद्यतिरिक्तविषयादर्शनात् । 'दुःखमात्रप्रतिस्मृतेः' इत्यत्र दुःखशब्दस्य यावदनुभूतोपलक्षकत्वात् । तयोस्तदतिरिक्तस्यापि दर्शनात् । तथा च 'मोहः प्रसिद्धावस्थाभ्यः पृथक् अनुपपन्ना अन्तर्भावे सत्यवस्थात्वात्' इति परिशेषानुमानेन मोहावस्था पृथगेव । मोहस्य पार्थक्ये कीदृशोऽसाविति चेत् अर्धप्राप्तिरिति ब्रूमः । न च तत्र प्रमाणाभावः । परिशेषस्यैव प्रमाणत्वात् । न तावन्मोहे समग्रप्राप्तिः सम्भवति । दुःखानुसन्धानात् । नाप्यप्राप्तिः । अन्यार्थादर्शनात् । तस्मादर्धप्राप्तिरूपमेवाङ्गीकर्तव्यमिति । एवं च प्ररिशेषाख्यसन्मानात् मोहस्यार्धप्राप्तित्वरूपपृथगवस्थात्वावगमाद्युक्तमेव हरेस्तत्प्रवर्तकत्वमिति भावः । (अयं च न्यायः परिशेषादित्यनेनोक्तः।) ॥ ७ ॥

## न स्थानतोऽप्यधिकरणम् III-2-8

**न्या.वि. — न च स्थानभेदाद्विष्णोरपि भेदः । ''अयमेव सः,'' ''नेह नानास्ति किंचने''त्यादिश्रुतिबलात् स्थानानां भेदस्तस्याभेद (एव)इति व्यवस्थोपपत्तेः ॥ ८ ॥**

**भा.बो.—** ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ इत्यत्रानेकस्थानस्थितानां घटादीनां भिन्नत्वस्याकाशादीनामभिन्नत्वस्य च दर्शनात्प्रतिशरीरं जाग्रदादिस्थानेषु स्थितः ईश्वरः किमन्योन्यं भिन्नः उताभिन्नः इति सन्देहे भिन्न एवेति पूर्वः पक्षः । अभिन्न एवेति सिद्धान्तः । तत्र 'स्थानभेदः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च स्थानभेदादिति ॥ स्थानानां सुरासुरनरादिशरीराणाम् । अत्रापि दक्षिणाक्ष्यादीनां भेदादित्यर्थः । अनेन सूत्रे स्थानशब्दस्तद्भेदोपलक्षक इत्युक्तं भवति । अपिपदेन घटादिदृष्टान्तं समुच्चिनोति । इदमुक्तं भवति । प्रतिशरीरं जाग्रदादिस्थानेषु स्थितः परमात्मा अन्योन्यं भिन्नः भिन्नस्थानत्वात् घटपटवदिति । न चैकस्यैव घटस्य कालभेदेन भिन्नस्थानत्वोपपत्तेर्व्यभिचार इति वाच्यम् । युगपदित्यस्य हेतुविशेषणत्वेन विवक्षितत्वात् । तथाप्याकाशे व्यभिचार इति चेन्न । समग्ररूपेणानेकस्थानत्वस्य विवक्षितत्वात् । आकाशस्यैकदेशतोऽनेकस्थानत्वेन समग्ररूपेणानेकस्थानत्वाभावात् । न च स्वरूपासिद्धिः । 'सप्ताङ्ग एकोनविंशतिमुखः' इत्यादिश्रुतिसिद्धत्वात् । न च 'एतमेव ब्रह्मेत्याचक्षत' इति श्रुतिविरोधोऽनुमानस्येति वाच्यम् । तस्याः

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।

प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥ इत्यादिश्रुतिसिद्धत्वेनाप्रामाण्यात् । एवं च स्थानभेदादीश्वरस्यापि भिन्नत्वाद्भिन्नानां च गुणतारतम्यस्यानुग्राह्यानुग्राहकभावस्य दर्शनान्न तस्य महामहिमत्वमिति नेति भावः । (अयं च न्यायः स्थानतोऽपीत्यनेन स्थानभेदात्परमात्मनोऽपि भेद इत्युक्तः।) तद्धेतुत्वेन 'व्यवस्था' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ अयमेव स इति ॥ अभेद एवेत्येवकारेण भेदाभेदनिरासः । इदमुक्तं



भवति । यदुक्तं अभेदश्रुतेर्भेदश्रुतिबाधितत्वेनाप्रामाण्यान्न तद्बाधोऽनुमानस्येति तदयुक्तम् । भेदश्रुतेः स्थानभेदविषयत्वेन सावकाशत्वात् । भिन्नोऽभिन्नेषु संस्थितेरिति वचनात् । अभेदश्रुतेस्तु विषयान्तराभावेन निरवकाशत्वात् । निरवकाशानुसारेण सावकाशस्य नेयत्वात् । न च भेदाभेदाङ्गीकारेण तदुपपत्तिः । अयमेव सः, 'नेह नानाऽस्ति किञ्चन' इत्यादिप्रमाणविरोधात् । अत्राद्येनैवकारेण रूपाणां परस्परं भेदो निषिध्यते । द्वितीयेन तु, नेह नानास्तीति स्पष्टोऽस्य भेदाभेदनिषेध इति । एवं चाभेदश्रुतेर्निरवकाशत्वेन बलवत्त्वात्तदनुसारेण भेदश्रुतेः स्थानभेदविषयत्वमेवेति व्यवस्थोपपत्तेरनुमानस्याभेदश्रुतिबाधितत्वाद्विष्णोः स्थानतोऽपि भेदाभावेनानुग्राह्यानुग्राहकत्वाभावात्सिद्धं महामहिमत्वमिति । (अयं च न्यायः 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति 'प्रत्येकमतद्वचनादिति 'अपि चैवमेके' इति सूत्रैः स्थानानां भेदः परमात्मनोऽभेदः इति व्यवस्थोपपत्तेरिति सूचितः ।) ॥ ८ ॥

## अरूपाधिकरणम् III-2-9

**न्या.वि.- न च रूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यम् । अप्राकृतरूपवत्त्वमिति व्यवस्थोपपत्तेः ॥ ९ ॥**

**भा.बो.—** ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ इत्यत्र युक्तायुक्तयोः साधनत्वोक्तिदर्शनाद्विष्णुप्राप्तिसाधनत्वोक्तिर्युक्ता न वेति सन्देहे न युक्तेति पूर्वः पक्षः । युक्तैवेति सिद्धान्तः । तत्र 'विरुद्धत्वम्'इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च रूपवत्त्वेति ॥ विष्णुः किं रूपवान् स्यादुतारूपवान् वा । नाद्यः । तदरूपमनामयमित्याद्यरूपत्वाभिधायकश्रुतेरप्रामाण्यप्रसङ्गात् । अनित्यत्वप्राप्तेश्च । न द्वितीयः । रुग्मवर्णं कर्तारमित्यादिरूपप्रतिपादकश्रुत्यप्रामाण्यापत्तेः । सौन्दर्याद्यभावप्रसङ्गाच्चेत्यर्थः । एवं च श्रुत्योः परस्परं विरोधात् रूपाद्यसिद्धौ सौन्दर्याद्ययोगेन न परमात्मनि भक्तिर्युक्तेति नेति भावः । (अयं च न्यायः 'प्रकाशवच्चावैयर्थ्यम्'इत्यनेन श्रुतिव्यवस्थाप्रदर्शकेन, रूपवत्त्वारूपवत्त्ववचनयोर्विरुद्धत्वमिति सूचनेन सूचितः ।) तद्धेतुत्वेन व्यवस्थेत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अप्राकृतेति ॥

विष्णोरिति शेषः । नञोऽभावार्थत्वेन प्राकृतरूपत्वाभाव इत्यपि व्याख्येयम् । तथा च रुग्मवर्णमित्यादिश्रुतेरप्राकृतरूपवत्त्वप्रतिपादकत्वं तदरूपमित्यादिश्रुतेः प्राकृतरूपाभावप्रतिपादकत्वमित्यनेन प्रकारेण व्यवस्थोपपत्तेर्विरोधाभावेन न वचनयोरप्रामाण्यम् । नापि सौन्दर्याद्यभावोऽनित्यत्वप्राप्तिश्च । अप्राकृतरूपवत्त्वाङ्गीकारात् । अनित्य(त्व)प्राकृतरूपानङ्गीकारादित्यर्थः । एवं च व्यवस्थया श्रुतिप्रामाण्यात्सौन्दर्यादिसम्भवेन युक्ता परमात्मनि भक्तिरिति भावः । (अयं च न्यायः प्रकाशवच्चावैयर्थ्यमित्यनेन विलक्षणाप्राकृतरूपवद्वेन प्राकृतरूपराहित्यमिति सूचितः ) ॥ ९ ॥

## उपमाधिकरणम् III-2-10

**न्या.वि.— न च परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेदः । अल्पगुणत्वादिविरोधात् ॥ १० ॥**

**भा.बो.—** ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ इत्यत्र युक्तायुक्तसाधनदर्शनेन हरौ भक्तिर्युक्ता न वेति सन्देहे न युक्तेति पूर्वपक्षः । युक्तेति सिद्धान्तः । तत्र 'न्यायसाम्यम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च परमात्मनेति ॥ परमात्मनाऽभेद इत्यन्वयः । चेतनत्वे(प्यु)त्युपलक्षणम् । अपिशब्दो दृष्टान्तीभूतमत्स्यादिसमुच्चयार्थः । यद्वाऽभेदोऽपीति सम्बन्धः । तेन भेदव्यपदेशाच्चेत्यादिना जीवपरमात्मभेदस्य प्रतिपादितत्वात् कथं तदभेदेन पूर्वपक्षोत्थापनमित्याशङ्का परिहृता भवति । एतदधिकरणपूर्वपक्षिणा जीवब्रह्मणोरंशांशिभावेन भेदाभेदाङ्गीकाराद्भेदाविरोधात् । एवं च 'जीवः परमात्माभिन्नः चेतनत्वात्, अंशत्वात्, मत्स्यादिवत् इत्यनुमानेन जीवस्य परमात्माभिन्नत्वात्स्वस्मिंश्च व्यत्ययायोगान्न भक्तिर्युक्तेति नेति भावः । (अयं च न्यायः भेदनिरासकचशब्देन प्राप्तस्य निरासायोगादिति तत्प्रापकत्वेन सूचितः ।) तद्धेतुत्वेन 'अल्पता' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अल्पगुणत्वादीति ॥ जीवस्येत्यनुवर्तते । आदिपदेन परमात्मप्रतिबिम्बत्वं गृह्यते । यद्वा परमात्मनः पूर्णगुणत्वमादिशब्दार्थः । तथा च 'जीवः परमात्माभिन्नो न



भवति तद्विरुद्धधर्माधिकरणत्वात्, प्रतिबिम्बत्वात्, सम्प्रतिपन्नवदिति अनुमानविरोधान्न जीवस्य परमात्माभेदः । न च पूर्वोत्तरकालावस्थायिभिन्नाभिन्ने देहादौ व्यभिचारः । देशकालपुरुषावस्थादिभेदानिर्बाधविरुद्धधर्माधिकरणत्वस्य हेत्वर्थात् । न च चेतनत्वांशत्वन्यायविरोधः । श्रुत्यादिसिद्धैतदनुमानेन तयोरेव बाधितत्वात् । एवं चाल्पगुणत्वाज्जीवस्य अनन्तगुणेन परमात्मनाऽभेदाभावाद्युक्ता तत्र भक्तिरिति भावः । (अयं च न्यायः तदधीनत्वाद्यर्थकेन अत एवेत्यनेन सूचितः । तदपेक्षयाऽल्पतां विना तदधीनत्वायोगात् ।) ॥ १० ॥

## अम्बुवदधिकरणम् III-2-11

**न्या.वि.— न च सादृश्यस्य सत्वात्साधनं विनैव तादृक्त्वव्यक्तिः । अनादितः संसारस्यानिवृत्तत्वेन भावात् ॥ ११ ॥**

**भा.बो.—** ॐ अम्बुवदग्रहणात्तु न तथात्वं ॐ ॥ इत्यत्र कर्तव्याकर्तव्यार्थदर्शनाद्भगवद्भक्तिः कर्तव्या न वेति सन्देहे न कर्तव्येति पूर्वः पक्षः । कर्तव्येति सिद्धान्तः । तत्र 'सतोभवः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सादृश्यस्येति ॥ सत्वात् नित्यमिति शेषः ॥ साधनं विनैवेति ॥ विद्यमानस्य कदाचित्स्वयमेव सुप्ताविवाभिव्यक्तिसम्भवादिति भावः । तादृक्त्वं ज्ञानानन्दादिसादृश्यम् । अनेन 'सतो भवः' सत्वमिति न्यायो विवृतो भवति । एवं च ज्ञानानन्दादिसादृश्यस्यानादितः सत्वेन भक्तिं विनैवाभिव्यक्तिसम्भवान्न तदर्थं माहात्म्यवर्णनमिति नेति भावः । (अयं च न्यायः 'तथात्वम्' इत्यनेन विद्यमानस्याभिव्यक्तत्वमिति वदता सूचितः।) तद्धेतुत्वेन 'भवः' इत्युक्तसिद्धान्तन्यायं अपेक्षितांशपूरणेन विवृणोति ॥ अनादित इति ॥ न चाप्रयोजको हेतुः । ज्ञानानन्दादिसादृश्यस्य साधनं विनैवाभिव्यक्तत्वेनानादिसंसारप्रवाहानुपपत्तेः । एवं चानादितः संसारस्य सद्भावात्, ज्ञानानन्दादिसादृश्याभिव्यक्त्यर्थं हरौ भक्तिः कर्तव्येति भावः । (अयं च न्यायो न तथात्वमित्यनेन सतोऽप्यनभिव्यक्तत्वं वदता सूचितः।) ॥ ११ ॥

## वृद्धिह्रासाधिकरणम् III-2-12

**न्या.वि.— न च मुक्तत्वादिगुणसाम्याद्ब्रह्मादीनां भक्त्यादिगुणसाम्यम् । यथायथाऽधिकारो विशिष्यते, एवं ज्ञानं भक्तिर्बलं च विशिष्यते । मुक्तावानन्द एते च गुणा विशिष्यन्ते । अत आहुर्ब्रह्मणे मुक्ता बलिं हरन्ति' इत्यादिविशेषदृष्टेः ॥१२॥**

**भा.बो.—** ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ इत्यत्र एकप्रकारेण चेतनत्वादीनां तारतम्योपेतज्ञानादीनां धर्माणां दर्शनेन भगवद्भक्तिः किं भक्तेष्वेकप्रकारा उत वृद्धिह्रासवतीति सन्देहे एकप्रकारैवेति पूर्वः पक्षः । वृद्धिह्रासवतीति सिद्धान्तः । तत्र 'गुणसाम्यम्'इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च मुक्तत्वादीति ॥ तत्र मुक्तत्वं नाम संसारनिवृत्तिः । तस्याः सर्वत्र साम्यात् । आदिशब्देनानन्दत्वादि ग्राह्यम् । अत्र गुणसाम्यमित्येतत् साध्यहेतुप्रतिपादकत्वेन द्वेधा विवृतमिति ज्ञातव्यम् । न चाप्रयोजको हेतुः फलसाम्येऽपि, साधनातिशयस्य वैयर्थ्यं केषाञ्चिदसम्यग्भक्तिर्वा स्यादिति । एवं च फलभूतमुक्तत्वादिसाम्यात् साधनभूतभक्त्यादेरपि न तारतम्यमिति नेति भावः । (अयं च न्यायः'दर्शनाच्च'इति सूत्रेण मुक्तत्वादिफलतारतम्यं प्रतिपादयता सूचितः । अन्यथा तत्कथनमसङ्गतं स्यात् ।) तद्धेतुत्वेन 'विशेषदृष्टिः'इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यथायथेति ॥ अधिकारः श्रवणादौ । एते ज्ञानभक्त्यादयः । मुक्तावेतेषां फलत्वेनाङ्गीकारात् । ब्रह्मणे– चतुर्मुखाय, विशेषदृष्टेः– साध्यसाधनतारतम्यदर्शनादित्यर्थः । एवं च साध्यसाधनतारतम्यलक्षणविशेषस्य श्रुत्या दृष्टेर्न भक्त्यादिसाधनस्यैक- प्रकारतेति भावः । (अयं च न्यायः'दर्शनाच्च'इत्यनेनैव सूत्रेण विशेषदृष्टिर्विशेषश्रुतिरित्युक्तः।) ॥ १२ ॥

## प्रकृतैतावत्त्वाधिकरणम् III-2-13

**न्या.वि. — न च संहारकर्तुरसंहारादन्यरक्षाया अयोगः । स सृजति स पालयति स विनाशयति इत्यादिविशेषवाक्यात् । अन्नदानाद्युपपत्तेश्च ॥ १३ ॥**



**भा.बो.—** ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ इत्यत्र गुणानामपि च युक्तायुक्तत्वदर्शनाज्जगत्पालकत्वरूपो गुणो विष्णोर्युक्तो न वेति सन्देहे न युक्त इति पूर्वः पक्षः । युक्त इति सिद्धान्तः । तत्र 'अयोगः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च संहारेति ॥ अन्यस्य संहारकर्तृत्वे सति तन्निवारणादिरूपो व्यापारोऽसंहारात्संहाराभावादन्यः रक्षारूपः सम्भवेत् । न चैवमिति भावः । एवं च असंहारव्यतिरिक्तरक्षाया अयोगेन पालकत्वाभावान्न तस्य महामहिमत्वमिति नेति भावः । (अयं च न्यायः 'ततो ब्रवीति च भूय' इत्यनेन, पालकत्वस्य सृष्टिसंहारकर्तृत्वाद्भिन्नत्वं प्रतिपादयता सूचितः ।) तद्धेतुत्वेन 'विशेषवाक्यम्'इत्युक्तसिद्धान्तन्यायं तद्वाक्योदाहरणपूर्वकं विवृणोति ॥ स सृजतीति ॥ स पालयतीति पृथगुक्तेरस्य विशेषवाक्यत्वं ज्ञातव्यम् । अनेन 'विशेषदृष्टिवाक्ये' इत्यनुव्याख्याने विशेषपदस्योभयत्राप्यन्वय इत्युक्तं भवति । वाक्ये चेति चशब्दसमुच्चितन्यायमाह ॥ अन्नदानेति ॥ अन्नदानादिरूपोपपत्तेरित्यर्थः । असंहारव्यतिरिक्तपालनाभावेऽन्नदानादि न स्यादिति भावः । एवं च विशेषवाक्यात् पालनादियुक्तेर्हरौ भक्तिर्युक्तेति भावः । (अयं च न्यायो 'ब्रवीति च'इत्यनेनोक्तः।) ॥ १३ ॥

## अव्यक्ताधिकरणम् III-2-14

**न्या.वि.— न चाव्यक्तस्वभावस्य दर्शने तर्कबाधः । अनन्तशक्तित्वाद्विष्णोः । तच्छक्त्याऽव्यक्तस्यापि दर्शनोपपत्तेः ॥ १४ ॥**

**भा.बो.—** ॐ तदव्यक्तमाह हि ॐ ॥ इत्यत्र कर्तव्याकर्तव्यव्यापारदर्शनाद्भक्तिः कर्तव्या न वेति सन्देहे न कर्तव्येति पूर्वः पक्षः । कर्तव्येति सिद्धान्तः । तत्र 'तर्कबाधः' इत्युक्तपूर्वपक्षन्यायं अपेक्षितांशप्रदर्शनपूर्वकं विवृणोति ॥ न चाव्यक्तेति ॥ अव्यक्तस्वभावस्य– ईश्वरस्य दर्शने, ईश्वरो न प्रतीयते अव्यक्तस्वभावत्वात्, अदृष्टवदिति तर्कबाध इत्यर्थः । अत्र नेश्वरे भक्तिः कार्या । प्रयोजनाभावात् । न च तदापरोक्ष्यं प्रयोजनमिति वाच्यम् । तस्याव्यक्तस्वभावत्वेनापरोक्ष्य(क्ष्ये)तर्कबाध इति पूर्वपक्ष्यभिप्रायः । एवं च

तर्कबाधेन भगवदापरोक्ष्याभावेन भक्तेर्निष्फलत्वान्न युक्तं माहात्म्यवर्णनमिति नेति भावः । (अयं च न्यायः तदव्यक्तमाह ही त्यादिसूत्रत्रयेण जीवशक्त्या ज्ञानाभावेऽव्यक्तत्वरूपहेतुं वदता सूचितः । तथा 'प्रकाशश्च कर्मण्यभ्यासात्' इत्यनेन चकारेणाव्यक्तत्वसमुच्चयादव्यक्तत्वेऽपि प्रकाशो भवतीत्यव्यक्तत्वस्या-प्रयोजकत्वोक्त्या सूचितः ।) तद्धेतुत्वेन 'पुंशक्तिः' इत्युक्तसिद्धान्तन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृणोति ॥ अनन्तशक्तित्वादिति ॥ अव्यक्तस्वभावस्य स्वप्रसादेनापि प्रत्यक्षता न युज्यते । न हि प्रसन्नोऽपि नरो वानरो भवितुमीष्ट इत्याशङ्कापरिहारार्थमेतदुक्तम् । तच्छक्त्या विष्णुशक्त्या । अनेन 'पुंशक्तिः' इत्यत्र पुंशब्दो विष्णुवाचक इत्युक्तं भवति । एवं चाव्यक्तस्यापि पुंशक्त्याऽऽपरोक्ष्य-सम्भवाद्युक्ता तत्र भक्तिरिति भावः । (अयं च न्यायः 'अतोऽनन्तेन तथा हि लिङ्गम्'इत्यनेनानन्तशक्तित्वाद्विष्णोस्तच्छक्त्या प्रकाशोपपत्तेरित्युक्तः।) ॥१४॥

## अहिकुंडलाधिकरणम् III-2-15

**न्या.वि.— न च गुणानां गुणिस्वरूपत्वं विरुद्धम् । कालादिदृष्टान्तात् ॥ १५ ॥**

भा.बो.— ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ इत्यत्र पूर्वाधिकरणवत् सबीजः सन्देहः, पूर्वः पक्षः, सिद्धान्तश्च । तत्र 'विलोमता'इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च गुणानामिति ॥ एवं च गुणानां गुणित्वस्वरूपत्व-विलोमतयेश्वरस्य गुणित्वाभावान्न युक्ता तत्र भक्तिरिति नेति भावः । (अयं च न्यायः 'उभयव्यपदेशात्'इत्यनेनानादित्वमानन्दत्वं च साधयता गुणस्य गुणिस्वरूपत्वं विरुद्धमिति सूचितः ।) तद्धतुत्वेन 'सुनिदर्शनम्' इत्युक्त-सिद्धान्तन्यायं विवृणोति ॥ कालादीति ॥ यथा कालस्य पूर्वेणाभेदेऽपि 'काल' इति विशेष्यः, 'पूर्व' इति विशेषको भवति । यथा वा प्रकाशात्मकस्या-प्यादित्यस्य प्रकाशित्वम् , यथा वा कुण्डलात्मस्याप्यहेः कुण्डलित्वम् । एवं विशेषबलादेव गुणात्मकस्यापि ब्रह्मणः आनन्दवत्त्वादिकं युज्यत इति भावः । अत्राहिकुण्डलदृष्टान्तस्य स्थूलमतीनां बुद्ध्यारोहनिमित्तत्वेन । द्वितीयतृतीययोस्ते-जोरूपत्वातिसूक्ष्मत्वाभ्यां ब्रह्मण आदित्यकालसाम्यात् । अनुरूपत्वेन



बहुरूपत्वेन च दृष्टान्तानां सुष्ठुत्वमनुव्याख्यायां सुशब्देनोक्तम् । तच्चानन्तरोक्तस्यापि कालदृष्टान्तस्य प्रथमं ग्रहणेन बहुत्वप्रदर्शकिणादिपदेन विवृतम् । अहिकुण्डलदृष्टान्तस्य भेदाभेदविषयत्वेन कालादिवदानुरूप्याभावात् । एवं च कालादिनिदर्शनेन गुणस्वरूपस्यापि हरेर्गुणित्वेन युक्ता तत्र भक्तिरिति भावः । अयं च न्यायः 'अहिकुण्डलवत्, 'प्रकाशाश्रयवद्वा, 'पूर्ववद्वा' इत्यनेनोक्तः।) ॥ १५ ॥

## परमताधिकरणम् III-2-16

**न्या.वि.— न च ब्रह्मा(नन्दा)दीनामन्यथात्वात्तदतच्छब्दत्वं तच्छब्दत्वे लोकोपमत्वं चेति विलोमता ।**

**अलौकिकास्तस्य शब्दास्तथाऽर्था अलौकिको ह्येष विष्णुः परत्वात् । तथापि शब्दा लौकिका अप्यमुष्मिन् प्रवर्तमाना अधिकार्थान् वदन्ति ॥ इत्यादिश्रुतिभ्योऽलौकिकत्वावगमात् ॥१६॥**

भा.बो.— ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ इत्यत्र भगवदानन्दादिगुणानां लौकिकत्वालौकिकत्वस्य वा सम्भवाल्लौकिकत्वा-लौकिकत्वसन्देहे लोकसदृशमेवानन्दादिकमिति पूर्वः पक्षः । अलौकिकमिति सिद्धान्तः । तत्र 'विलोमता'इत्यनेन पूर्वपक्षोक्तन्यायं विवृण्वन् प्रतिक्षिपति ॥ ॥ न च ब्रह्मेति ॥ तत्र अन्यथात्वादित्यलौकिकलक्षणापादकमेव हेतुतयोक्तम् । अतच्छब्दत्वं– आनन्दादिशब्दवाच्यत्वाभावः स्यादित्यर्थः । तच्छब्दत्वे आनन्दादिशब्दवाच्यत्वे, लोकोपमत्वं स्यादिति शेषः । एवं चालौकिकत्वे आनन्दादिशब्दवाच्यत्वाभावः, लौकिकेष्वेव सङ्गतिग्रहणात् । आनन्दादि-शब्दवाच्यत्वे च लौकिकत्वमिति अलौकिकत्वानन्दादिशब्दवाच्यत्वयोर्विलोमतया सहानवस्थानलक्षणविरोधितया, आनन्दादिशब्दवाच्यत्वेन लौकिकानन्दादिगुणे परमात्मनि भक्तिर्न युक्तेति नेति भावः । (अयं च न्यायो 'बुध्यर्थः पादवत्' इत्यनेन अलौकिकत्वानन्दादिशब्दवाच्यत्वयोर्विरोधं परिहरता सूचितः ।) तद्धेतुत्वेन 'अलौकिकत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अलौकिका इति ॥ शब्दानामलौकिकत्वं नाम वैदिकत्वम् । अर्थानामलौकिकत्वं नामाप्राकृतत्वम् ।

अर्थाः आनन्दादिगुणाः । कुत इत्यत उक्तं अलौकिको हीति ॥ तदपि कुत इत्यत उक्तम् ॥ परत्वादिति ॥ उत्तमत्वादित्यर्थः । लौकिकाः पौरुषेयागमाः । अधिकार्थान् लोकविलक्षणानन्दादीन् । अलौकिकत्वावगमात्, 'ब्रह्मानन्दादीनाम्' इति शेषः । एवं चैतच्छ्रुतिविरोधादलौकिकत्वानन्दादिशब्दवाच्यत्वयोर्न विरोध इति ब्रह्मानन्दादेरलौकिकत्वेऽप्यानन्दादिशब्दवाच्यत्वमुपपन्नमिति भावः । (अयं च न्यायः 'परमतः' इत्यनेन 'दर्शनात्' इत्यनेन चोक्तः ।) ॥ १६ ॥

## स्थानविशेषाधिकरणम् III-2-17

**न्या.वि.— न च ब्रह्माद्यानन्दवैचित्र्ये बिम्बभूतविष्णवानन्दवैचित्र्यम् आदित्यादिवदाधिक्यात् । न हि सूर्यकान्तप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्ये वैचित्र्यम् । आधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेः ॥ १७ ॥**

भा.बो. — ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ इत्यत्र पदार्थानां किञ्चित्प्रतिबिम्बत्वाप्रतिबिम्बत्वदर्शनेन चतुर्मुखाद्यानन्दादि भगवदानन्दादिप्रतिबिम्बं भवति न वेति सन्देहे, प्रतिबिम्बं न भवतीति पूर्वः पक्षः । भगवदानन्दादिप्रतिबिम्बमिति सिद्धान्तः । तत्र 'नानाभावः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च ब्रह्मेति ॥ अत्र ब्रह्माद्यानन्दवैचित्र्यस्य प्रयोजकत्वं वदता पूर्वपक्षे प्रतिबिम्बभूतब्रह्माद्यानन्दवैचित्र्ये ब्रह्मभूतविष्णवानन्दवैचित्र्यं स्यात् । अन्यथा ब्रह्माद्यानन्दवैचित्र्यं न स्यादिति तर्कः 'नानाभावः' इत्यनेनोक्त इति विवृतं भवति । एवं च प्रतिबिम्बभूतब्रह्मानन्दादीनां नानाभावाद्विचित्रत्वात् बिम्बभूतविष्णवानन्दादेरपि वैचित्र्यापातेन न तत्र भक्तिरुपपन्नेति नेति भावः । (अयं च न्यायः स्थानविशेषादित्यनेन ब्रह्मानन्दादीनां नानाभावस्यान्यथासिद्धिं प्रतिपादयता सूचितः ।)

तद्धेतुत्वेन 'आधिक्यम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ आदित्यादिवदिति ॥ आदिपदेन सूर्यकान्तादिस्थानं गृह्यते । आधिक्यादिति ॥ बिम्बभूतविष्णोरैश्वर्यरूपाधिक्याद्ब्रह्मादिस्थानानां भक्त्यादिगुणैराधिक्यादित्यर्थः । स्थानशक्त्यपेक्षया बिम्बशक्तेर्मुख्यत्वात्सौत्र क्रमोल्लङ्घनम् । सौत्रक्रममनुसृत्यादिपदोक्तदृष्टान्तमुपपादयति ॥ न हीति ॥ मध्यमपदलोपेन सूर्यकान्तादिगतादित्यप्रतिबिम्बस्येत्यर्थः । तथा च यथा सूर्यकान्तादिगतसूर्यप्रतिबिम्बस्याग्निजनकत्वं न जलगतस्येति प्रतिबिम्बवैचित्र्येऽपि न बिम्बे सूर्ये वैचित्र्यं तथा ब्रह्माद्यानन्दवैचित्र्येऽपि न भगवदानन्दवैचित्र्यमिति भावः । अनेन सूर्यकान्तादिगतसूर्यप्रतिबिम्बसूर्यकादौ मिथो विचित्रत्वहेतोर्व्यभिचार उक्तो भवति । ननु बिम्बवैचित्र्याभावात्सूर्यकान्तगतसूर्यप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्यत्र किं निमित्तमित्यत आह ॥ आधिक्यं हीति ॥ सूर्यकान्तादाविति शेषः । तत्र सूर्यकान्ते सूर्यप्रतिबिम्बस्याग्निजनकत्वशक्तौ । ननु सूर्यकान्तगतमुखप्रतिबिम्बस्याग्निजनकत्वं स्यादित्यत आह ॥ आधिक्यं हीति ॥ सूर्यादिगतमित्यर्थः । तदुपपादयति ॥ सूर्येति ॥ सूर्यचन्द्रादेः प्रतिबिम्बं विनाऽन्यत्र सूर्यकान्तादिगतमुखेऽग्निजनकत्वरूपविशेषादृष्टेरित्यर्थः । अनेन आदित्येत्युक्तदृष्टान्त उपपादितो भवति । एवं च बिम्बभूतविष्णवैश्वर्याद्याधिक्यात्स्थानभूतब्रह्मादीनां भक्त्यादिगुणाधिक्याद्ब्रह्माद्यानन्दवैचित्र्येऽपि न विष्णवानन्दवैचित्र्यमिति युक्ता तत्र भक्तिरिति भावः । (अयं च न्यायः 'स्थानविशेषात्'इति ब्रह्मादिस्थानाधिक्यं वदता 'उपपत्तेश्च'इत्यनेन भगवत ऐश्वर्यरूपाधिक्यं वदता चोक्तः।) ॥ १७ ॥



## तथाऽन्यदधिकरणम् III-2-18

**न्या.वि.— न च नानाभावाद्विष्णोश्चित्तप्रतिबिम्बरूपता । आधिक्यादेव । प्रतिबिम्बे हि दोषाश्च प्रतीयन्ते । अतो हि श्रुतिः प्रतिषेधति 'नेदं यदिदमुपासते' इति ॥ १८ ॥**

भा.बो.— ॐ तथाऽन्यत्प्रतिषेधात् ॐ ॥ इत्यत्र व्यक्ताव्यक्तपदार्थदर्शनाद्ब्रह्म किमव्यक्तं व्यक्तमिति सन्देहे व्यक्तमिति पूर्वः पक्षः । अव्यक्तमिति सिद्धान्तः । तत्र 'नानाभावः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नानाभावादिति ॥

रूपाणामिति शेषः । विष्णोरित्यस्य रूपाणामित्याध्याहृतेनापि सम्बन्धः । चित्तप्रतिबिम्बरूपता ध्यानकाले प्रतीतचित्तोपादानकतेत्यर्थः । ततश्चायमर्थः । विष्णोः स्वरूपभेदाभावेऽपि ध्यातृबहुत्वेन ध्यानकाले प्रतीतरूपाणां बहुत्वेन तेषां विष्णुत्वाङ्गीकारे विरोधाभावाद्विष्णोश्चित्तप्रतिबिम्बरूपतेत्यव्यक्तत्वाभावाद्व्यर्था भक्तिरिति भावः । (अयं च न्यायः 'अन्यत्'इत्यनेन विष्णुचित्तप्रतिबिम्बयोर्भेदं समर्थयता नानाभावाद्विष्णोश्चित्तप्रतिबिम्बितत्वं सम्भवतीति सूचितः।) तद्धेतुत्वेन 'आधिक्यम्'इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ आधिक्यादेवेति ॥ एवशब्देन सूत्रगततथाशब्दाभिप्राय उक्तो भवति । यथा खलु जीवानन्दादीनां अल्पत्वादिना कारणेन ब्रह्मानन्दादेरुन्मानत्वादाधिक्यात्ततो वैलक्षण्यं तथा प्रकृतस्य चित्तप्रतिबिम्बस्य दुर्लक्षणत्वादिकारणेन विष्णोर्निर्दोषत्वाद्याधिक्यादेव तद्वैलक्षण्यमिति । विष्णोराधिक्येऽपि कुतो न चित्तप्रतिबिम्बरूपतेत्यत आह ॥ प्रतिबिम्बे हीति ॥ अत्र श्रुत्यवष्टम्भमप्याह ॥ अतो हीति ॥ हिशब्दः श्रुतेः प्रसिद्धतां द्योतयति । निर्दोषदोषित्ववैलक्षण्येन ब्रह्मोपासाप्रकृतयोरैक्यानुपपत्तेरित्यर्थः । ऐक्ये श्रौतनिषेधो न स्यादिति भावः । एवं च विष्णोर्निर्दोषत्वाद्याधिक्याच्चित्तप्रतिबिम्बरूपत्वाभावाद्युक्तमव्यक्तत्वमिति भावः । (अयं च न्यायः तथेत्यनेन, चित्तप्रतीतस्य दुर्लक्षणयुक्तत्वाद्विष्णोर्निर्दोषत्वेनाधिक्यादिति सूचितः । अत एव तत्वप्रकाशिकायां दृष्टान्तदार्ष्टान्तिकयोः सहेतुकयोर्व्याख्यानं कृतम् ।) ॥१८॥

## सर्वगतत्वाधिकरणम् III-2-19

**न्या.वि.— न च नानावतारकौतुकदर्शनाद्विष्णोः क्वचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादि कुर्वन्नन्यमेव सामस्त्येन नियोजयति । ''सर्वत्र सर्वमेतस्मात्'' इत्यादिश्रुत्या क्रीडायामपि स्वातन्त्र्यात् ।**

स्वातन्त्र्यात्क्रीडते विष्णुर्न च स्वातन्त्र्यमन्यगम् ।
करोति क्वापि नियता क्रीडा सृष्ट्यादिकाऽस्य च ॥



नियतक्रीडनादेव कर्ता नान्योऽस्ति कस्यचित् ।
अस्वतन्त्रो हि चलति चलचित्तादशक्तितः ।
स्वतन्त्रः पूर्णशक्तिः सन् कुतोऽसौ नियतिं त्यजेत् ॥

इति श्रुतेश्च ॥१९॥

**भा.बो.—** ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ इत्यत्र जन्माद्यस्य यत इत्यादिजगत्कर्तृत्वाद्युक्तेः यत्किञ्चिज्जगत्कर्तृत्वे सकलजगत्कर्तृत्वे वा सम्भवात्परमेश्वरः किं सर्वदेशकालीनसृष्ट्यादिकर्ता न वेति सन्देहे नेति पूर्वः पक्षः । सर्वदेशकालीनसृष्ट्यादिकर्तेति सिद्धान्तः । तत्र 'नानाभावः' इत्युक्तमेव पूर्वपक्षन्यायं तत्फलप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नानावतारेति ॥ अनेकावतारे कौतुकस्यकृष्णाद्यवतारेषु लीलारूपकौतुकस्य, दर्शनात् । कौतुकादेव लीलयैव । सामस्त्येन स्वातन्त्र्यादिना । तद्दत्वेति यावत् । नियोजयति सृष्ट्यादावित्यर्थः । एवं च विष्णोरवतारेषु नानाकौतुकदर्शनाज्जगत्सृष्ट्यादिकर्तृत्वमप्यन्यस्मै दास्यतीति न तस्यैव महामहिमत्वमिति नेति भावः । (अयं च न्यायः सावधारणेन अनेनेत्यनेनान्यस्य जगत्सृष्ट्यादि निराकुर्वता ईश्वरावतारेषु नानाभावदर्शनादन्यस्मै जगत्सृष्ट्यादिकर्तृत्वदानोपपत्तेरिति सूचितः । अत एव भाष्ये अनेनैवेति ।)

तद्धेतुत्वेन 'स्वातन्त्र्यम्'इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ सर्वत्रेति ॥ आदिपदेन 'सर्वदा सर्ववस्तुषु'इति वाक्यशेषो ग्राह्यः । स्वातन्त्र्यात् स्वातन्त्र्यवगमादित्यर्थः । सर्वत्र सर्ववस्तुषु, सर्ववस्तुविषयं सर्वसृष्ट्यादि , एतस्माद्भवतीति शेषः । तथा यदि क्रीडयाऽन्यस्मै स्वातन्त्र्यं दद्यात्तर्हि तत्कालीनसृष्ट्यादिकर्तृत्वाभावप्राप्त्या सर्ववस्तुविषयसर्वदेशकालीनसृष्ट्यादिकर्तृत्वप्रतिपादकश्रुतिविरोधः स्यादित्यर्थः । अत्रार्थे स्पष्टश्रुतिं चाह ॥ स्वातन्त्र्यात्क्रीडत इति ॥ क्वापि– देशे काले च, नियताऽस्येति सम्बन्धः । सृष्ट्यादिका सृष्ट्यादिविषया इति । नियतं– सृष्ट्यादिविषयम् । एवं च स्वातन्त्र्यात्तस्यैव सकलदेशकालीनजगत्सृष्ट्यादिकर्तृत्वाद्युक्ता तत्र भक्तिरिति भावः । (अयं च न्यायः 'सर्वगत' इति पदेनैव सर्वैश्वर्यादिरूपः सूचितः ।) ॥ १९ ॥

## फलाधिकरणम् III-2-20

न्या.वि.— न च कर्मान्वयव्यतिरेकात्फलस्येश्वरः फलदातेति प्रलोभमात्रम् । तस्यैव स्वातन्त्र्यात् ।

कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव ।
कचिद्ददाति क च नो ददाति न ह्यानन्त्यात्कर्मणां भोगनाशः ॥
स्वातन्त्र्यं चेत्कर्मणां सर्वभोगः स्यान्न ह्येवं कापि तत्केनचित्स्यात् ।
अतो हि स स्वेच्छया किंचिदेव फलं कुर्याद्विफलं प्रायशश्च ॥
कचिदज्ञानं जनयन्भस्म कुर्यात्स्वेच्छावृत्तिस्तस्य विष्णोः स दैव ॥
इति ब्रह्माण्डे ।

स्वतन्त्र ईश एवैकस्तद्वशं कर्म सर्वदा ।
अत ईशत्वमीशस्य न हीशोऽन्यः कथंचन । इति श्रुतेः ।

अतः प्रलोभकल्पने श्रुतहानिरश्रुतकल्पना चेति हरिरेव फलप्रदः ॥ २० ॥

इति श्रीमन्न्यायविवरणे तृतीयाध्यायस्य द्वितीयः पादः ॥

भा.बो.— ॐ फलमत उपपत्तेः ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या किं हरिः फलदाता किं वा कर्म दात्रिति सन्देहे कर्मैव फलदात्रिति पूर्वः पक्षः । ईश्वरः फलदातेति सिद्धान्तः । तत्र 'प्रलोभः' इत्युक्तपूर्वपक्षन्यायं सहेतुकं विवृण्वन् प्रतिक्षिपति ॥ न च कर्मान्वयेति ॥ अन्वयव्यतिरेकादिति समाहारद्वन्द्वः । एवं चेश्वरः फलप्रदातेत्यत्र प्रलोभनमात्रत्वान्न निरतिशयैश्वर्यमिति नेति भावः । (अयं च न्यायो 'धर्मं जैमिनिरत एव' इत्यनेन फलदातुः कर्मणोऽपि भगवदधीनत्वोक्त्या कर्मान्वयव्यतिरेकात्फलस्य, ईश्वरस्य फलदातृत्वं प्रलोभनमात्रमिति सूचितः ।) तद्धेतुत्वेन 'स्वातन्त्र्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तस्यैवेति ॥ ईश्वरस्यैव कर्माप्रयोज्यत्वेन फलदाने कर्तृत्वादित्यर्थः । स्वातन्त्र्यादित्यनेन कर्मेश्वरयोः साम्यं निषेधति । तेन कर्मणः फलनिमित्तकारणत्वेनान्वयव्यतिरेकयोरन्यथासिद्धिरुक्ता भवति । अत्र प्रमाणमाह



॥ कर्माणीति ॥ क च नो ददातीत्यत्र हेतुः ॥ न हीति ॥ कर्मणामित्यस्य पूर्वोत्तरेणापि सम्बन्धः । भोगेन नाशो भोगनाशः । अस्वातन्त्र्यं विपक्षबाधकमुखेनोपपादयति ॥ स्वातन्त्र्यं चेति ॥ अतोऽपि– स्वातन्त्र्यादपि, किञ्चिदेव कर्मफलं फलवत्, कर्मणामित्यनुवर्तते वा । विफलं फलरहितं, प्रकरणात्कर्मेति लक्ष्यते । अज्ञानव्यतिरिक्तेन प्रायश्चित्तादिनिमित्तान्तरेणेति ज्ञातव्यम् । ज्ञानं अपरोक्षम् । तस्य विष्णोः सदैव स्वेच्छावृत्तिः स्वेच्छयावर्तनमित्यर्थः । ब्रह्माण्डपुराणवचनस्य विवक्षिताशेषार्थप्रतिपादकत्वात् श्रुत्यपेक्षया प्रथममुदाहरणम् । श्रुत्युदाहरणस्य फलान्तरं दर्शयन् सिद्धान्तफलं दर्शयति ॥ अत इति ॥ एवं चेश्वरस्यैव स्वातन्त्र्यात्स एव फलदातेति निरतिशयैश्वर्यवत्त्वेन युक्ता तत्र भक्तिरिति भावः । (अयं च न्यायः 'उपपत्तेः' इत्यनेन भगवत्स्वातन्त्र्येण प्रवृत्त्युपपत्तेरिति वदता सूचितः।) ॥ २० ॥

इति श्रीमन्न्यायविवरणभावबोधे तृतीयाध्यायस्य द्वितीयः पादः ॥ २० ॥

# अथ तृतीयः पादः

## सर्ववेदान्तप्रत्ययाधिकरणम् III-3-1

न्या.वि.— न च प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात्तत्तच्छाखिभिरेव तत्र तत्रोक्तं ज्ञेयमिति नियमः । 'नानावेदैरितिहासैः पुराणैः सुज्ञेय एको भगवान् युक्तिभिश्च' इति श्रुतेः सुष्ठु ज्ञेयत्वाद्विष्णोः ॥ १ ॥

भा.बो.— भक्तिसाध्यापरोक्षज्ञानसाधनोपासनाप्रतिपादकोऽयं पादः प्रवृत्तः । एतत्पादान्तर्गताधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायामुक्ताः ।

पृथग्दृष्टिरशक्यत्वमनिर्णीतिः समुच्चयः ।
विशेषदर्शनं कार्यलोपो नानोक्तिराशुता ।
विभ्रमोऽपाकृतिर्लिङ्गमनवस्थाऽविशेषिता ।
अप्रयोजनता चातिप्रसङ्गोऽदूरसंश्रयः ।

विशिष्टकारणं चेष्टा दृष्टवैरूप्यमुन्नतिः ।
अनुक्तिरप्रयत्नत्वं दृढबन्धपराभवौ ।
पुंसाम्यं प्राप्तसन्त्यागः कारणानिर्णयो भ्रमः ।
विशेषदर्शितालापो गुणसाम्यं पृथग्दृशिः ।
अगम्यवर्त्म सन्धानमिष्टं फलमकल्पना ।
शुद्धवैरूप्यमङ्गत्वमविशेषदृशिःक्रिया ।
युक्तयः पूर्वपक्षस्य सुज्ञेयत्वं विधिक्रिया ।
माहात्म्यमल्पशक्तित्वं यथायोग्यफलं भवः ।
फलसाम्यं विशेषश्च गुणाधिक्यं प्रधानता ।
यथाशक्तिक्रिया सन्धिः प्रमाणबलमानतिः ।
कारणं कार्यवैशेष्यं स्वभावो वस्तुदूषणम् ।
प्रतिक्रियाविरोधश्च प्रतिसन्धिरनूनता ।
संस्कारापाटवं स्वेच्छानियतिर्वस्तुवैभवम् ।
विशेषोक्तिरमानत्वं प्राधान्यं प्रीतिरागमः ।
सुस्थिरत्वं कृतप्राप्तिरनादिगुणविस्तरः ।
साधनोत्तमता नानादृष्टिः शिष्टिरनूनता ।
अविघ्नत्वाविरोधौ च गुणवैशेष्यमागमः ।
सिद्धान्तनिर्णये ह्येता युक्तयोऽव्याहताः सदा ॥

ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ इत्यत्र श्रवणादिकर्तव्यतोक्तेः साधारणत्वाद्ब्रह्म किमेकैकेन सर्वशाखोक्तं ज्ञातव्यमुत स्वशाखोक्तमिति सन्देहे स्वशाखोक्तमेव ज्ञेयमिति पूर्वः पक्षः । सर्वशाखोक्तमेव ज्ञेयमिति सिद्धान्तः । तत्र 'पृथग्दृष्टिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रतिशाखमिति ॥ पृथक्त्वात् भिन्नप्रकारत्वेन दर्शनादित्यर्थः । तत्र तत्रोक्तम् तस्यां तस्यां शाखायामुक्तम् । इतिशब्दः प्रकारे । तत्तच्छाखिभिरेव तत्र तत्रोक्तं ज्ञेयमिति नियमः । तथा हि । एकं हि वस्तुत्वेन ज्ञातव्यम् । न हि सर्वशाखोक्तं वस्त्वेकम् । कस्यांचिच्छाखायां 'विज्ञानमानन्दं ब्रह्म' इति



विज्ञानानन्दरूपवस्तूच्यते । क्वचिच्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्यज्ञानानन्तरूपम् । क्वचित् 'श्रोता मन्ता' इति श्रोतृमन्त्रादिरूपम् । 'य आत्माऽपहतपाप्मा' इत्यन्यत्र । एवं च सर्वशाखोक्तार्थानां पृथक्त्वादेकस्यैव ज्ञातव्यत्वात् स्वस्वशाखोक्तमेव ज्ञातव्यमिति सर्वश्रुतिनिर्णायकस्य न सर्वोपादेयतेति नेति भावः । (अयं च न्यायो 'भेदान्नेति चेत्' इत्यनेन प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात्तत्र तत्रोक्तं तत्तच्छाखिभिरेव ज्ञेयमिति प्रतिपादयतोक्तो भवति ।) तद्धेतुत्वेन 'सुज्ञेयम्'इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ नानावेदैरिति ॥ सु(धु)ज्ञेयत्वादिति ॥ सर्वशाखोक्तप्रकारेण ज्ञानं विना ब्रह्मणः सुज्ञेयत्वं न सम्भवतीति भावः । अनेन पूर्वपक्षहेतोर्बाधितविषयत्वमुक्तं भवति । किं च तत्तच्छाखोक्तार्थानां पृथक्त्वेऽनेकाशयत्वे, एकशाखोक्तार्थानामपि ॐ ब्रह्म खं ब्रह्मेत्यादौ पृथक्त्वदर्शनेन तत्तच्छाखोक्तस्यापि तेन तेनाज्ञेयत्वप्रसङ्ग इति । एवं च सर्ववेदोक्तत्वेन विष्णोः सुज्ञेयत्वाच्छास्त्रं सर्वोपादेयमिति भावः । (अयं च न्यायः सर्ववेदैर्विष्णोरेव सुज्ञेयत्वं प्रतिपादयता 'सर्ववेदान्तप्रत्यय' इत्यनेन उक्तो भवति ।) ॥ १ ॥

## उपसंहाराधिकरणम् III-3-2

**न्या.वि.—न चाशक्यतया कस्यापि सर्वगुणोपसंहारो नास्ति । ''सर्वे गुणाः सर्वदैव ह्युपास्यास्तेनैव विद्वान् विधिकृन्नान्यथा स्यात्'इति श्रुतेः, विहितक्रियालोपप्रसङ्गात् ॥ २ ॥**

भा.बो.— ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ इत्यत्र ध्यानविधेरुभयथा पर्यवसानात् परमात्मा किं सर्ववेदोक्तगुणानुपसंहृत्य ध्यातव्योऽन्यथा वेति सन्देहे अन्यथैवेति पूर्वः पक्षः । सर्ववेदोक्तगुणानुपसंहृत्य ध्यातव्य इति सिद्धान्तः । तत्र 'अशक्यत्वम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाशक्यतयेति ॥ सिद्धान्तेऽपि न सर्वेषां सर्वगुणोपसंहार इत्यत उक्तम् ॥ कस्यापीति ॥ चतुर्मुखस्यापीत्यर्थः । नास्तीत्यतः परं 'इति सर्ववेदोक्तप्रकारेण न ध्यातव्यः' इति वाक्यशेषो द्रष्टव्यः ।

एवं च सर्वगुणोपसंहारेण ध्यातुमशक्यत्वात्तदर्थं सर्वपरिज्ञानं व्यर्थमिति नेति भावः । (अयं च न्यायोऽनुपसंहारं समर्थयता 'न वा प्रकरणभेदात्परोव-रीयस्त्वादिवत्' इत्य(न्ते)नेन सूचितो भवति ।) तद्धेतुत्वेन 'विधिक्रिया' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ सर्वे गुणा इति ॥ तेनैव सर्वगुणोपासनेनैव । विधिकृद्विहितत्वादिति भावः । श्रुतेरित्यतः परं 'सर्वगुणोपसंहाराभावः' इति भावः ॥ लोपप्रसङ्गादिति ॥ ततश्चानर्थप्राप्तेरिति भावः । अनेन 'सर्वगुणोपसंहारः कर्तव्यः, विहितक्रियात्वात्, ज्योतिष्टोमादिवत्' इति न्यायोऽप्यर्थाद्विवृतो भवति । न चाशक्यत्वविरोधः । विध्यन्यथानुपपत्त्यैव केषांचिच्छक्तानां कल्पनात् । वक्ष्यति च । 'सर्वगुणोपासकस्याप्य-धिकारिणोऽभावात्' इति । एवं च सर्वगुणोपसंहारेणोपासनाक्रियाया विहितत्वेन कर्तव्यत्वात्सार्थकमेव सर्वपरिज्ञानमिति भावः । (अयं च न्यायः, यथा विहितत्वात्सर्वाणि कर्माणि क्रियन्ते तथोपसंहारेऽपि कर्तव्य इति वदता 'विधिशेषवत्' इत्यनेन सूचितो भवति । अत एव विधिशेषवदित्युक्तम् । अन्यथा कर्मवदित्येवावक्ष्यत् ।) ॥२॥

## प्राप्त्यधिकरणम् III-3-3

**न्या.वि.— केषांचित्सर्वगुणोपसंहारस्य कर्तव्यत्वे सर्वेषामपि तथा स्यात् । अनेनोपसंहर्तव्या, (इति) अनेनोपसंहर्तव्या इति अनिर्णीतेरिति न मन्तव्यम् ।**

यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने ।
युगपत्स्वभुजौ यद्वद् ध्यायेत्तावत एव सः ।
युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः ।
तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः ॥

इति श्रुतेर्युगपद्गुणप्रतीत्यादिमाहात्म्यान्निर्णयोपपत्तेः ॥ ३ ॥

भा.बो.— ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ इत्यत्र कर्तव्यताप्रतिपादन-विरोधाभ्यां गुणोपसंहारानुपसंहारौ युज्येते न वेति सन्देहे न युज्येते इति पूर्वः पक्षः । युज्येते इति सिद्धान्तः । तत्र 'अनिर्णीतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ केषाश्चिदिति ॥ न सर्वगुणोपसंहारानुपसंहारौ एकस्यैवाङ्गीकर्तुं शक्यौ । विरोधात् । किं तु पुरुषभेदेनेति वक्तव्यम् । तत्रेदमुपतिष्ठते । ऋजूनां बहुत्वात् केषाश्चिदित्युक्तम् । उपसंहारस्येत्यतः परं तथोपसंहृत्य ध्यानस्य चेत्यपि ग्राह्यम् । अन्यथा सिद्धान्तसंश्लेषात् । सर्वेषामपीति ऋजुव्यतिरिक्तानामपीति । कुत इत्यत आह ॥ अनेनेति ॥ एवं चाधिकार्यनिर्णीतेरुपसंहारानुपसंहारयोरनुपपन्नत्वान्न तदर्थं सर्वपरिज्ञानमपेक्षितमिति नेति भावः । (अयं च न्याय उपसंहारानुपसंहारयो-र्निर्णयरूपं सामञ्जस्यं वदता 'समञ्जसम्' इत्यनेन सूचितो भवति ।) तद्धेतुत्वेन 'माहात्म्यम्' इत्युक्तसिद्धान्तन्यायं तत्साध्यप्रदर्शनपूर्वकं प्रमाणोदाहरणेन विवृणोति ॥ यस्येति ॥ स्पष्टप्रतिभासनमेवाह ॥ युगपदिति ॥ माहात्म्यानुसारतः योग्यतानुसारतः । निर्णयोपपत्तेरित्यनेन पूर्वपक्षहेतोरसिद्धिरुक्ता भवति । एवं च ब्रह्माद्यधिकारिणां योग्यतारूपमाहात्म्यादुपसंहारयोर्युक्तत्वाद्युक्तं सर्वपरि-ज्ञानमिति भावः । (अयं च न्यायो युगपत्प्रतीत्यादिमाहात्म्यान्निर्णयोपपत्तेरिति वदता 'प्राप्तेः' इत्यनेन सूचितः ।) ॥ ३ ॥



## सर्वभेदाधिकरणम् III-3-4

**न्या.वि. — न च फलानिर्णीतिः । माहात्म्येनैवान्यत्फलं महातामिति निर्णयोपपत्तेः ॥ ४ ॥**

भा.बो.— ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ इत्यत्र कर्तव्याकर्तव्य-क्रियादर्शनाद्बहुगुणोपसंहारः कर्तव्यो न वेति सन्देहे न कर्तव्य इति पूर्वः पक्षः । कर्तव्य इति सिद्धान्तः । तत्र 'अनिर्णीतिः' इत्युक्तमेव पूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च फलेति ॥ सर्वगुणोपसंहार इति शेषः । फलानिर्णीतिः अल्पगुणोपसंहर्तृफलादतिशयितफलस्यानिर्णीतिरित्यर्थः । फलातिशयनिर्णयाभावे सर्वगुणोपसंहारे तेषां प्रेक्षावत्त्वं न स्यादिति भावः । एवं च फलानिर्णीतिरुप-संहारस्याकर्तव्यत्वान्न युक्तं सर्वपरिज्ञानमिति नेति भावः । (अयं च न्यायः अनुपसंहर्तृफलादन्यत्र फले ब्रह्मादय इति फलनिर्णयं कुर्वता अन्यत्रेत्यनेन सूचितो

भवति ।) तद्धेतुत्वेन 'माहात्म्यम्' इत्युक्तमेव सिद्धान्तन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृणोति ॥ माहात्म्येनेति ॥ बहुगुणोपासनालक्षणमाहात्म्येनेत्यर्थः । अन्यत् अनुपसंहर्तृफलात् । महतामिति तादृशगुणोपसंहारयोग्यतारूपमाहात्म्यवतामित्यर्थः । अत्रापि पूर्वपक्षहेतोरसिद्धिरुक्ता वेदितव्या । एवं च माहात्म्येनानुपसंहर्तृफलाद्विलक्षणमेव फलं महतामिति निर्णयोपपत्तेर्युक्त एवोपसंहार इति भावः । (अयं च न्यायो माहात्म्यवत्त्वेन प्रसिद्धा ब्रह्मादय इत्यर्थकेन 'इमे' इत्यनेन सूचितः ।) ॥ ४ ॥

## आनन्दाद्यधिकरणम् III-3-5

**न्या.वि.— आनन्दादीनां केषांचित्सुमुच्चये प्राप्ते सर्वगुणसमुच्चयः सर्वेषां स्यादिति न मन्तव्यम् । अल्पशक्तित्वात्तेषां पुंसाम् ॥ ५ ॥**

भा.बो.— ॐ आनन्दादयः प्रधानस्य ॐ ॥ इत्यत्र विशेषानुक्त्योपास्यतयोक्ताः भगवद्गुणाः किं सर्वमुमुक्षूपास्याः सङ्ख्यानिर्देशाभ्यां पृथक् क्लृप्ताः सन्ति न वेति सन्देहे नेति पूर्वः पक्षः । सन्तीति सिद्धान्तः । तत्र 'समुच्चयः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ आनन्दादीनामिति ॥ न सर्वमुमुक्षूपास्याः गुणाः संख्यानिर्देशाभ्यां क्लृप्ताः सन्ति । यदि सन्ति तर्हि वक्तव्यं, केषां कियतां च समुच्चय इति । तत्रेदमुपतिष्ठते । आनन्दादीनामिति निर्देशक्लृप्तिः । केषाञ्चिचतुःपञ्चषण्णामिति संख्याक्लृप्तिः । सर्वेषां मुमुक्षूणाम् । सर्वगुणसमुच्चयः स्यादिति, न चतुःपञ्चषा एवेति संख्याक्लृप्तिः स्यादिति भावः । उपलक्षणमेतत् । आनन्दादीनामिति निर्देशक्लृप्तिरपि न, नैते, किन्तु अन्य एवेत्यपि वक्तुं शक्यत्वादित्यपि द्रष्टव्यम् । एवं च मुमुक्षुभिर्नियमेनोपास्यगुणानिर्णयान्न कस्याप्युपासनोपपत्तिरिति नेति भावः । (अयं च न्यायश्चतुर्गुणसमुच्चयप्रतिपादकेन 'आनन्दादय' इत्यनेन केषाञ्चित्समुच्चयेऽन्येषां समुच्चयः स्यादिति सूचितः ।)

तद्धेतुत्वेन 'अल्पशक्तित्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अल्पशक्तित्वादिति ॥ तेषां प्रागुक्तसर्वमुमुक्षूणाम् । सन्ति संख्यानिर्देशाभ्यां क्लृप्ताः सर्वमुमुक्षुभिः सर्वथोपास्या आनन्दो, ज्ञानं, सत्, आत्मेति चत्वार एव न त्वधिकाः । न च केषांचित्समुच्चये सर्वगुणसमुच्चयापत्तिः । ब्रह्मादीनां केषांचित्तदधिकगुणोपासनसमर्थत्वेऽपि तेषां पुंसां सर्वमुमुक्षूणामल्पशक्तित्वेन तदधिकगुणोपासनाऽसमर्थत्वात् । न च निर्देशविपर्ययः । आनन्दादीनामेवावश्यं सर्वापेक्षितत्वादपेक्षितफलानुसारेणैवेश्वरस्योपास्यत्वात् 'तं यथा यथोपासते' इति श्रुतेः । एवं च सर्वोपास्यगुणनिर्णयाद्युक्तमुपासनमिति भावः । (अयं च न्यायः 'आनन्दादयः' इत्य(नेन)स्य सावधारणादानन्दादय एव सर्वमुमुक्षूपास्याः । अल्पशक्तित्वेन सर्वेषां तदधिकोपासनस्याशक्यत्वादिति सूचितः । अत एवोक्तं तत्वप्रकाशिकायां 'सर्वमुमुक्षुभिः सर्वथोपास्या गुणाः आनन्दादयश्चत्वारो न त्वधिकाः । सर्वमुमुक्षूणां तदधिकोपासनेऽसमर्थत्वात्' इति ।) ॥ ५ ॥



## प्रियशिरस्त्वाधिकरणम् III-3-6

**न्या.वि.— प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेनैव दर्शनात्तेषामपि सर्वोपसंहार्यत्वमिति न मन्तव्यम् ।**

**यथायोग्यान् गुणपूगानुपास्य फलं भवेन्मुक्तिगं नान्यथा स्यात् ।**
**नित्यैकाग्र्यव्यङ्ग्यताहेतुतश्च साक्षाद्दशिनो तद्विशेषैः स्मृतैश्च ॥**

**इति श्रुतेः स्वयोग्यगुणैरेव (फल)भावात् ॥ ६ ॥**

भा.बो.— ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ इत्यत्र सर्वमुमुक्षूपास्यानुपास्यगुणप्रतीत्या 'तस्य प्रियमेव शिरः' इत्यादौ श्रुताः प्रियशिरस्त्वादिगुणाः किं सर्वमुमुक्षूपास्याः न वेति सन्देहे सर्वोपास्या इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'विशेषदर्शनम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ प्रियशिरस्त्वादीनामिति ॥ दर्शनात्, तस्य प्रियमेव शिरः इत्यादाविति शेषः । प्रथमादिपदेन सार्वज्ञ्यादेः द्वितीयेन ज्ञानादेश्च ग्रहणम् । प्रियशिरस्त्वादीनामपि देवोपास्यत्वस्य सिद्धान्तेऽप्यङ्गीकारात् सर्वेत्युक्तम् । अन्यथा आनन्दादीनां सम्यगनुपासनेन मोक्षाभावप्रसङ्गादिति भावः । अत्र विशेषत्वादित्येव हेतुः । तस्य प्रामाणिकत्वं वक्तुं दर्शनादित्युक्तम् ।

एवं च प्रियशिरस्त्वादीनामानन्दविशेषत्वेन सर्वोपास्यत्वमिति नेति भावः । (अयं च न्यायः प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेऽपि सर्वानुपास्यत्व-प्रतिपादकेन 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्यनेन सूचितः ।) तद्धेतुत्वेन 'यथायोग्यफलम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ यथायोग्यानिति ॥ अत्र प्रियशिरस्त्वादीनां सर्वानुपसंहार्यत्वे 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यादिश्रुतिसिद्धफलभेदसिध्यर्थं गुणोपासनेऽपि तारतम्यापेक्षितत्वादिति हेतुर्बहिरेव द्रष्टव्यः । तत्र प्रियशिरस्त्वाद्यनुपासने मोक्षो न स्यादिति उक्तविपक्ष-बाधकतर्कनिरासार्थमिदमुपतिष्ठते । तथा च प्रियशिरस्त्वादिविशेषा-कारेणानुपासनेऽपि न मोक्षाभावापत्तिः । आनन्दत्वादिसामान्याकारेणोपासितैः स्वयोग्यैरानन्दादिगुणैरेव मोक्षरूपफलसम्भवात् । तथा च विपक्षबाधकाभावेन विशेषत्वमप्रयोजकमिति भावः । यद्वा सर्वेषां प्रियशिरस्त्वाद्युपासने योग्यताभावात् योग्यगुणोपासनेनैवापरोक्षज्ञानद्वारा मुक्तिरूपं फलम्, अन्यथाऽनर्थप्राप्तेरिति न प्रियशिरस्त्वादीनां सर्वोपास्यत्वमिति साक्षादेव हेतुहेतुमद्भावः । अत्र तु पूर्वपक्षहेतोर्बाधितविषयत्वं द्रष्टव्यम् । यथायोग्यानिति श्रुतौ उपास्य, स्थितस्येति शेषः । तेन समानकर्तृत्वोपपत्तिः । मुक्तिगं फलम्-अपरोक्षद्वारेति शेषः । अत्र हेतुमाह ॥ नित्येति ॥ आद्यश्चशब्दो हेत्वर्थे । द्वितीयोऽप्यर्थे । ततश्च यस्मादानन्दादीनां नित्यैकाग्र्ये नियतध्याने युगपद्वचञ्चत्वलक्षणहेतुतस्तद्गुणविशिष्टपरमात्मापरोक्षदृशिर्भवति न त्वयोग्यै-रानन्दादिविशेषैः प्रियशिरस्त्वादिभिः स्मृतैरपि, तस्मादिति पूर्वेण सम्बन्धः । स्मृतैरित्यनेनायोग्यानां ज्ञानमात्रमभिप्रैति । अन्यथा 'सर्ववेदान्तप्रत्ययम्' इत्युक्तिविरोधः । एवं च यथायोग्यचतुर्गुणोपासनेनैव फलसद्भावान्न प्रियशिरस्त्वादि सर्वोपास्यमिति भावः । (अयं च न्यायो महदल्पोपासनया महदल्पं फलं भवतीति वदता उपचयापचयौ हि भेदे' इत्यनेन सूचितः।) ॥६॥

## इतराधिकरणम् III-3-7

न्या.वि.— तर्हि ब्रह्मणोऽन्येषां देवादीनामपि बहुगुणोपासनया कार्यं नास्ति । मध्ये नियमात्सिद्धेरिति न



मन्तव्यम् । तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपदेशोपपत्तेः ।

**यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सुगुणानीशितुश्च ।**
**ब्रह्मा दिशत्यथ ताँस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्या ॥**
**इति श्रुतेः ॥ ७ ॥**

भा.बो.— ॐ इतरे त्वर्थसामान्यात् ॐ ॥ इत्यत्र फलाधिक्यविशेषहेत्व-दर्शनाभ्यां भगवद्गुणे चतुर्गुणातिरिक्ता गुणा देवादिभिरुपास्याः न वेति सन्देहे चत्वार एव विरिञ्चेतरदेवादिभिरुपास्याः न त्वधिका इति पूर्वः पक्षः । चतुर्भ्यः सर्वेभ्यश्चेतरे मध्यमगुणा देवादिभिरुपास्या इति सिद्धान्तः । तत्र 'कार्यलोपः' इत्युक्तन्यायं विवृण्वन् प्रतिक्षिपति ॥ तर्हीति ॥ यद्येवं स्वयोग्यगुणैरेव फलसद्भावोऽङ्गीक्रियते तर्हीत्यर्थः । बहुगुणोपासनया कार्यं नास्ति-फलं नास्ति, बहुगुणोपासना न कार्या स्यादिति शेषः । कुत इत्यत आह ॥ मध्य इति ॥ सर्वचतुर्गुणापेक्षया मध्यमगुणेष्वित्यर्थः । इदमुक्तं भवति । न देवादिभिर्बहुगुणोपासना कार्या । योग्यतानिर्णयाभावेन फलाभावात् । योग्या एव खलु गुणा उपास्याः । अन्यथाऽनर्थप्राप्तेः । तत्र चतुर्मुखस्यास्तु सर्वगुणोपसंहारः तस्य तद्योग्यतया 'युगपद्ब्रह्मणः सर्वे प्रतिभास्यन्त्युपासने' इत्युक्तत्वेन निर्णीतत्वात् । तथा मनुष्योत्तमानामप्यस्तु चतुर्गुणोपसंहारः । तेषां तद्योग्यतयापि निर्णीतत्वात् । तथोक्तं, 'सच्चिदानन्द आत्मेति मानुषैः' इति । मध्यमवर्तिदेवादीनां कथं बहुगुणोपसंहारः स्यात् । तद्योग्यतानिर्णायक-प्रामाणाभावात् । न च 'यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने' इत्युक्तत्वेनोपासानाभ्यासे यस्य यावद्गुणप्रतीतिः तस्य तावती योग्यतेति निर्णयः । प्राक् योग्यताज्ञानेऽयोग्योपासना- प्रयत्नप्रसङ्गेनानर्थप्राप्तेरिति । एवं च योग्यतानिर्णयाभावेन बहुगुणोपासनासम्भवात् सर्वेषां चतुर्गुणोपासनायोग्यताया एव निर्णीतत्वाच्च देवादिभिः बहुगुणोपसंहारो न कर्तव्यः किं तु चतुर्गुणोपास्तिरेवेति नेति भावः । (अयं च न्यायः सिद्धान्ते फलसद्भावं वदता 'अर्थसामान्यात्' इत्यनेन सूचितः।) तद्धेतुत्वेन, 'भवः' इत्युक्तसिद्धान्तन्यायं

विवृणोति ॥ तेषामिति ॥ तदभिज्ञस्य भाव्युत्कर्षसाधकोपासनाविषयगुण-नियमाभिज्ञस्य । ब्रह्मण इत्युपलक्षणम् । 'तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गत' इति प्रमाणानुसारेणान्यस्य, सर्वज्ञस्य वा गुरोरित्यपि ग्राह्यम् । न चावधारणविरोधः । तस्योपदेष्टृदौर्लभ्यमात्रनिवारकत्वेनान्ययोगव्यवच्छेदकत्वा-भावात् । तथा च यदुक्तं 'मध्ये नियमात्सिद्धेः'इति तन्न । तत्तत्प्राप्यफलापेक्षया योग्यतानिर्णयोपपत्तेः । न च भाविफलानिर्णयेन पुनर्योग्यतानिर्णय इति वाच्यम् । सर्वज्ञगुरूपदेशेन तन्निर्णयोपपत्तेरिति भावः । अत्र प्रमाणमाह ॥ य इति ॥ भाव उत्कर्षः । सुगुणान्– पूर्णत्वाविरोधिनः । आत्मशक्त्या विचिन्त्येत्यन्वयः । एवं च योग्यतानिर्णयान्मध्यमगुणा देवादिभिरुपास्या इति भावः । (अयं च न्यायोऽर्थसामान्यादित्यनेनोक्तः ।) ॥ ७ ॥

## आध्यानाधिकरणम् III-3-8

**न्या.वि.— न च नानास्थानेपूक्तगुणानामनुपासनार्थत्वम् । विप्रकीर्णान् गुणान् पिण्डीकृत्योपासितुस्तत्सदृशफलप्राप्तेस्तथा ध्यानार्थमेव गुणानां मुक्तिरित्युपपत्तेः ॥ ८ ॥**

भा.बो.— ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ इत्यत्र कर्तव्याकर्तव्यक्रियादर्शनात्प्रागुक्तगुणोपसंहारानुपसंहारौ कर्तव्यौ न वेति सन्देहे न कर्तव्याविति पूर्वः पक्षः । कर्तव्याविति सिद्धान्तः । तत्र सर्वगुणोपसंहारस्या-कर्तव्यत्वेन नानोक्तिरित्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च नानेति । नानास्थानेपूक्तेति हेत्वर्थगर्भं विशेषणम् । नोपसंहारः कर्तव्यः । प्रमाणाभावात् । न च 'संज्ञातश्चेत्तदुक्तमस्ति तु तदपि' इति सर्वविद्यानां भगवन्नामत्वस्योपसंहारे प्रमाणत्वेनोक्तत्वात्कथं प्रमाणाभाव इति वाच्यम् । गुणानां स्थानेपूक्तत्वेन तदभिधानस्योपसंहारार्थत्वाभावात् । उपसंहारार्थत्वे च सर्वेऽप्येकत्रोच्येरन् । किं च सर्वगुणोपसंहाराभावेऽपि 'आनन्दादयः प्रधानस्य' इत्युक्तन्यायेन मोक्षसम्भवात् । फलान्तरस्य च मुमुक्षोरनपेक्षितत्वात् न कर्तव्य एव सर्वगुणोपसंहारः वैफल्यात् । एतेन 'विधिशेषवत्' इत्युक्तविहितत्वमपि परास्तम् । व्यर्थविधेरनवधेयत्वादिति । एवं च एवं च



नानास्थानेपूक्तत्वेनोपसंहारानुपसंहारयोरयोगान्नोपासनं युक्तमिति नेति भावः । (पाठान्तरम्) अगुणाभिधास्योपसंहारार्थत्वाभावात्प्रमाणाभावेन च न सर्वगुणोपसंहारः कर्तव्य इति नेति भावः । (अयं च न्यायः 'आध्यानाय' इत्यनेन विप्रकीर्णगुणाध्ययनस्य सदृशफलसद्भावात्तत्तद्गुणोक्तिरिति नानोक्तेर्गतिं वदता सूचितः।) तद्धेतुत्वेन 'फलसाम्यम्' इत्युक्तसिद्धान्तन्यायं तत्साध्यप्रदर्शन-पूर्वकं विवृणोति ॥ विप्रकीर्णानिति ॥ नानास्थानेपूक्तगुणानित्यर्थः । पिण्डीकृत्य एकज्ञानविषयीकृत्य । तत्सदृशफलप्राप्तेः तदनुसारिमुक्त्यानन्दातिशयलक्षणफल-प्राप्तेरित्यर्थः । तथा ध्यानार्थमेवपिण्डीकृत्योपासनार्थमेव । गुणानां नानास्थानेपूक्तिरित्यनेन प्रकारेणोपपत्तिः । नानास्थानेपूक्तगुणानामुक्तेरित्यर्थः । विप्रकीर्णगुणोपसंहर्तुः फलविशेषसद्भावात्तस्य दौर्लभ्याय नानास्थानेपूक्तिरिति भावः । एवं च नानास्थानेपूक्तेरन्यथासिद्धेर्विफलत्वस्यासिद्धेश्च द्विविधाया अपि शङ्काया निरासादुक्तं प्रमाणद्वयमपि समर्थितं भवतीति प्रामाणिकत्वात्कर्तव्य एवोपसंहार इति स्थितम् । (अयं च न्यायः आध्यानायेत्यनेन सूचितः । एकस्थानोक्तगुणध्यानेन मोक्षगतफलविशेषस्य साम्याभावात् ।) ॥ ८ ॥

## आत्मगृहीत्यधिकरणम् III-3-9

**न्या.वि.— न चाश्रापरोक्ष्यायानन्दादीनामपि लोपेनात्मेत्ये-तावता पूर्यते । आत्मशब्दार्थविशेषत्वादानन्दादीनाम् ॥ ९ ॥**

भा.बो.— ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ इत्यत्र 'आनन्दादयः प्रधानस्य' इति 'आत्मशब्दाच्च' इत्युभयथोक्त्या किमानन्दादयश्चत्वारोऽपि सर्वमुमुक्षूपास्याः उतात्मत्वमेवेति सन्देहे आत्मत्वमेव सर्वमुमुक्षूपास्यमिति पूर्वः पक्षः । चत्वारोऽप्युपास्या एवेति सिद्धान्तः । अत्र 'आशुता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाश्रिति ॥ आश्वापरोक्ष्यायेत्यनेनानुव्याख्यानेऽपरोक्षज्ञानस्येति सम्बन्धः प्रदर्शितो भवति । आनन्दादीनामित्यादिपदेन सत्वज्ञानयोर्ग्रहणम् । आत्मेत्येतावता पूर्यते– आत्मेत्येवोपासीतेति सावधारणश्रुतेरिति भावः । एवं चानन्दादीनां लोपेनात्मत्वस्यैवोपासनेऽपरोक्षज्ञानस्याऽशुतया आनन्दादयः प्रधानस्येत्युक्तबाध

इति नेति भावः । (अयं च न्यायः आनन्दादिगुणोपासनाविधायकश्रुत्यादेः आत्मैवेति श्रुतिविरोधं परिहरता 'आत्मगृहीतिः' इत्यनेनानन्दादिलोपेनात्मत्व-मात्रोपासनविधायकस्यात्मेति वाक्यस्य आश्वपरोक्षसिद्ध्यादियुक्तियुक्तत्वेन पूर्वपक्षप्राबल्यसूचनेन सूचितः।)

तद्धेतुत्वेन 'विशेषः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ आत्मशब्दार्थेति ॥ आत्मशब्दार्थः आत्मत्वम् । आनन्दादीनामात्मत्वे विशेषत्वं नाम तत्प्रभेदत्वमिति ज्ञातव्यम् । नायं श्रौत आत्मशब्दः स्वामित्वमात्रवाचकः । येन तस्य सावधारणत्वेनानन्दादित्रयलोपेनात्मत्वमेवोपास्यं स्यात् । किं त्वानन्दादीनामपि वाचकः । तेषामात्मत्वविशेषत्वात् । तथा च स्मृतिः । 'आनन्दानुभवत्वाच्च भण्यते । नित्यत्वाच्च तथाऽऽत्मेति' इति । न चाश्वापरोक्ष्यसिद्धिगुणलोभेन तल्लोपः कार्य इति वाच्यम् । तथात्वे तेषां सम्पूर्णमोक्षाभावापत्तेः । 'नोत्क्रामन्ति कदाचन' इति स्मृतेः । एवं चानन्दादीनामात्मशब्दार्थविशेषत्वात् आत्मेत्येवेत्यवधारणेऽपि नानन्दादि-चतुर्गुणोपासनानियमभङ्ग इति भावः । (अयं च न्याय आत्मगृहीति-रित्यनेनोक्तः।) ॥ ९ ॥

## अन्वयाधिकरणम् III-3-10

**न्या.वि.— न चात्मशब्दो विभ्रमकरः । गुणाधि-कानामधिकारिणां भगवद्गुणानधिकान् प्रकाशयतीत्यवधारण-त्वोपपत्तेः ॥ १० ॥**

भा.बो.— ॐ अन्वयादिति चेत् स्यादवधारणात् ॐ ॥ इत्यत्र उपास्यानुपास्यगुणदर्शनादात्मशब्दोक्ता गुणाः सर्वोपास्या न वेति सन्देहे न सर्वोपास्या इति पूर्वः पक्षः । सर्वोपास्या इति सिद्धान्तः । तत्र 'विभ्रमः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चात्मशब्द इति ॥ अयं भावः । आनन्दादीनां त्रयाणां गुणानामात्मत्वेऽन्तर्भावादात्मशब्दोक्ता एव गुणाः सर्वोपास्या इति यदुक्तम् तन्न । आनन्दादीनामिव तदन्येषामपि गुणानां



'आत्मव्याप्तेरात्मशब्दः परमस्य प्रयुज्यते' इति वचनादात्मत्वेऽन्तर्भावात् । यथा चात्मशब्दः श्रुतचतुर्गुणोपासनस्य पुंसो विभ्रमकर एव भवति न त्वेवमुपासनं कार्यमिति निश्चायकः । न चात्मशब्दस्य सर्वगुणाभिधायकत्वेऽपि तदुक्तं स्वयोग्यमेवोपास्यमिति वाच्यम् । तथात्वे आत्मेत्येवेत्ययोग- व्यवच्छेद-परावधारणविरोधापत्तेरिति । एवं चात्मशब्देनैतावन्तो गुणाः प्रतिपाद्यन्त इति निर्णयाभावेन विभ्रमकरत्वान्नात्मशब्दोक्ताः गुणाः सर्वोपास्या इति नेति भावः । (अयं च न्यायः आत्मशब्देन सर्वगुणान्तर्भावं वदता 'अन्वयादिति चेत्' इत्यनेन सूचितः) ।

तद्धेतुत्वेन 'गुणाधिक्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ गुणाधिकानामिति ॥ अधिका गुणा उपास्या येषां ते तथोक्ताः । अधिकगुणोपासकानामिति यावत् । गुणैरधिकानामिति वा तात्पर्यं पूर्ववत् । अधिकारिणां ब्रह्मादीनाम् । अनेन 'गुणाधिक्यम्' इत्यनुव्याख्याने अधिकारिणामिति सम्बन्धः प्रदर्शितः । अन्येषामल्पानेव प्रकाशयतीत्यर्थः । इदमुक्तं भवति । यदुक्तमात्मशब्दः सर्वगुणाभिधायकः तत्तथा स्यादेव । किं तु बहुगुणोपासकब्रह्मादीन् प्रत्येव सर्वगुणाभिधायको न सर्वान् प्रति । तथाऽनुभवात् । 'सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न वा' इति श्रुतेश्च । एवं च सति आत्मेत्येवेत्ययोगव्यवच्छेदपरमवधारणमप्युपपद्यते । आत्मशब्दस्य सर्वान्प्रति सर्वगुणाभिधायकत्वमङ्गीकृत्य , तदुक्तं, स्वयोग्यमेवोपास्यमित्यङ्गीकारे हि तद्विरोधः स्यान्न चैवमिति । एवं च चतुर्मुखाद्यधिकारिणां गुणाधिक्याद्युक्तं तदुपास्यगुणाभिधायकत्वमात्मशब्दस्येति । (अयं च न्यायः अयोगव्यवच्छेद-परावधारणादित्यनेन सूचितः।) ॥ १० ॥

## कार्याधिकरणम् III-3-11

**न्या.वि.— अलौकिकगुणानामप्रतीतेर्लौकिकगुणाध्याने तदपाकृतिरेव भवतीति न मन्तव्यम् । लौकिकविलक्षणा अत्युत्तमा इति ध्यानस्यैव प्राधान्यात् ॥ ११ ॥**

भा.बो.— ॐ कार्याख्यानादपूर्वं ॐ ॥ इत्यत्र ध्येयभगवद्गुणानामलौकिकत्वोक्त्या लोकदृष्ट्या च किं भगवद्गुणाः लौकिका उतालौकिका इति सन्देहे लौकिका एव ध्येया इति पूर्वः पक्षः । अलौकिका एवेति सिद्धान्तः । तत्र 'अप्राकृतिः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ अलौकिकेति ॥ अप्रतीतेः- अलौकिकगुणानां पूर्वमननुभवेन ध्यानकाले स्मृतिरूपप्रतीत्यभावात् तदप्राकृतिः- ध्यानाभाव इत्यर्थः । भवति स्यादित्यर्थः । ध्यानं चावश्यकम् । अतो लौकिका एव ध्येया इति नेति भावः । (अयं च न्यायः 'अपूर्वम्' इत्यनेनऽ(सिद्धान्ते)लौकिकगुणध्यानोक्त्या पूर्वपक्षे लौकिकगुणध्यानसूचनेन सूचितः।) तद्धेतुत्वेन 'प्रधानता' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ लौकिकविलक्षणा इति ॥ वैलक्षण्यमेवाह ॥ अत्युत्तमा इति ॥ प्राधान्यात् अलौकिकमोक्षरूपकार्यजनकत्वेनेत्यर्थः । तथा चोपासनस्य स्वानुसारिफलप्रदत्वनियमेनालौकिकमोक्षार्थमलौकिका एव ते ध्येयाः । न चाप्रतीतिदोषः । इन्द्रादाविवोपदेशेन प्रतीत्युपपत्तेरिति भावः । ततश्च पूर्वपक्षहेतोरसिद्धिरित्यवधेयम् । एवं चालौकिकगुणध्यानस्य प्रधानतयाऽलौकिका एव ध्येया इति भावः। (अयं च न्यायः समस्तसूत्रेण सूचितः।) ॥ ११ ॥

## समानाधिकरणम् III-3-12

न्या.वि.— ब्रह्मणश्च ब्रह्माण्याश्च स्थानैक्यं गुणतारतम्यं च यथा गुणोपासनं मुक्तावाधिक्यं न भवतीत्यत्र लिङ्गम् । समविषमोपासनायुक्तेरिति न मन्तव्यम् ।

यथाशक्ति स्मृतान् धात्रा गुणान्विष्णोः सरस्वती ।
स्मरेत् त्रैविक्रमाद्याँस्तु नित्यविक्रान्तिपूर्वकैः ।
कदाचिल्लोपयेद्देवी स्थानैक्यं न गुणैस्ततः ।
साम्यं तयोर्यथा विष्णोर्गुणोपासा फलं भवेत् ॥

इत्यध्यात्मवचनाद्यथाशक्तिक्रिया देव्याः ॥ १२ ॥



भा.बो.— ॐ समान एवं चाऽभेदात् ॐ ॥ इत्यत्र कृष्यादिक्रियासु स्वानुसारिफलप्रदत्वतदभावदर्शनात् भगवद्गुणोपासनं किं स्वानुसारिफलप्रदं न वेति सन्देहे नेति पूर्वः पक्षः । स्वानुसारिफलप्रदमिति सिद्धान्तः । तत्र 'लिङ्गम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ ब्रह्मण इति ॥ स्थानैक्यमुभयोरपि । सायुज्यभाक्त्वादिति भावः । गुणैः- आनन्दादिभिः तारतम्यं च लिङ्गमित्यन्वयः । यथा गुणोपासनं क्रियते तथा मुक्तावाधिक्यं न भवतीत्यत्र ब्रह्माणीब्रह्मणोरुपासनस्य तदभावात् । तयोरुपासनं किं समं विषमं वा स्यात् । न हि फलं तादृशम् । स्थानैक्यस्य गुणतारतम्यस्य (च)सद्भावेन फलस्य समविषमत्वादित्यर्थः । ननु फलवदुपासनमपि समविषममेव किं न स्यादित्यत आह ॥ समविषमेति ॥ गुणक्रिययोः साम्ये वैषम्यायोगेन वैषम्ये च साम्यायोगेन तयोर्विरोधादिति भावः । एवं च ब्रह्माणीब्रह्मणोः स्थानैक्यगुणतारतम्यरूपलिङ्गादन्येषामपि न यथोपासनं मुक्तौ फलमिति नेति भावः । (अयं च न्यायः स्थानैक्यस्य गुणतारतम्यस्य च क्रियासङ्कोचद्वारा समविषमोपासनसाध्यत्वं वदता 'समान एवं चाभेदात्' इत्यनेन सूत्रेण सूचितः।)

तद्धेतुत्वेन 'यथाशक्तिक्रिया' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यथाशक्तीति ॥ यतो देवी सरस्वती, धात्रा स्मृतान् ध्यातान् विष्णोः गुणान् , नित्यविक्रान्तिपूर्वकैः सामान्यक्रियाभिः सह , यथाशक्ति स्मरेत् । त्रैविक्रमाद्यान् क्रियाविशेषाँस्तु त्रैविक्रमत्वाद्यशेषाकारेण कदाचिल्लोपयेत् न स्मरेत् । ततश्च तयोः- धातृसरस्वत्योः स्थानैक्यं गुणैर्न साम्यं यतोऽतो यथाशक्ति विष्णोर्गुणोपासा-धर्मोपासा तथा फलं भवेदिति योजना । यथाशक्ति क्रिया देव्या इत्यनेनोदाहृतवचनगतयथाशक्तीत्यस्य नित्यविक्रान्तिपूर्वकैरित्यनेन सूचितो भवति । देव्या क्रिया यथाशक्ति उपास्या । सामान्यक्रियोपसंहार एव कर्तव्यो न त्रिविक्रमत्वादिविशेषक्रियोपसंहारः । सर्वगुणोपसंहारस्तूभयोः सिद्ध एव । अतो भिन्नविषयत्वेन समविषमोपासनस्य विरोधाभावेन युक्तत्वाल्लिङ्गपदोक्तपूर्वपक्षहेतोरन्यथासिद्धत्वेन युक्तमेव यथागुणोपासनं मुक्तावाधिक्यं भवतीत्येतदिति भावः। (अयं च न्यायः 'समान एवं च' इत्यनेन सूचितो भवति ।) ॥ १२ ॥

## न वाऽधिकरणम् III-3-13

न्या.वि. — न चात्मशब्देनास्य पुरुषस्यैतावन्तो गुणा उच्यन्त इति व्यवस्थित्यभावः । यस्य यावन्तोऽर्था युगपद्ध्यातुं शक्यन्ते तस्य तावन्त इति सन्धेः ॥ १३ ॥

भा.बो.— ॐ न वा विशेषात् ॐ ॥ इत्यत्र सर्वोपास्यानुपास्यगुणदर्शनादात्मशब्दोक्तगुणाः सर्वोपास्या न वेति सन्देहे न सर्वोपास्या इति पूर्वः पक्षः । सर्वोपास्या इति सिद्धान्तः । तत्र 'अनवस्था' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चात्मशब्देनेति ॥ नात्मशब्दोक्तगुणाः सर्वोपास्याः आत्मशब्दस्य सर्वगुणाभिधायकत्वात् । सर्वगुणोपासने च सर्वेषां योग्यताभावात् । ननु 'अन्वयादिति चेत् स्यादवधारणात्' इत्यत्रात्मशब्द उत्तमाधिकारिणः प्रत्येव सर्वगुणाभिधायक इति निर्णीतत्वात्कथं पूर्वपक्षोत्थानमित्यत उक्तं ॥ अस्येत्यादि ॥ यद्यप्युक्तमात्मशब्द उत्तमाधिकारिणः प्रत्येव सर्वगुणाभिधायको न सर्वान् प्रतीति तथाप्यस्य पुरुषस्यैतावन्तो गुणाः आत्मशब्देनोच्यन्त इति प्रातिस्विकनियमनरूपव्यवस्थितिर्नास्तीत्युत्पत्तिवैशद्यावैशद्यानुसारेण बह्वल्पगुणाभिधायकत्वसम्भवादित्यर्थः । एवं च व्यवस्थित्यभावादात्मशब्दोक्तगुणानां सर्वोपास्यत्वाभाव इति नेति भावः । (अयं च न्यायो 'न वा' इत्यनेन सर्वगुणगृहीतिनिषेधाङ्गीकारसूचनेन सूचितः।) तद्धेतुत्वेन, 'सन्धिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ यस्य यावन्त इति ॥ अर्थाः गुणाः । ध्यातुं शक्यन्ते ध्यानकाले प्रतीयन्त इत्यर्थः । तावन्तो ध्यातव्याः । सन्धेः- अभिसन्धेः । एवं चात्मशब्देन गुणप्रतीतेरेवमेव विवक्षितत्वादयोग्यप्रतीतेश्चोपासनानुपयोगित्वादुक्तं युक्तमिति भावः । (अयं च न्यायो यस्य यावन्तो गुणा युगपत्प्रतीयन्त इत्येवंरूपाद्विशेषात्तस्य तावतो गुणान्प्रतिपादयतीति इदमेवात्मशब्देन गुणाभिधानमभिसंहितमिति वदता 'विशेषात्' इत्यनेन सूचितः।)

॥ १३ ॥



## संभृत्यधिकरणम् III-3-14

न्या.वि.— न च मुमुक्षव इव इत्यविशेषाद्भरणस्य द्युतेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती अपि सामान्ये ।

सत्यो ज्ञानं परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।
नान्यत्किंचित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते ॥
गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते ।
न व्याप्तिर्जगदस्मृत्या नानाशक्तिर्यतो मता ॥
देवानां युगपज्ज्ञानं मनुष्याणां तथा न तु ।
पर्यायेणैव सत्याः स्युर्नैवान्येषां कथंचन ॥
इत्यादिप्रमाणबलात् ॥ १४ ॥

भा.बो.— ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ इत्यत्र पूर्वोक्तसन्देहबीजात् 'उक्षा स द्यावापृथिवी बिभर्ति, एष हि सर्वेषु लोकेषु भाति' इत्यादौ प्रतीतभगवद्गुणान्तर्गतसम्भृतिद्युव्याप्ती किं सर्वमुमुक्षूपास्ये न वेति सन्देहे सर्वमुमुक्षूपास्ये इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'अविशेषता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन्प्रतिक्षिपति ॥ न च मुमुक्षव इति ॥ मुमुक्षव इव इत्यविशेषात् मुमुक्षुत्वाविशेषात् । मुमुक्षुत्वसाम्यादिति यावत् । ननु सम्भृत्याद्युपासनेऽप्यानन्दाद्युपासनमात्रेणैवापेक्षितमोक्षसम्भवान्न मुमुक्षुत्वोपपत्तिरित्यत उक्तम् ॥ भरणस्येति ॥ मोक्ष इति शेषः। भरणस्य स्वाधमभरणस्येत्यर्थः । फलस्योपासनानुसारित्वनियमादिति भावः । अनेन भरणद्युत्यपेक्षावन्त इत्यविशेषादित्यविशे(ष)षितेति प्रकारान्तरेण विवृतमिति ज्ञातव्यम् । एवं च मुमुक्षु(त्व)फलापेक्षितत्वयोरविशेषात्सम्भृतिद्युव्याप्ती अपि सर्वोपास्ये इति नेति भावः । (अयं च न्यायः अत एव योग्यताविशेषादेव उपासनानियमेन मुमुक्षुत्वाविशेषादिति वदता अवधारणार्थकचशब्दसहितेन अत इत्येतेन सूचितः।) तद्धेतुत्वेन 'प्रमाणबलम्' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ सत्यो ज्ञानमिति ॥ अन्यत्- सम्भृत्यादि । तर्हि उक्षा स द्यावेत्यादेर्वैयर्थ्यमित्यत उक्तम् ॥ सर्वैरिति । बहुभिरित्यर्थः ।

तर्हि अपेक्षितभरणद्युत्यप्राप्तिर्मुक्तानामित्यत आह ॥ गुण्याकारस्मृतेरिति ॥ मात्रपदव्यावर्त्यमाह ॥ न व्याप्तिरिति ॥ प्रतीयत इति सम्बन्धः । तत्र हेतुमाह ॥ जगदस्मृत्येति । जगत एव द्युव्याप्तिकर्मत्वादिति भावः । जगत्स्मृत्यभावोऽपि कुत इत्यत आह ॥ नानाशक्तिरिति ॥ तदेव विवृणोति ॥ देवानामिति ॥ ज्ञानसम्भृत्यादीनाम् । तथा युगपत् , किं तु पर्यायेणक्रमेणैव । सत्याः प्रमिताः । युगपत्प्रतीतस्यैव ध्येयत्वात् । अन्येषाम् अधिकारिणाम् । अत्र योग्यतैव उपास्तिनियमप्रयोजिका न फलापेक्षेत्यविशेषि(ष)तेति पूर्वपक्षहेतोरप्रयोजकत्व-मुदाहृत(हरण)प्रमाणबाधितत्वं चाभिप्रेतमिति ज्ञातव्यम् । एवं च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिप्रमाणबलात्सम्भृतिद्युव्याप्ती न सर्वोपास्ये इति नोक्तनियमभङ्ग इति भावः । (अयं च न्यायो भाष्यन्यायविवरणोदाहृत-प्रमाणबलावगतयोग्यताविशेषादित्यर्थकेन 'अतः' इत्यनेन सूचितः।) ॥१४॥

## पुरुषविद्याधिकरणम् III-3-15

**न्या.वि.— क्वचिद्बहुगुणाः क्वचिदल्पगुणाः श्रुतिष्वेवोच्यन्त इत्युपसंहारस्याप्रयोजनतेति न वाच्यम् । 'गुणाः सर्वे ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः'इत्यादिश्रुतेः । सर्वगुणोपासकस्याप्यधिकारिणोऽभावादेकत्रापृथक्सर्वगुणानुक्तेश्च बलादुपसंहारानतेः ॥ १५ ॥ (१६.वेधाद्यधिकरणं च)**

भा.बो.— ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ इत्यत्र कर्तव्याकर्तव्यक्रियादर्शनात्सार्वत्रिकगुणोपसंहारः कर्तव्यो न वेति सन्देहे न सर्वतो गुणोपसंहारः कर्तव्य इति पूर्वः पक्षः । कर्तव्य इति सिद्धान्तः । तत्र 'अप्रयोजनता' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ क्वचिदिति ॥ क्वचित् विद्यायाम् । श्रुतिष्वेवेत्यनेन सम्बन्धः । अप्रयोजनतेत्यनन्तरं न सर्वतो गुणोपसंहारः कार्य इति शेषः । ननु स्वयोग्यगुणोपासनाय सर्वत उपसंहारस्य कर्तव्यत्वात् कथमप्रयोजनत्वमित्यत उक्तं ॥ क्वचिदिति ॥ तथा च ये बहुगुणोपास्तियोग्याः तेषां बहुगुणाभिधायकैकविद्यया, ये चाल्पगुणोपास्ति-योग्यास्तेषामल्पगुणाभिधायकैकविद्ययोपास्तिसम्भवात् सार्वत्रिकगुणोप-



संहारमन्तरेणापि स्वयोग्यगुणोपासनं सम्भवतीति भावः । एवं चोपसंहारस्याप्रयोजनतया न सर्वपरिज्ञानोपयोग इति नेत्याशयः । (अयं च न्यायः सर्वगुणप्रतिपादकविद्यां निषेधता सूत्रेण सर्वगुणप्रतिपादकविद्या पूर्वपक्षिणोऽभिमतेति सूचनेनैतद्विद्यापरिज्ञानेनैव सर्वगुणोपासनोपपत्तौ तत्र तत्रोक्तगुणोपसंहारस्याऽप्रयोजनतेति सूचितः।)

तद्धेतुत्वेन 'आनतिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ गुणा इति ॥ अवधारणव्यावर्त्यप्रदर्शनार्थं नान्यैरिति श्रुतिशेषोदाहरणम् । ननूक्तसर्वगुणोपासकस्यापि सर्वगुणाभिधायकैकैकविद्याभिरेवोपास्तिः सम्भवतीति तत्राह– एकत्रेति । ननु तर्ह्येकस्यामेव विद्यायां सर्वगुणानुक्तेरस्तु चतुर्मुखस्य सर्वगुणोपसंहारः । अन्येषां महदल्पगुणाभिधायकै(कै)कविद्याभिरेवोपास्ति-सम्भवात्सर्वत उपसंहारो व्यर्थ इत्यत उक्तम्– अपृथगिति । संख्यासाम्य-सम्भवेऽप्यपृथक्– एकस्यामेव विद्यायां सर्वगुणानुक्तिरित्युभयान्यथानुपपत्ति-रूपाद्बलादित्यर्थः । सर्वत उपसंहारस्य अनतेः प्राप्तेः । एवं चान्यथानुपपत्त्या सर्वगुणोपसंहारस्यानतेस्तदर्थं सर्वगुणोपसंहारज्ञानोपयोग इति भावः । (अयं च न्याय एतेनैव सूत्रेण सूचितः।) ॥ १५ ॥

भा.बो.— ॐ वेधाद्यर्थभेदात् ॐ ॥ इत्यत्र उपास्यानुपास्यभगवद्गुणदर्शनात् 'अग्ने त्वचं यातुधानस्य भिन्धि, 'तं प्रत्यञ्चमर्चिषाऽऽविद्ध्यमर्मन्, 'परा शृणु हि तपसा यातुधानान्' इत्यादौ श्रुता वेधादयो भगवद्गुणाः सर्वोपास्या न वेति सन्देहे सर्वोपास्या इति पूर्वः पक्षः । नेति सिद्धान्तः । एतदधिकरणसम्बन्धित्वेन पृथक्पूर्वपक्षसिद्धान्तन्यायविवरणमेतदधिकरणस्य सम्भृतीत्यधिकरणसमानयोग-क्षेमत्वात्तत्सम्बन्धितया विवृतयोरविशेषिताप्रमाणबलरूपपूर्वपक्षसिद्धान्तन्याय-योरेतदधिकरण सम्बन्धोऽपि ज्ञातुं शक्यत इत्यभिप्रेत्येत्यवधेयम् । एवं च तत्र पूर्वपक्षन्यायविवरणे द्युतेश्चेति चशब्दो न केवलं समुच्चयार्थः किं तु अनुक्तवेधादिसमुच्चयार्थश्चेति । सम्भृतिद्युव्याप्तिशब्दौ वेधाद्युप-लक्षकाविति व्याख्येयम् ।

एवं च फलापेक्षितत्वाविशेषाद्वेधादिसर्वोपास्यमिति पूर्वपक्षफलम् । अत एवोक्तं तत्वप्रकाशिकायां 'तस्य च सर्वसज्जनापेक्षितत्वात्' इति । (अत्र 'वेधादि' इत्यनेन वेधादि सर्वोपास्यमिति पूर्वपक्षसूचनात् दुष्टनिग्रहस्य सर्वसज्जनापेक्षितत्वविलक्षणाविशेषिता पूर्वपक्षन्यायः सूचितः।) सिद्धान्ते तु 'भिन्धि विद्धि शृणु हि' इति भाष्योदाहृतप्रमाणसङ्ग्रहायेत्यादिप्रमाणबलादिति आदिपदप्रयोगः । एवं च प्रमाणबलाद्वेधादि न सर्वोपास्यमिति सिद्धान्तफलम्। (अत्र 'अर्थभेदात्' इत्यनेन भाष्योदाहृतप्रमाणबलेन वेधाद्युपासनाजनितफलस्य यत्याद्ययोग्यत्वाद्वेधादि न सर्वोपास्यमिति प्रमाणबलरूपः सिद्धान्तन्यायः सूचितः । यद्वा वेधादीत्यनेन वेधाद्युपासनानिषेधं कुर्वता वेधादिकं सर्वापेक्षितत्वाद्विहितत्वादुपास्यम् । सर्वापेक्षितस्याप्यनुपासने तथाभूतानन्दादयो नोपास्या इत्यतिप्रसङ्गः पूर्वपक्षन्यायः सूचितः । अत एवोक्तं तत्वप्रकाशिकायां श्रुतिस्मृत्योर्विधानाच्चेति । अर्थभेदादित्यनेन फलवैलक्षण्यात्कारणात् वेधादि नोपास्यमिति फलवैलक्षण्यलक्षणं कारणं सिद्धान्तन्यायः सूचितः।) ॥ १६ ॥

## हान्यधिकरणम् III-3-17

**न्या.वि.— न च मुक्तावुपासनाभावे फलादिकमपि स्यादित्यतिप्रसङ्गः । उपासनायाः संस्काराख्यकारणस्य सत्वात्। 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' इत्यवृद्धिप्रमाणभावाच्च ॥ १७ ॥**

भा.बो.— ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ इत्यत्र प्राप्तफलत्वक्रियान्तरश्रुतिभ्यां भगवदुपासना मुक्तेन क्रियते न वेति सन्देहे नेति पूर्वः पक्षः । क्रियत इति सिद्धान्तः । तत्र 'अतिप्रसङ्गः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च मुक्ताविति ॥ आदिपदेनापूर्णतादिग्रहणम् । किं मुक्तेनोपासना विहिता वा क्रियते उताविहिता वा । नोभावपि विकल्पौ । फलप्राप्तिप्रसङ्गात् । तथा चापूर्णताप्राप्तेः । किं चाद्ये विधिबद्धत्वेन मुक्तेः संसारसमानधर्मत्वप्राप्तेः । द्वितीये अविहितत्वादेव करणानुपपत्तिः । एवं चातिप्रसङ्गान्न मुक्तावुपासनं कार्यमिति नेति भावः ।



(अयं च न्यायः 'साम्पराये तर्तव्याभावात्तथा ह्यन्ये' इत्येनन सूचितः । विधिबन्धवत्त्वाभावेऽपि फलार्थमुपासनं स्यादिति शङ्कापरिहारकेणोपासनासद्भावे फलं स्यादिति सूचितः।) तद्धेतुत्वेन 'कारणम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ उपासनाया इति ॥ तथा चाविहितैव मुक्तेनोपासना क्रियते । न चैवं करणानुपपत्तिः । प्राक्कृतोपासनसंस्कारादेव तत्करणोपपत्तेरित्यर्थः । अत्र संस्कारः स्वभावविशेष एव न त्वनुभवजन्यः स्मृतिजनको गुणः । तेषु तदभावादिति ज्ञातव्यम् । एवमुत्तरत्रापि । ननु मुक्तावुपासनाभावे फलं स्यादित्युक्तमेवेत्यत आह ॥ न हीयत इति ॥ फलाभावस्यैव प्रकृतोपयोगादवृद्धीत्येवोक्तम् । फलरूपैव सोपासना न तु साधनरूपेति भावः । ननु कुतः फलाभावमङ्गीकृत्य तदीयोपासनस्य संस्कारनिबन्धनत्वं कल्पनीयम् । किं तु मुक्तौ तदा तदा प्राप्तानिष्टपरिहारार्थमानन्दाभि- वृद्ध्यर्थं वा किं न स्यादित्यत आह ॥ न हीयत इति ॥ अवृद्धीत्युपलक्षणम् । अहानीत्यपि ग्राह्यम् । अत्र पूर्वपक्षे आपादकस्यान्यथासिद्धिरुक्ता भवति । एवं च फलाभावेऽपि संस्काराख्य-कारणसद्भावादुपासनं मुक्तौ सम्भवतीति भावः । (अयं च न्यायः 'कुशाच्छन्दस्तुत्युपगानवत्' इत्यनेन संस्कारवशादिच्छयैवोपासनादिकरणोक्त्या सूचितः।) ॥ १७ ॥

## छन्दाधिकरणम् III-3-18

**न्या.वि.— न च कर्मकरणशक्तेरप्यदूरत्वात्तत्संश्रयनियमः। उपासनाख्ये कार्ये नित्यकृतिसंस्कारो न तथा कर्मणीति कार्यवैशेष्यात् ॥ १८ ॥**

भा.बो.— ॐ छन्दत उभयाविरोधात् ॐ ॥ इत्यत्र करणाकरण-योर्विरोधान्मुक्ताः किमुपासनावन्नियमेन कर्म कुर्वन्ति न वेति सन्देहे नियमेन कुर्वन्तीति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'अदूरसंश्रयः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चेति ॥ अपिपदेन शक्तिसद्भावेऽपि कर्मकरणनियमाभावे उपासनस्यापि नियमो न स्यादविशेषादिति विपक्षे बाधकं सूचितम् । अदूरत्वात् सन्निहितत्वात्, सद्भावादिति यावत् । तत्संश्रयः

कर्मकरणम् । बुध्या विवेकेन तच्छब्देन कर्मणः परामर्शात् । एवं च कर्मकरणशक्तेरदूरत्वात्कर्मापि नियमेन कर्तव्यमिति नेति भावः । (अयं च न्यायः 'छन्दत उभयाविरोधात्' इत्यनेन कर्मणि नियमाभावोक्त्या कर्मकरणाशक्तेरप्यदूरत्वात्तत्संश्रयनियम इति सूचितः।) तद्धेतुत्वेन 'कार्यवैशेष्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ उपासनाख्येति ॥ नित्यकृतिसंस्कार इति ॥ सदाकरणेन संस्कार इत्यर्थः । तथा च न मुक्ताः नियमेन कर्म कुर्वन्ति । कर्मणि नित्यकरणेन संस्काराभावात् । न चैवमुपासनायामपि नियमो न स्यादिति वाच्यम् । उपासनाख्यकार्ये नित्यकृतसंस्कारस्य सत्वादित्यर्थः । अनेनादूरत्वस्याप्रयोजकत्वमुक्तं भवति । एवं च कार्ययोरुपासनाकर्मणोः संस्काराख्यकारणसत्वासत्वरूपवैशेष्यान्न कर्मनियम इति भावः । (अयं च न्यायः 'तल्लक्षणार्थोपलब्धेः' इत्यनेन कर्मणो विशेषहेत्वभावे सति प्राप्तफलत्वादुपासनस्य सद्भावादिति वदता सूचितः । यद्वा 'उभयाविरोधात्' इत्यनेन कर्मकरणाकरणयोर्विरोधाभावादिति वदतोपासनाऽकरणे विरोधोऽस्तीति सूचनान्नित्यज्ञानस्वरूपत्वादिकार्यवैशेष्यं सूचितम् ।) ॥ १८ ॥

## अनियमाधिकरणम् III-3-19

**न्या.वि.— न चायोग्यताख्यविशिष्टकारणाज्ज्ञानिष्वपि केषांचिन्मोक्षो न भवतीति नियमः । ज्ञानिनां मोक्षं ददात्येवेश्वरः । स्वभावात् । अयोग्यानां ज्ञानस्यैवोत्पत्त्यनुपपत्तेः ॥ ॥ १९ ॥**

भा.बो.— ॐ अनिमयः सर्वेषामविरोधाच्छब्दानुमानाभ्यां ॐ ॥ इत्यत्र ज्ञानादेस्तत्साधकप्राप्यत्वाप्राप्यत्वरूपदर्शनान्मोक्षरूपं फलं किं अनियमेन सर्वज्ञानिप्राप्यमुत केषांचित्प्राप्यं केषांचिन्नेति नियम इति सन्देहे केषाञ्चिदेवेति नियम इति पूर्वः पक्षः । अनियमेन सर्वज्ञानिप्राप्यमिति सिद्धान्तः । तत्र 'विशिष्टकारणम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चायोग्यताख्येति ॥ अयोग्यताया आगन्तुकज्ञानापेक्षया प्राबल्यद्योतनार्थं विशिष्टेत्युक्तम् । एवं च ज्ञानिष्वपि केषांचिन्मोक्ष इति न निःशङ्कमुपासनं



कार्यमिति नेति भावः । (अयं च न्यायः सर्वेषामपि गुणोपसंहारयोग्यताङ्गीकारे प्रमाणविरोधवत्सर्वेषामपि ज्ञानिनां मुक्तियोग्यताङ्गीकारे प्रमाणविरोधभावादिति वदता विरोधादित्यनेन सूचितः।) तद्धेतुत्वेन 'स्वभावः' इत्युक्तसिद्धान्तन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृणोति ॥ ज्ञानिनामिति ॥ ददात्येवेत्येवशब्देनानियमं सूचयति । प्रसन्नो हीश्वरो मोक्षस्य चरमकारणम् । यस्य प्रसादादिति श्रुतेः । ईश्वरप्रसादश्चापरोक्षज्ञानेनैव । ईश्वरस्य ज्ञानिप्रियत्वस्वभावात् । प्रियो हि ज्ञानिनोऽत्यर्थमिति श्रुतेः । तथा च सर्वेषामप्यपरोक्षज्ञानिनामीश्वरप्रसादरूपचरमकारणसद्भावात् मोक्षो भवत्येवेति भावः । नन्वीश्वरोऽप्ययोग्यानां ज्ञानिनां कथं मोक्षं दद्यात् । वैषम्याद्यापत्तेरित्यत आह ॥ अयोग्यानामिति ॥ स्वभावादित्यस्यात्रापि सम्बन्धः । अनेन विशिष्टकारणमिति पूर्वपक्षहेतोरसिद्धिरुक्ता भवति । एवं चेश्वरः स्वभावात् सर्वेषां ज्ञानिनां मोक्षं ददातीति निःशङ्कमुपासनं कर्तव्यमिति भावः । (अयं च न्यायः तस्मादाहुः सृतिहेतीति ईश्वरस्य मुक्तिदानस्वभावप्रतिपादकश्रुतिग्राहकेण शब्दपदेन सूचितः। सृतिहेतीत्यस्य ताच्छीलिककिबन्तत्वात् ।) ॥ १९ ॥

## यावदधिकाराधिकरणम् III-3-20

**न्या.वि. — न च प्रयत्नानुसारिणो मुक्तावाधिकारिकानन्दादयः । अधिकारानुसारित्वात्प्रयत्नस्य कथंचिदधिके यत्ने तत्साधनादिवस्तूनां दूषणप्राप्तेः ।**

**स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते ।**
**कथंचिदधिके यत्ने दोषः कश्चित्समापतेत् ॥**

**इति वचनाच्च ॥ २० ॥**

भा.बो.— ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ इत्यत्र उपासनाया अधिकारिनियमोक्त्या लौकिकक्रियायां च तद्दृष्ट्या ब्रह्मोपास्तिमन्त उपासनाधिकारनियतिमन्तो न वेति सन्देहे नेति पूर्वः पक्षः । अधिकारनियतिमन्त इति सिद्धान्तः । तत्र 'चेष्टा' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन्

प्रतिक्षिपति ॥ न च प्रयत्नेनेति ॥ अनेन चेष्टाशब्दः प्रयत्नपर इति व्याख्यातव्यम्। तथा च नोपास्तिमन्तोऽधिकारनियतिमन्तः । तत्र प्रमाणाभावात् । ननु 'वृद्धिह्रासभाक्त्वम्' इत्युक्तरीत्या मुक्तिगतानन्दतारतम्यस्यैव साधनतारतम्ये प्रमाणत्वेन कथं तदभाव इत्यत उक्तं प्रयत्नानुसारिण इति ॥ स्यादेतदेवं यद्यधिकारिणां ब्रह्मादीनां मुक्तावानन्दादयोऽधिकाः स्युः । न चैवम् । तेषामुपासनादिप्रयत्नानुसारेणैवान्यथासिद्धत्वादिति भावः ।

एवं च चेष्टानुसारेणानन्दादितारतम्योपपत्तेरधिकारिनियमाभावात् 'प्राप्तेश्च समञ्जसम्' इत्याद्ययुक्तमिति नेत्याशयः । (अयं च न्यायो 'यावदधिकारम्' इत्यनेन अधिकारानुसारेणैवानन्दादीनां स्थितिर्न प्रयत्नानुसारेणेति प्रयत्नस्याप्रयोजकत्वसूचनात्सूचितः ।) 'वस्तुदूषणम्' इत्युक्तसिद्धान्तन्यायं सङ्गमयितुमाह ॥ अधिकारेति ॥ ततश्चाधिकारिनियमानभ्युपगमे प्रयत्नस्यैवासिद्धेर्न तदनुसारित्वे मुक्तावानन्दतारतम्यस्यान्यथासिद्धिरित्यर्थः । ननु स्वाधिकारापेक्ष-याऽधिकोपासनादेर्दर्शनात् कथमेतदित्यतः सिद्धान्तन्यायं विवृणोति ॥ कथंचिदिति ॥ अत्र प्रमाणमाह ॥ स्वाधिकारेति ॥ एवं चाधिकाराधिकप्रयत्ने वस्तु-दूषणादुपासनाधिकारनियमसद्भावादुक्तं युक्तमित्यर्थः । (अयं च न्यायः 'आधिकारिकाणाम्' इत्यनेनाधिकाराधिकप्रयत्नराहित्यं सूचितम् । तच्चाधिकप्रयत्नाकरणेन वा कृतस्य दूषणाद्वा सम्भवतीति सूचितः ।) ॥२०॥

## इयदामननाधिकरणम् III-3-21

**न्या.वि.— न चैकस्मादेको विशिष्टो दृष्ट एवेति प्राणाद्वि-शिष्टजीवाभावे दृष्टवैरूप्यमिति दोषः । यः सर्वमवजानीयादृते देवं नारायणं देवीं च परमां श्रियम् । स प्राणानवरूध्येमं मन्त्रमावर्तयीत । 'आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः । घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम' इति । स ह्येषां भूतानां वरिष्ठो न ह्येतस्मात्कश्चनोपरि विना देवं नारायणं देवीं च परमां श्रियमिति प्रतिक्रियाविधानादि-विरोधात् ॥ २१ ॥**

भा.बो.— ॐ इयदामननात् ॐ ॥ इत्यत्र अनुक्तेर्वस्तुविद्यमानत्वाविद्य-मानत्वसाधारण्यदर्शनादुपासनाधिकारिणः किं प्राणावसाना न वेति सन्देहे नेति



पूर्वः पक्षः । प्राणावसाना इति सिद्धान्तः । तत्र 'दृष्टवैरूप्यम्' इत्युक्तपूर्व-पक्षन्यायमर्थात्तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चैकस्मादिति ॥ प्राणाद्विशिष्टस्यलक्ष्म्यादेः सिद्धान्तिनाऽप्यङ्गीकारज्जीवेत्युक्तम् । तेन च तस्याधिकारसूचनेन पूर्वपक्ष्यभिमतसिद्धिः । अत्रैतत्तर्कानुगृहीतमनुमानम् - प्राणः, स्वोत्तराधिकारिकः, जीवत्वात् , नामादिवदिति ज्ञातव्यम् । एवं च प्राणादुत्तमाधिकार्यभावे दृष्टवैरूप्यात् प्राणादुत्तमसद्भावात् प्राण एव सर्वगुणोपास्तियोग्य इत्ययुक्तमिति नेति भावः । (अयं च न्यायः 'अन्तरा भूतग्रामवत्' इत्यनेन भूतसमूहे एकस्मादेकस्याधिकस्य दृष्टत्वात् प्राणादधिकस्याभावे दृष्टविरोधः स्यादिति वदतोक्तः ।) तद्धेतुत्वेन 'प्रतिक्रियाविरोधः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यः सर्वमिति ॥ सर्वं प्राणसहितम् । सः-वाताऽवज्ञाकर्ता । प्राणानवरूध्य- प्राणायामं कृत्वा मन्त्रमावर्तयीत । वाताऽवज्ञाप्रतिक्रियात्वेन देवानां आत्मास्वामी, भुवनस्य गर्भः- गर्भ इवान्तर्गतः, यथावशं- यथेष्टम्, इयदेव शृण्विरे- श्रूयन्ते । रूपं- प्रतिमा । न दृश्यत इति शेषः । य एष चरति । यस्यास्य रथघोषा एव अशरीरवाग्रूपाः श्रूयन्ते, न रूपं दृश्यते तस्मा इत्यर्थः । कुतो वाताऽवज्ञाप्रति-क्रियात्वेनैवैतन्मन्त्रजपकरणमित्यत उक्तम् ॥ स ह्येषामिति ॥ वरिष्ठत्वे हेतुः ॥ न ह्येतस्मादिति । कश्चनेति अस्यापवादः ॥ विना देवमिति ॥ विधानादीत्यादिपदेन 'प्राणो वा व सर्वेभ्यो भूयान्' इत्यादिश्रुतिग्रहणम् । अनेन 'प्रतिक्रियाविरोधश्च' इत्यनुव्याख्यानगतचशब्दार्थ उक्तो भवति । तथा चोक्तानुमानस्य बाधितविषयत्वमुक्तं भवति । एवं च प्रतिक्रियाविधानादिविरोधात् प्राण एव सर्वाधिकार्युत्तम इति स एव सर्वगुणोपास्तियोग्य इति भावः । (अयं च न्यायः प्रथमे 'आमननात्' इति, द्वितीये 'तदुक्तम्' इति, तृतीये 'उपदेशवत्' इत्यन्तैः सूत्रांशैर्न्यायविवरणानुसारेण प्रतिक्रियाद्यभिधायक-श्रुतिग्राहकैः सूचितः ।) ॥ २१ ॥

## व्यतिहाराधिकरणम् III-3-22

**न्या.वि. — 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नाद्यभावात्प्राणस्यैवोन्नतिप्रतीतेर्न विष्णोरपि ततः परत्वमिति**

**न मन्तव्यम् । 'एष तु वा अतिवदति' इति विशेषणात्प्रश्नप्रतिवचनप्रतिसन्धानोपपत्तेः ॥ २२ ॥**

भा.बो.— ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या विष्णुः प्राणादुत्तमो न वेति सन्देहे नेति पूर्वः पक्षः । उत्तम इति सिद्धान्तः । तत्र 'उन्नतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ अस्ति भगव इति ॥ ततः प्राणादुत्तमत्वेनाङ्गीकृतस्यापि विष्णोः परत्वं कुतो न मन्तव्यमित्यत उक्तं प्राणस्यैवोन्नतिप्रतीतेरिति ॥ छन्दोगश्रुतौ नामवागादितारतम्यमाशावसानमुक्त्वा तदनन्तरं प्राणस्यैव तदुत्तमत्वेनोक्तत्वात्तस्यैव सर्वोन्नतिप्रतीतेरित्यर्थः । प्राणानन्तरं 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यपदोक्तस्य विष्णोः प्राणादुत्तमत्वोक्तेः कथं प्राणस्यैव सर्वोन्नतिप्रतीतिरित्यत उक्तं अस्ति भगव इति ॥ अत्रापि सत्यपदेन प्राण एवोच्यते न विष्णुः । नामादिप्रकरणवत् 'अस्ति भगवः प्राणाद्भूयः' इति । 'प्राणाद्वा व भूयोऽस्ति' इति 'तन्मे भगवान् ब्रवीतु' इति, 'सत्यं वा व प्राणाद्भूयः' इति प्रकरणभेदकप्रश्नाद्यभावात् । न हि कारणविशेषमन्तरेण प्रकरणभेदः कल्पयितुं शक्यत इति भावः । एवं च प्रकरणभेदकप्रश्नाद्यभावात् सत्येनेत्यस्यापि प्राणपरत्वेन प्राणस्यैव सर्वोत्तमत्वान्न विष्णूपासनं सर्वैः कार्यमिति नेति भावः । (अयं च न्यायः 'विशिंषन्ति' इत्यनेन प्राणात्परमात्मन उत्तमत्वस्योक्तत्वादिति वदता सूचितः ।)

तद्धेतुत्वेन 'प्रतिसन्धिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ एष तु वेति ॥ प्रश्नप्रतिवचनप्रतिसन्धाने हेतुप्रदर्शनार्थमेतदित्युक्तम् । प्रतिसन्धानं- अध्याहारः । अयं भावः । यदुक्तं 'प्रश्नाद्यभावात्सत्यशब्दोक्तो न विष्णुः' इति तन्न । प्रश्नाद्यध्याहारसम्भवात् । न चात्र कारणाभावः । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादो भवति' इति प्राणवादिनोऽतिशयितवस्तुवादित्वेनातिवादित्वमुक्त्वा 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्याख्यवस्तुवदतोऽप्यतिशयितवस्तुवादित्वमुच्यते । तत्र प्राणातिवादिनः सत्यातिवादी तुशब्देन विशिष्यते । तस्मात्प्राणसत्यवादिनोर्भिन्नत्वात्प्राणसत्ययोर्भेद



इति । एवं च प्रश्नप्रतिवचनप्रतिसन्धानात् सत्यपदोक्तस्य विष्णोरेव सर्वोत्तमत्वमिति युक्तं तदुपासनमिति भावः । (अयं च न्यायो 'व्यतिहारः' इत्यनेनोक्तः ।) ॥ २२ ॥

## सत्याधिकरणम् III-3-23

**न्या.वि. — न च सत्यादीनामभेदानुक्तेरन्यत्वम् । सत्यं पूर्णं विज्ञानं पूर्णं वृत्तिः पूर्णा निष्ठा पूर्णा श्रद्धा पूर्णा मतिः पूर्णा सुखं पूर्णं भूमा पूर्णोऽहं पूर्ण आत्मा पूर्णो नात्र किञ्चिदूनं पूर्णमेवाधस्तात्पूर्णमुपरिष्टात्पूर्णं मध्यमः पूर्णं सर्वतः । तदेष श्लोको भवति ।**

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**
**इति श्रुतेः सर्वेषामनूनत्वात् ।**

**'सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः ।**
**तस्मै नमो भगवते यस्मादेव विमुच्यते ॥**
**इति वचनाच्च ॥ २३ ॥**

भा.बो.— ॐ सैव हि सत्यादयः ॐ ॥ इत्यत्र प्राणाद्विष्णुरुत्तम इत्युक्तेस्तन्मात्रोत्तमत्वतदन्यानेकोत्तमत्वयोर्विरोधाभावात् किं प्राणाद्विष्णुरेवोत्तमः किं तदन्योऽपीति सन्देहे तदन्योऽपीति पूर्वः पक्षः । विष्णुरेवोत्तम इति सिद्धान्तः । तत्र 'अनुक्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सत्यादीनामिति ॥ आदिपदेन विज्ञानमतिश्रद्धानिष्ठकृतिसुखभूमाहङ्कारात्मनां नवानां ग्रहणम् । अनुक्तेः छन्दोगश्रुतावित्यर्थः । एवं च सत्यादीनामभेदस्यानुक्तत्वेन तेषां भिन्नत्वात्सत्यादुपरिपठितज्ञानादीनां सत्यपदोक्तविष्णूत्तमत्वप्राप्त्या विष्णुं विना प्राणस्य सर्वोत्तमत्वं विष्णोर्निरुपचरितसर्वोत्तमत्वं च न युक्तमिति नेति भावः । (अयं च न्यायः 'सैव' इत्यभेदोक्त्या सत्यादीनामभेदस्यानुक्तत्वादिति सूचितः ।) तद्धेतुत्वेन 'अनूनता'

इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ सत्यं पूर्णमिति ॥ यदुक्तं छन्दोगश्रुतौ सत्यादीनामभेदानुक्तेरन्यत्वमिति तन्न । यतस्तच्छाखोक्तानेव सत्यादीननूद्यात्र तेषां पूर्णत्वमुच्यते । न हि तेषामन्यत्वे पूर्णत्वं सम्भवति । तस्य च विष्णुलक्षणत्वादिति भावः । न चाभेदानुक्तिदोषः । 'सत्यं भगवो विजिज्ञास' इति सत्याख्यस्य विष्णोर्गुणजिज्ञासायां तद्गुणत्वेन तदविनाभूतज्ञानस्योक्तत्वात्तथोत्तरत्रापि तत्तद्गुणत्वोक्त्या 'भेदो न' इत्यहङ्कारात्मनोस्तयोरभेदस्यानुक्तेरित्यत उक्तं पूर्णमेवाधस्तादित्यादिना ॥ अहङ्कारात्मनोरुच्यत इति तयोरपि ब्रह्मस्वरूपत्वसिद्धिरिति भावः । तत्रैव वक्ष्यमाणः श्लोकः सम्मतित्वेन भवति । एतच्छ्लोकार्थोऽन्यत्र टीकाकारैरुक्तो द्रष्टव्यः । प्रकारान्तरेणाऽप्येतां शङ्कां परिहरन् सत्यादीनां विष्णुस्वरूपत्वे स्मृतिमाह ॥ सत्याद्या इति ॥ सत्यादिवदभेदानुक्तावप्यहङ्कारात्मनोरस्यैव भगवत्स्वरूपत्वमित्यत्र हेतुः ॥ यस्मादिति ॥ 'स वा एष एवं पश्यन्नेवं विजानन्नात्मरतिः' इत्यादिनाऽहङ्कारात्मज्ञानान्मोक्षः श्रूयते । मोक्षस्तु भगवत्प्रसादादेव । अतश्च तयोरभेद इति भावः । एवं च सत्यादीनामनूनतयाऽभेद एवेति स एव प्राणादुत्तम इति भावः । (अयं च न्यायः हिशब्देन भाष्योदाहृतब्रह्मतर्कवाक्यवदत्रोदाहृतानूनताप्रतिपादकश्रुतेरपि सूचनात्सूचितः ।) ॥ २३ ॥

## कामाधिकरणम् III-3-24

**न्या.वि. — न च श्रियोऽप्रयत्नत्वादनुपासनं संसारो वा । नित्यं भगवदुपस्थितेरतिप्रियत्वात्संस्कारापाटवान्नित्योपासोपपत्तेश्च ॥ २४ ॥**

भा.बो.— ॐ कामादितरत्र तत्र चाऽऽयतनादिभ्यः ॐ ॥ इत्यत्र भगवदुपास्तावधिकार्यनधिकारिचेतनप्रतीत्या श्रीरधिकारिणी न वेति सन्देहे अधिकारिणीति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'अप्रयत्नत्वम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च श्रिय इति ॥ अनेन विपक्षे बाधकमुक्त्वा हेतुसिद्धिः समर्थिता । हेतुमाहसंसारो वेति । तदयमर्थः । श्रीरधिकारिणी, साधुत्वे सति संसारित्वात् । न च तस्याः संसारित्वाभावः । तथा सति कृतार्थत्वेन मोक्षार्थं प्रयत्नराहित्यप्राप्तौ प्रमाणसिद्धभगवदुपासनं न स्यादिति । यद्वा श्रियोऽधिकाराभावं वदन् प्रष्टव्यः सा कृतार्था न वेति । आद्ये कृतार्थत्वादेव प्रयत्नशून्यत्वेन भगवदुपासनाभावः स्यात् । अस्वतन्त्रायास्तस्याः कृतार्थत्वे कारणाभावाच्च । द्वितीये संसारप्राप्तिश्च । पक्षान्तरदूषणत्वज्ञापनार्थं वाशब्दः । एवं श्रियोऽप्रयत्नत्वे भगवदुपासनं न स्यादित्यकृतार्थत्वेन संसारित्वादधिकारोऽस्त्येवेति नाधिकारिणां प्राणावसानत्वमिति नेति भावः । (अयं च न्यायो नित्यमुक्तत्वप्रतिपादकाभ्यां प्रथमतृतीयसूत्राभ्यां सूचितः ।) तत्र तावच्छ्रियः कृतार्थत्वमङ्गीकृत्य कारणाभावलक्षणदोषपरिहारार्थं 'उपस्थितेस्तद्वचनात्' इति सूत्रार्थमाह ॥ नित्यमिति ॥ अतिप्रियत्वादित्यनन्तरं 'नित्यमुक्तत्वोपपत्तिः' इति शेषः । तत्सम्बन्धित्वेन श्रिय इत्यस्यानुवृत्तिः । चतुर्मुखादावनैकान्त्यपरिहाराय अतीति । तदपि कुत इत्यत उक्तम् ॥ नित्यं भगवदुपस्थितेरिति । अत्रापि नित्यमित्यस्यातीत्यस्येव सार्थक्यम् । तथा च श्रियोऽस्वातन्त्र्येऽपि भगवत्प्रियत्वाख्यकारणसद्भावान्नित्यमुक्तत्वोपपत्तिरिति भावः । इदानीं कृतार्थत्वपक्षेऽप्रयत्नत्वादनुपासनमित्युक्तदोषपरिहारार्थं 'संस्कारापाटवम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ संस्कारापाटवादिति ॥ चशब्दो नित्यमुक्तत्वोपपत्तिसमुच्चयार्थः । तथा च संस्कारस्यासिद्धत्वान्नाधिकारिणी श्रीरिति युक्तमधिकारिणां प्राणावसानत्वमिति भावः । (अयं च न्यायः 'आदरादलोपः' इत्यनेन संस्कारापाटवादुपासनं सम्भवतीति वदता सूचितः ।) ॥ २४ ॥



## निर्धारणाधिकरणम् III-3-25

**न्या.वि. — न च बन्धदार्ढ्ये श्रवणादीनामफलता । अन्यथोपासां विनैव श्रवणादिज्ञानमात्रेण मुक्तिरिति दोषः ।**

श्रवणादित्रयोत्पन्नदृष्टचैव स्वेच्छया हरिः ।
प्रसन्नो मुक्तिदो नित्यमन्यथा न कथंचन ॥
इतीश्वरेच्छानियतिश्रुतेः ॥ २५ ॥

भा.बो.— ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॐ ॥ इत्यत्र श्रोतव्य इत्यादि श्रवणविधेः समस्तव्यस्तोपासनयोः साधारण्यात्किं समस्तमुपासनं कर्तव्यमुत व्यस्तमिति सन्देहे व्यस्तं कर्तव्यमिति पूर्वः पक्षः । समस्तं कर्तव्यमिति सिद्धान्तः । तत्र 'दृढबन्धः' इत्युक्तपूर्वपक्षान्यायं विवृण्वन् प्रतिक्षिपति ॥ न च बन्धदाढ्य इति ॥ ध्यानं विना श्रवणमननमात्रानिवर्त्यस्य बन्धस्य– ज्ञानप्रतिबन्धस्य, दार्ढ्येऽङ्गीक्रियमाणे आवश्यकध्यानेनैव बन्धनिवृत्ति-द्वाराऽपरोक्षज्ञानसम्भवाच्छ्रवणादीनामफलतावैयर्थ्यम् । श्रवणमननाति-बाहुल्यात्साधनान्तरापेक्षया वा श्रवणादीनामिति बहुवचनम् । अन्यथा बन्धदार्ढ्याऽभावे ध्यानरूपामुपासां विनैव (श्रवणादिज्ञानमात्रेण) श्रवणमननाभ्यामेव परोक्षज्ञानसम्भवाद्व्यर्थध्यानमिति भावः ।

मुक्तिरित्यनेन श्रवणमननमात्रजनितापरोक्षज्ञाने मुक्तिजनकत्वलाभार्थमपि न ध्यानजन्यत्वापेक्षेति सूचयति । एवं च दृढबन्धाद्ध्यानेनैवापरोक्षज्ञानमिति श्रवणादीनां वैयर्थ्याद्य(र्थ)स्तमेवोपासनं कर्तव्यमिति नेति भावः । (अयं च न्यायः अप्रतिबन्धः फलमित्येतेन श्रवणादेः प्रतिबन्धनिवृत्तिफलत्वोक्त्या सूचितः ।) तद्धेतुत्वेन 'स्वेच्छानियतिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ श्रवणादीति ॥ एवं चेश्वरेच्छानियत्या श्रवणादित्रितयजन्या-परोक्षज्ञानेनैव मुक्तिरिति समस्तमेवोपासनं कर्तव्यमिति भावः । (अयं च न्यायो हिशब्देन भाष्योदाहृतश्रुतिरिवेश्वरेच्छानियति प्रतिपादकन्यायविवरणोदाहृतश्रुतेरपि ग्रहणेन सूचितः ।) ॥ २५॥

## प्रदानाधिकरणम् III-3-26

न्या.वि. — न च गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचिद्गुरुकोपाज्ज्ञानपराभवेनामुक्तिप्रसङ्गान्न गुर्वधीनत्वमिति ।



ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेः क्वचित् ।
आनन्दह्रासदोषेण सैव मुक्तिर्विदूष्यति ॥

इति वचनान्मुक्तिदूषणेनैव गुरुकोपादेः कृतार्थत्वात् । ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादिति गुरोर्वरेण वा मुक्त्युपपत्तेः ॥ ॥२६ ॥

भा.बो.— ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥ इत्यत्र श्रवणाद्युपासनाकर्तव्यताविधेः श्रवणादेरितिकर्तव्यतासाध्यत्वे तद्राहित्ये वा पर्यवसानाच्छ्रवणादिकं किं यथाकथञ्चिदनुष्ठितं ज्ञानसाधनमुत गुरुप्रसादपूर्वकप्रदानयुक्तमिति सन्देहे यथाकथञ्चिदनुष्ठितमिति पूर्वः पक्षः । गुरुप्रसादपूर्वकप्रदानयुक्तमिति सिद्धान्तः । तत्र 'पराभवः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च गुर्वधीनत्व इति ॥ ज्ञानिनोऽपीत्यादौ ज्ञानिपदमुपासकस्य, ज्ञानपदमुपासनयोः, अमुक्तिपदं ज्ञानाभावस्योपलक्षकमिति ज्ञातव्यम् । न गुर्वधीनत्वमित्यत्रापि ज्ञानमोक्षयोरित्येतत्सम्बध्यते । एवं च ज्ञाने गुर्वपेक्षाभावान्न तदुक्तप्रकारेणोपासनं कर्तव्यमिति नेति भावः । (अयं च न्यायः 'प्रदानवत्' इत्यनेन ज्ञानस्य गुरुप्रदानसाध्यत्वप्रतिपादकेन सूचितः ।) तद्धेतुत्वेन 'वस्तुवैभवम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ ज्ञानिन इति ॥ साक्षात्कृतब्रह्मसामर्थ्येन तव मुक्तिर्भूयादिति शिष्यं प्रति गुरोर्वरेण वा यदि मुक्त्युपपत्तिस्तर्हि गुरुशापादेर्वैयर्थ्यमित्यतः कृतार्थत्वादित्यन्तमुक्तम् । एवं च ब्रह्माख्यवस्तुवैभवेन ज्ञानिनां मोक्षस्य क्लृप्तत्वाच्छापादेरन्यथासिद्धेर्बाधकाभावेन गुरुप्रदानमावश्यकमिति भावः । (अयं च न्यायः 'तदुक्तम्' इत्यनेन ज्ञानादेर्गुरुप्रदानसाधनस्य प्रामाणिकत्वोक्त्या ज्ञानादेर्भगवन्नियतत्वेन गुरुशापेन पराभवासमभवादिति सूचितः । यद्वा 'तदुक्तम्' इत्यनेन तत्वप्रकाशिकोदाहृतस्य 'ये ज्ञानविषयाः' इति ज्ञानादेर्भगवन्नियतत्वप्रतिपादकप्रमाणस्यापि ग्रहणात्सूचितः ।) ॥ २६ ॥

## लिङ्गभूयस्त्वाधिकरणम् III-3-27

न्या.वि. — शिष्यस्यापि पुरुषत्वसाम्याद्धारणादेस्तत्प्रयत्नस्य न दौर्बल्यमिति न मन्तव्यम् । 'गुरुप्रसादो बलवान्' इत्यादिविशेषोक्तेः ॥ २७ ॥

भा.बो.— ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ इत्यत्र साधनेषु क्वचिदितिकर्तव्यताप्राबल्यस्य क्वचित्साधनप्राबल्यस्य क्वचिदुभयसाम्यस्य च दर्शनात् गुरुप्रसादो बलवानुत शास्त्रश्रवणादिरूपः शिष्यप्रयत्नो वा बलवान्, अथ द्वयं सममेव वेति सन्देहे शिष्यप्रयत्न एव बलवान् सममेव वेति पूर्वः पक्षः । गुरुप्रसाद एव बलवानिति सिद्धान्तः । तत्र 'पुंसाम्यम्' इत्युक्तपूर्वपक्षान्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ शिष्यस्यापीति ॥ न दौर्बल्यमित्यनेन प्राबल्यं साम्यं वेति पक्षद्वयं पूर्वपक्ष्यभिमतमिति सूचयति । अत एव पुरुषत्वसाम्याच्छिष्यप्रयत्नस्याधिक्यं साम्यं वा स्यादिति न गुरुप्रदानमावश्यकमिति नेति भावः । (अयं च न्यायः गुरुप्रसादस्य प्राबल्यं वदता 'तद्धि बलीयः' इत्यनेन सूचितः ।) तद्धेतुत्वेन 'विशेषोक्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ गुरुप्रसाद इति ॥

गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम् ।
तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये ॥

इति समग्रश्लोकार्थपर्यालोचनायामस्य विशेषोक्तित्वं स्पष्टमवगम्यते । न च गुरुशिष्ययोः साम्यात्तत्क्रियायाः साम्यमिति वाच्यम् । तस्यैतत्स्मृतिबाधितत्वात् । गुरुशिष्यभाववदेवोपपत्त्याऽप्रयोजकत्वाच्च । नापीतिकर्तव्यतात्वेन दौर्बल्यम् । यागीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनादिति । एवं च विशेषोक्त्या गुरुप्रसाद एव बलवानिति गुरुप्रदानमावश्यकमिति भावः । (अयं च न्यायो 'लिङ्गभूयस्त्वात्' इत्यनेन श्रुतं ह्येतमेवेत्यादिविशेषवाक्यादिति वदता सूचितः । यद्वा गुरुप्रसादो बलवानिति स्मृतिसूचकहिशब्देन सूचितः ।) ॥ २७ ॥



## विकल्पाधिकरणम् III-3-28

न्या.वि. — न चोत्तमगुरुस्वीकारार्थत्वेन प्राप्तसन्त्याग-निमित्तदोषः । तत्र दोषे मानाभावात् ॥ २८ ॥

भा.बो.— ॐ पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत् ॐ ॥ इत्यत्र पूर्वप्राप्तगुरुत्यागेन गुर्वन्तरस्वीकारस्य तदभावस्य च दर्शनात् किं पूर्वप्राप्त एव गुरुरिति नियम उत पूर्वतनं त्यक्त्वाऽन्योऽपि ग्राह्य इति संदेहे प्रथमप्राप्त एव गुरुरिति पूर्वः पक्षः । न पूर्वप्राप्तः एव गुरुरिति सिद्धान्तः । तत्र 'प्राप्तसन्त्यागः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न चोत्तमेति ॥ स्वीकारार्थत्वे– स्वीकारप्रयोजनत्वे प्राप्तगुरुत्यागस्येत्यर्थः । पूर्वगुरुत्यागं विनाऽन्यगुरुस्वीकारो न सम्भवतीति भावः ॥ दोष इति ॥ 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इति वचनसिद्ध इत्यर्थः । शुभादिप्राप्तिस्तु पूर्वप्राप्तगुरुणैव सम्भवतीति भावः । एवं च प्राप्तसन्त्यागनिमित्तदोषप्राप्त्या पूर्वप्राप्त एव गुरुरिति क्वचित्सर्वज्ञस्य गुरोः प्राप्तौ प्रागुक्तं न युज्यत इति नेति भावः । (अयं च न्यायः पूर्वस्य गुरोस्त्यागे विकल्पं वदता 'पूर्वविकल्पः' इत्यनेन दोषवचनस्य गतिसूचनेन सूचितः ।) तद्धेतुत्वेन 'अमानत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तत्रेति ॥ तत्र पूर्वप्राप्तगुरुपरित्यागेन तदपेक्षया समग्रानुग्रहकर्तुः पूर्वप्राप्तापेक्षयोत्तमस्य समस्य वा गुरोः स्वीकारविषये दोषसत्वे मानाभावादित्यर्थः । 'गुरुमन्त्रपरित्यागी' इति वचनं तु पूर्वप्राप्तादधमगुरुस्वीकारविषयं पूर्वानुज्ञां विना समग्रानुग्रहकर्तुः समगुरोः स्वीकारविषयं वेति भावः । एवं च पूर्वप्राप्तगुरुत्यागनिमित्त-दोषस्यामानत्वात्सर्वज्ञगुरुस्वीकारोपपत्तेर्युक्तं तदुक्त- प्रकारेणोपासनमिति भावः । (अयं च न्यायः 'अतिदेशाच्च' इत्यनेन 'तेभ्यः शृणु' इति गुर्वन्तरपरिग्रहस्य श्रुत्युक्तत्वादित्युक्त्यैव सूचितः ।) ॥ २८ ॥

## विद्याधिकरणम् III-3-29

न्या.वि. — न च विद्याकर्म वा संसारनिवृत्तिकारणमिति कारणानिर्णयः । 'नान्यः पन्था अयनाय विद्यत' इत्यवधारणात् विद्यावचनस्य प्राधान्यात् ॥ २९ ॥

भा.बो.— ॐ विद्यैव तु निर्धारणात् ॐ ॥ इत्यत्र कर्तव्याकर्तव्यक्रियादर्शनात् भगवदुपासनं कर्तव्यं न वेति सन्देहे नेति पूर्वः पक्षः । कर्तव्यमेवेति सिद्धान्तः । तत्र 'कारणानिर्णयः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च विद्येति ॥ 'तरति शोकमात्मवित्' इति ज्ञानस्य मोक्षसाधनत्ववत्, 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिना कर्मणोऽपि मोक्षसाधनत्वप्रतीतिरिति भावः । न च 'भाक्तं वानात्मवित्त्वात्' इत्यत्र निर्णीतत्वात्कथमनिर्णय इति वाच्यम् । कर्मणैवेति तृतीयायाः साक्षात्कारणार्थत्वात् । वाशब्दज्ञापितपरम्पराकारणत्वोपमर्देन संसिद्धिमित्यनेन साक्षान्मोक्षाभिधानात्, भाक्तमित्युक्तगौणमोक्षग्रहणं न सम्भवतीति तदुपमर्देनैव तत्पूर्वपक्षोत्थानादिति । एवं च मोक्षकारणानिर्णयान्न ज्ञानार्थमुपासनं कार्यमिति नेति भावः । (अयं च न्यायो विद्यैवेत्यनेन मोक्षकारणानिर्धारणेन सूचितः ।) तद्धेतुत्वेन 'प्राधान्यम्' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ नान्यः पन्था इति ॥ विद्यावचनस्य– विद्याया मोक्षसाधनत्ववचनस्य । प्राधान्यात्– प्राबल्यात् । विद्यैव मोक्षसाधनमिति निर्णयोपपत्तेर्न कारणानिर्णय इत्यर्थः । न च कर्मणैवेति स्मृतिविरोधः । 'लाङ्गलेन वयं जीवामः' इति परम्परया कारणत्वेऽपि तृतीयोपपत्तिः । संसिद्धिपदस्य वा ज्ञानपरत्वाच्चेति भावः । एवं च विद्यावचनस्य प्राधान्यात् ज्ञानमेव मोक्षसाधनमिति तदर्थमुपासनं कर्तव्यमिति भावः । (अयं च न्यायो 'निर्धारणात्' इत्यनेन 'नान्यः पन्थाः' इति निर्धारणाद्विद्यावचनस्यैव प्राधान्यमिति वचनेन सूचितः ।) ॥ २९ ॥

## श्रुत्यायधिकरणम् III-3-30

न्या.वि.— न च विद्यावचनस्य प्राधान्यं भ्रमः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति भगवतस्तस्मिन्नेवाभ्यधिकप्रीतिवचनात् । 'यमेवैष वृणुते तेन लभ्यः' इति तत्प्रीतेरेव मोक्षवचनाच्च ॥ ३० ॥

भा.बो.— ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या मोक्षः किं कर्मसाध्य उत ज्ञानसाध्य इति सन्देहे कर्मसाध्य इति पूर्वः पक्षः । ज्ञानसाध्य इति सिद्धान्तः । तत्र 'भ्रमः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च विद्यावचनस्येति ॥ प्राधान्यं भ्रम इत्यत्र प्राधान्यमिति, इतिशब्दाध्याहारं वा भ्रमो भ्रमविषय इति वा द्रष्टव्यम् । नान्यः पन्था इति विद्यावचनस्य कर्मणैवेति कर्मवचनस्य सावधारणत्वे समानेऽपि कर्मणैवेत्यस्य भगवद्वाक्यत्वेन प्राबल्यादिति भावः । एवं च विद्यावचनस्य प्राधान्यमित्यस्य भ्रमत्वेन ज्ञानस्य मोक्षसाधनत्वानिर्णयान्न तदर्थोपासना कर्तव्येति नेति भावः । (अयं च न्यायो 'न बाध' इत्यनेन कर्मणैवेति स्मृतिबाध्यत्वाद्विद्यावचनस्य प्राधान्यं भ्रम इति सूचितः ।) तद्धेतुत्वेन 'प्रीतिः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ प्रियो हीति ॥ कर्मिसाधारण्यनिरासार्थं- तदत्यर्थमित्युक्तम् । तस्याऽर्थः अधिकेति । ननु ज्ञानस्य प्रीतिसाधनत्वं प्रकृतानुपयुक्तं किमर्थमुच्यत इत्यत आह ॥ यमेवैष इति ॥ यं- आत्मा एषः– इच्छारूपः, प्रसन्नः सन्निति यावत्, वृणुते तेनैव लभ्यः – प्राप्य इत्यर्थः । 'प्रियो हि' इति वाक्यस्य भगवद्वाक्यत्वेन अत्यर्थमित्यादिरूपेण विशेषवाक्यत्वेन 'तमेवं विदित्वा' इत्यादि श्रुतिसाहित्येन च कर्मणैवेत्येतदपेक्षया प्राबल्यमित्यवधेयम् । कर्मणैवेत्येवकारस्तु कर्मणा सहैवेत्ययोगव्यवच्छेदार्थम् । कर्मयोगश्च मोक्षातिशयार्थ इति ज्ञातव्यम् । एवं च भगवतो ज्ञानिन्येव मोक्षसाधनाधिकप्रीत्या ज्ञानमेव मोक्षसाधनमिति कर्तव्यमेव तदर्थमुपासनमिति भावः । (अयं च न्यायः 'श्रुत्यादिबलीयस्त्वात्' इत्यनेन प्रियो हीत्यादि- श्रुतिस्मृत्यादौ विद्ययैव भगवत्प्राप्तिकथनादिति सूचितः ।) ॥ ३० ॥

## अनुबन्धाधिकरणम् III-3-31

न्या.वि. — न च कस्यचिद्विशेषज्ञानोपपत्तेर्भक्त्यादिकं विना मुक्तिः । 'भक्त्यैवैनं जानाति भक्त्यैवैनं पश्यति भक्त्यैव बन्धाद्विमुच्यते' 'भक्त्यैवाऽऽनन्दी भवति, 'यमेवैष वृणुते तेन लभ्यः,' 'भिनत्ति कर्मसङ्घातं प्रसन्नो भगवान् हरिः' इत्याद्यागमात् ॥ ३१ ॥

भा.बो.— ॐ अनुबन्धादिभ्यः ॐ ॥ इत्यत्र साधनत्वेनानुक्तेः कारणाकारणसाधारण्याद्भगवज्ज्ञानं भक्त्यादिसापेक्षं न वेति सन्देहे नेति पूर्वः पक्षः । भक्त्यादिसापेक्षमिति सिद्धान्तः । तत्र 'विशेषदर्शिता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च कस्यचिदिति ॥ भक्तिं विनेत्येतत् पूर्वेणोत्तरेण च सम्बध्यते । विशेषज्ञानोपपत्तेः – अपरोक्षज्ञानोपपत्तेः । ज्ञानस्य चानन्यापेक्षया मुक्तिहेतुत्वाद्भक्त्यादिकं विना मुक्तिरित्यर्थः । अनेन भक्तेर्ज्ञानोत्पत्तौ ज्ञानेन च मुक्तिजननेऽपि उपयोगो नास्तीति दर्शितमित्युक्तं भवति । एवं च भक्तिं विना द्वेषेण ध्यायतामपि विशेषदर्शिता सम्भवतीति भक्त्यादिकं व्यर्थमित्यतीतपादानुपपत्तिरिति नेति भावः । (अयं च न्यायो न केवलं श्रवणादिना, किं तर्हि , भक्त्यादिभिरपीति भक्त्यादेर्ज्ञानसाधनत्वं वदता 'अनुबन्धादिभ्यः' इति सूत्रेण भक्त्यादिकं विना द्वेषादिनाऽप्यपरोक्षज्ञानोपपत्तेरिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'आगमः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ भक्त्यैवैनमिति ॥ जानाति– परोक्षतः । बन्धाद्विमुच्यत इत्यनिष्टनिवृत्तिरुच्यते । आनन्दीभवतीतीष्टप्राप्तिः । एष विष्णुर्यं वृणुते यस्य प्रसन्नो भवति ततश्च तस्याधिकारिणः स्वरूपं प्रकाशयतीत्यर्थः । तत्र वृणुत इत्यनेन भक्तत्वं सूचितम् । प्रसादस्य भक्तिसाध्यत्वादिति । अत्रापि पूर्वपक्षहेतोरसिद्धिः । एवं च भक्त्यैवैनमित्यागमाद्भक्त्यादिकं ज्ञानार्थमपेक्षितमिति भावः । (अयं च न्यायः 'अनुबन्धादिभ्यः' इति भक्त्यादेर्ज्ञानसाधनत्वप्रतिज्ञया सूचितः ।) ॥ ३१ ॥

## प्रज्ञान्तराधिकरणम् III-3-32

**न्या.वि. — न च 'दृष्ट्वैव तं मुच्यते नापरेण' 'यावान् यश्चास्मि तत्वतः । ततो मां तत्वतो ज्ञात्वा' इत्यादिसामान्यालापमात्रेण दर्शनस्याविशेषः । 'यथायोग्यमेवैष आत्मानं दर्शयति यथाऽधिकारं देवेभ्योऽतो ब्रह्मैनमभिपश्यत्यथाऽऽत्मैवात्मानमभिपश्यति सुस्थिरो ह्येष नियमः' इति दर्शनविशेषनियमस्य सुस्थिरत्ववचनात् । 'यावान्यश्चास्मि' इति ब्रह्मण एव ज्ञानोपपत्तेः । यावानित्यत्रापि सामान्यविशेषज्ञानोपपत्तेश्च ॥३२॥**



भा.बो.— ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ इत्यत्र पदार्थधर्माणां वैचित्र्यावैचित्र्यदर्शनात् भगवद्दर्शनं सर्वेषामेकप्रकारमुतानेकप्रकारमिति सन्देहे एकप्रकारमिति पूर्वः पक्षः । अनेकप्रकारमिति सिद्धान्तः । तत्र 'आलापः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च दृष्ट्वैवेति ॥ दृष्ट्वैवेत्यस्य दर्शने विशेषानुक्तेः सामान्याभिलापत्वम् । यावानित्यादेः

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः ।<br>ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति सर्वेषां भक्त्यादिना पूर्णज्ञानोत्पत्तेः । सम्पूर्णज्ञानेनैव च मोक्षस्याभिधानात्सामान्याभिलापत्वम् । श्रुतिस्मृत्योस्तु सामान्यवचनत्वादेव सर्वाधिकारिविषयत्वं ज्ञायते । दर्शनस्य, सर्वाधिकारिसम्बन्धिन इत्यर्थः । एवं च दृष्ट्वैवेत्यादि सामान्याभिलापात्सर्वेषामेकप्रकारमेव ज्ञानमिति मुक्तितारतम्यमयुक्तमिति नेति भावः । (अयं च न्यायः उपासनापृथक्त्ववज्ज्ञानस्य वैलक्षण्यं कथयता 'तद्दृष्टिश्च' इत्यनेन 'दृष्ट्वैव तम्' इति सामान्याभिलापज्ज्ञानस्य सामान्यमेवेति पूर्वपक्षसूचनात्सूचितः ।) तद्धेतुत्वेन 'सुस्थिरत्वम्' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यथायोग्यमिति ॥ एषः– परमात्मा, आत्मानं परमात्मानं, देवेभ्य इति पञ्चम्यन्तमत्रापि सम्बध्यते । स्वेतरदेवेभ्यः अभिपश्यति– सम्यग्जानाति । यतश्चतुर्मुखोऽपि स्वेतरदेवेभ्य एव सम्यग्जानाति न तु सर्वात्मना । अथ तस्मात्, आत्मैव परमात्मैव, आत्मानं– स्वात्मानं, अभिपश्यति– सर्वेण प्रकारेण जानातीत्यर्थः । 'यावान्यश्चास्मि' इति सामान्याभिलापस्य तर्हि का गतिरित्यत आह– यावानिति । ब्रह्मण एव– चतुर्मुखस्यैव । 'यावान्' इति वेदस्य तद्विषयत्वं द्रष्टव्यम् । 'भक्त्या' इति 'विशते' इति चोक्तत्वान्न परब्रह्मविषयत्वम् । साधारणवचनत्वेऽपि गतिमाह– यावानित्यत्रापीति ॥ सामान्येन रूपेण विशेषज्ञानस्य सर्वेषामुपपत्तेश्चेत्यर्थः । उपलक्षणं चैतत् । 'दृष्ट्वैव' इति श्रुतेरपि 'यथायोग्यं दृष्ट्वा' इत्यर्थोपपत्तेरिति द्रष्टव्यम् । अन्यथा उदाहृतश्रुतिविरोधादिति भावः । एवं च दर्शनतारतम्यस्य सुस्थिरत्वाद्युक्तं तारतम्यमिति भावः । (अयं च न्यायः 'तदुक्तम्' इत्यनेन

यथायोग्यमिति सुस्थिरत्वप्रतिपादकश्रुतेरपि ग्रहणाद्दर्शनविशेषनियमस्य सुस्थिरत्वादिति सूचनेन सूचितः ।) ॥ ३२ ॥

## सामान्याधिकरणम् III-3-33

न्या.वि. — न च भगवतः सर्वत्र गुणसाम्याद्यस्य कस्यापि रूपस्य दर्शनात्सर्वेषां मुक्तिः । 'समोऽपि भगवान्स्वबिम्बदर्शन एवैनं मोचयति । यथा समेष्वपि कर्मसु स्वकृतमेवैनं भोजयति' इति श्रुत्युक्तस्वकृतप्राप्तिदृष्टान्तात् ॥ ३३ ॥

भा.बो.— ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ इत्यत्र 'ब्रह्मविदाप्नोति परम्' इत्याद्युक्तेर्बिम्बाबिम्बसाधारण्याद्भगवद्दर्शनं बिम्बरूपविषयं मुक्तिसाधनमुत यत्किञ्चिद्रूपविषयमिति सन्देहे यत्किञ्चिद्रूपविषयमिति पूर्वः पक्षः। बिम्बरूपविषयमेवेति सिद्धान्तः । तत्र 'गुणसाम्यम्' इत्युक्तपूर्वपक्षन्यायं श्रुत्युदाहरणपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भगवत इति ॥ सर्वत्र गुणसाम्यादिति ॥ सर्वत्रावतारादौ मोक्षदातृत्वादिगुणसाम्यादित्यर्थः । अन्यथा न स्थानतोऽपीत्याद्युक्तविरोधः । सिद्धान्तेऽप्यवतारदर्शनेनापि केषाञ्चिन्मुक्त्यङ्गीकारात् सर्वेषामित्युक्तम् । एवं च सर्वरूपाणां गुणसामान्याद्यस्य कस्यापि रूपस्य दर्शनेन मुक्तिः स्यादिति न बिम्बोपासनानियतिरिति नेति भावः । (अयं च न्यायः, यथा मरणत्वसाम्येऽपि न यत्किञ्चिन्मरणानन्तरं मुक्तिः किं तु विशिष्टमरणानन्तरमेव, एवं भगवद्रूपाणां गुणसाम्येऽपि न यस्य कस्यापि रूपस्य दर्शनान्मुक्तिः, किं तु स्वबिम्बदर्शनादेवेति वदता 'न सामान्यादप्युपलब्धेर्मृत्युवत्' इत्यनेन सूचितः ।) तद्धेतुत्वेन 'कृतप्राप्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ समेष्विति ॥ समेषु– अन्यकृतेषु कर्मसु स्वकृतकर्मणा कर्मत्वसमेष्वित्यर्थः । एनं कर्मकर्तारम् । एवं च समेष्वपि कर्मसु स्वकृतप्राप्तिवत्समेष्वपि भगवद्रूपेषु बिम्बदर्शनमेव मुक्तिसाधनमिति बिम्बोपास्तिनियतिरिति भावः । (अयं च न्यायो 'मृत्युवत्' इत्यस्योपलक्षणत्वेन यथा कर्मत्वसाम्येऽपि स्वकृतेनैव कर्मणा फलप्राप्तिर्न तु येन केनापि कर्मणेति कृतप्राप्तिरूपदृष्टान्तस्यापि कथनात्सूचितः ।) ॥ ३३ ॥



## परेणाधिकरणम् III-3-34

न्या.वि.— 'भक्तिरेवैनम्' इति भक्तेरेव पृथङ्मोचकत्वदर्शनात् नेशकृत्यमिति न मन्तव्यम् ।

अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् ।
जीवं तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरिः ॥
कंचिन्न मोचयेद्वाऽसौ स्वातन्त्र्यं तेन तस्य हि ।
भक्तिवाक्करणत्वेन सावकाशेशवागथ ॥
भक्त्यैनं मोचयेद्विष्णुरिति मानत्वमेष्यति ॥

इति ब्रह्मतर्कवचनादनादिगुणविस्तरे सत्यपि अव्यक्त्यादिना तदिच्छां विना मोक्षाप्राप्तेः ॥ ३४ ॥

भा.बो.— ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ इत्यत्र कृष्यादौ साधनसामर्थ्येन राजसेवादौ सेव्यपुरुषसामर्थ्येन फलप्रदानाद्भगवज्ज्ञानं किं भक्तिसामर्थ्येन भवति उत परमात्मनेति सन्देहे भक्तिसामर्थ्येनैवेति पूर्वः पक्षः । परमात्मनैवेति सिद्धान्तः । तत्र 'पृथग्दृशिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ भक्तिरेवैनमितीति ॥ पृथक् ईश्वराद्यपेक्षया । अन्यथा भक्तिरेवेत्यवधारणविरोध इति भावः । मोचकत्वदर्शनादितिभक्तेर्दर्शनहेतुत्वोक्तावर्थान्मोक्षहेतुत्वं चोक्तमिति । नयति मोक्षं प्रतीति वाऽभिप्रेत्यैतदुक्तम् । एवं च भक्तेरेव मोचकत्वस्य पृथग्दृष्ट्या साधनसामर्थ्यादेव दर्शनसम्भवान्न तस्याव्यक्तत्वमिति नेति भावः । (अयं च न्यायः 'भक्तिरेवैनम्' इति श्रुतेर्गतिं वदता शब्दस्य ताद्विध्यमित्यनेन सूचितः) तद्धेतुत्वेन 'अनादिगुणविस्तरः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ अनादित इति ॥ भक्त्याद्याः अनादितः सन्तो विद्यमाना अप्यव्यक्तत्वाज्जीवं नामूमुचन् हि यस्मात्तस्मात् हरिरावणादिहरणसमर्थो भक्त्यादिगुणव्यक्तिं कृत्वैनं जीवं मोचयेदित्यर्थः । किमिति सर्वेषां मुक्तिरित्यत आह- ॥ कञ्चिदिति ॥ जीवजातम् । ननु सावधारण'भक्तिरेवैनम्' इति श्रुतेः का गतिरित्यत आह ॥ भक्तिवागिति ॥ भक्तिरेवैनमित्यादिवागित्यर्थः ॥

करणत्वेनेति । भक्तेरिति शेषः । हन्ता रामशरः इत्यादिवदित्यर्थः । अथेति पक्षान्तरे । ईशवाक्सर्वशब्दानां ब्रह्मणि प्रवृत्तेर्भक्तिशब्द ईश्वरवाचक इत्यर्थः । तथा च 'ब्रह्मैवैनं नयति' इत्यादिश्रुत्यर्थ इति भावः । करणत्वेनेत्युक्तमुपपादयति ॥ भक्त्यैनमिति ॥ साधनेषु प्राधान्यज्ञापनार्थं भक्तिरेवेत्येवशब्दः । विस्तरे-विस्तारे । अव्यक्त्यादिनेत्यादिपदेनागन्तुकसाधनान्तरादिग्रहणम् । तदिच्छाम्-परमात्मेच्छाम् । भक्तिव्यक्तिहेतुभूतेश्वरत्यागेन भक्तेरेव स्वातन्त्र्याङ्गीकारे तस्यानादित्वेन पूर्वमेव मुक्तिः स्यादिति भावः । एवं चानादिगुणविस्तारे सत्यपि भगवद्दर्शनाभावाद्युक्तं तस्याव्यक्तत्वमिति भावः । (अयं च न्यायोऽवधारणार्थ-कतुशब्दसहितेन 'परेण' इत्यनेन भक्तेः कर्तृत्वं निराकुर्वता भक्तेरीश्वरानपेक्षस्व-तन्त्रसाधनत्वेऽनादितो भक्त्यादिगुणस्य विद्यमानत्वात्पूर्वमेव मुक्तिः स्यादिति सूचितः ।) ॥ ३४ ॥

## एकाधिकरणम् III-3-35

**न्या.वि. — न चांशिमार्गस्यांशेनागम्यत्वात्तयोर्भेदः । साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेन भुज्यमानत्वात् । अन्यथाऽदृष्टं विना शरीरानुपपत्तेः ॥ ३५ ॥**

भा.बो.— ॐ एक आत्मनः शरीरे भावात् ॐ ॥ इत्यत्र योग्यायोग्यक्रियादर्शनादुपासनादिकं किं योग्यतापेक्षं न वेति सन्देहे नेति पूर्वः पक्षः । योग्यतापेक्षमिति सिद्धान्तः । तत्र 'अगम्यवर्त्म' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चांशिमार्गस्येति ॥ अंशिनि ज्ञानिनि सुखिनि दुःखिनि चांशे ज्ञानाद्यभावेनांशिमार्गस्यांशेनागम्यत्वादित्यर्थः । अंशांशिनोर्भेदाभावे ज्ञानादिभेदो न स्यादिति भावः । न चांशांशिनो-र्भिन्नत्वेनांशिनोऽनादित्वेऽप्यंशस्योत्पत्तिसम्भवादिन्द्रादिजीवांशानामर्जुनादी-नामेवोत्पत्तिमत्त्वेन तद्धर्मभूतयोग्यताया अनादित्वासम्भवान्न तत्सापेक्षत्वमिति नेति भावः । (अयं च न्यायः, 'व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्' इत्यत्र तज्ज्ञानादिभेदे विद्यमानेऽपि, अंशांशिनोर्भेदं निराकुर्वता ज्ञानादिभेदादंशस्यांशिमार्गगन्तृत्वादिति सूचितः ।) तद्धेतुत्वेन 'साधनोत्तमता'



इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ साधनोत्तमस्येति ॥ अंशः, अंशिनो भिन्नो न भवति, तद्गतसुखदुःखाद्यनुसन्धातृत्वात् । यो यद्गतसुखदुःखाद्यनुसन्धाता स तदभिन्नः । यथा सम्प्रतिपन्न इति प्रयोगोऽत्राभिप्रेतः । नन्वंशस्यांशिगत-सुखदुःखाद्यनुसन्धानमेवासिद्धम् । तथात्वेऽर्जुनादेरिन्द्राद्यभिमतखाण्डवदाहादौ प्रवृत्त्यभावापत्तेरित्यत उक्तम्- उत्तमेति । यद्यप्यंशकृताल्पसाधनजन्यफले ज्ञानादावंशिनोऽनुसन्धानं नास्ति तथापि प्रधानोपासनादिफलानुसन्धानमस्त्येव । अंशगतज्ञानादेरंशिनाऽनु- भूयमानत्वात् । अंशिगतसर्वाननुसन्धानस्येश्वरा-चिन्त्यशक्त्यायत्तत्वात् । तथा च नास्माभिरंशिगताशेषसुखाद्यनुसन्धातृत्वं हेतूकृतम् । येनासिद्धिः । किं त्वननुसन्धानमात्रम् । तच्चास्तीति भावः । नन्वंशस्यांशिगतसुखाद्यनुसन्धातृत्वेऽपि तयोर्भेद एवास्तु । विपक्षे बाधकाभावात् । इत्यत (त्र) आह ॥ अन्यथेति ॥ अंशांशिनोर्भेदेंऽशानां शरीरेण सहोत्पत्तौ तच्छरीरजनकादृष्टस्य पूर्वमाश्रयाभावेऽदृष्टाख्यकारणं विना शरीरेन्द्रियाद्युत्पत्त्यनुप-पत्तेरित्यर्थः । अत्रांशिमार्गस्यांशेन गम्यत्वं सर्वथा चेदसिद्धम् । एकदेशेन चेदन्यथासिद्धमिति भावः । एवं च साधनोत्तमस्यांशेनानुभूयमानत्वात् अंशांशिनोरभेद एवेति युक्तोपासनादावनादियोग्यतापेक्षेति भावः । (अयं च न्यायः 'आत्मनः शरीरे' इत्यनेनांशिकर्मनिर्मितशरीरे विद्यमानत्वादित्यर्थकेन सूचितः ।) ॥ ३५ ॥

## अङ्गावबद्धाधिकरणम् III-3-36

**न्या.वि.— न च गुणान्तरसन्धानस्य क्वापि दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अप्यङ्गदेवतान्तरे उपसंहर्तव्याः । नानागुणत्वेन तेषां श्रुतिषु दृष्टेः । अनिषिद्धगुणानां वाक्यान्वयन्यायेनोपसंहारात् 'न शाखासु' इत्यादिविशेषः । उत्तमेष्वधमगुणापेक्षया "मन्त्रादिवद्वे"ति ॥ ३६ ॥**

भा.बो.— ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ इत्यत्र ब्रह्मोपासनविधेरङ्गदेवतोपासनसाहित्यासाहित्यसाधारण्याद्भगवदुपासनमङ्गदेवतोपासनायुक्तं वा कर्तव्यमुत केवलं वेति सन्देहे केवलमिति पूर्वः पक्षः ।

अङ्गदेवतोपासनायुक्तमिति सिद्धान्तः । तत्रापि भगवदुपासनस्याङ्गदेवतासाहित्येन कर्तव्यत्वे, उपासनस्य गुणोपसंहारपूर्वकत्वाल्लौकिकपुरुषपूजादौ द्वैविध्यदर्शनेन किमेकस्य श्रुतिप्रतिपादिता गुणाः सर्वेषूपसंहर्तव्या न वेति सन्देहे उपसंहर्तव्या इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'सन्धानम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च गुणान्तरेति ॥ अथ गुणानामुत्तमेषूपसंहारस्य सिद्धान्तेऽप्यङ्गीकारात्समाधिकेत्युक्तम् । अयमर्थः । यद्यङ्गदेवतासाहित्येन ब्रह्मोपासनं कर्तव्यं तर्हि उपासनाया गुणोपसंहारपूर्वकत्वाद्गुणान्तराणां देवत्वादीनां सन्धानस्यानुसन्धानस्योपसंहारस्य सर्वेषु देवेषु दर्शनमात्रेण समाधिकाङ्गदेवतान्तराणां सूर्याद्यङ्गदेवताभ्यो भिन्नानां ब्रह्मरुद्रादीनां ये गुणाः सूर्याद्ययोग्यास्तेऽप्यङ्गदेवतान्तरे सूर्यादावुपसंहर्तव्याः स्युः । न चैवम् । तस्माद्बाधकोपेतात् 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, पूजयेन्नान्या देवता' इत्यादेरन्यदेवतोपासननिषेधात्केवलमेव ब्रह्मोपासनं कर्तव्यमिति । एवं च देवतान्तरगुणस्य देवतान्तरेऽनुसन्धानप्राप्त्याऽङ्गदेवानामनुपास्यत्वात्तदभिधायकवेदवैयर्थ्यमिति नेति भावः । अयं च न्यायो 'मन्त्रादिवद्वा' इत्यनेन अधमगुणानामुत्तम उपसंहारोक्त्या, कस्यचिद्गुणस्यानुसन्धाने सर्वेषामेव गुणानामनुसन्धानं न स्यादिति सूचितः ।) तद्धेतुत्वेन 'नानादृष्टिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ नानागुणत्वेनेति ॥ परस्परविलक्षणगुणत्वेन तेषमाङ्गदेवतानां श्रुतिषु दृष्टेरित्यर्थः । ततश्च सूर्याद्यसम्भावितगुणवत्त्वेन ब्रह्मरुद्रादीनां उत्तमत्वादुत्तमसम्बन्धिगुणानां चाधमेष्वयोग्यत्वाद्ब्रह्माद्यङ्गदेवतागुणजातं सूर्यादिषु नोपसंहार्यं किं तु योग्यमेवेति भावः । ननु 'न शाखासु हि प्रतिवेदम्' इति वेदप्रतीतगुणानामुपसंहाराभावमभिधाय मन्त्रादिवद्वेति कथं तद्विरुद्ध उपसंहारोऽभिधीयते'' इत्याशङ्कापरिहारार्थं तयोर्विषयभेदमाह ॥ अनिषिद्धेति ॥ ब्रह्मरुद्रादिगुणानां सूर्यादावयोग्यत्वेऽपि तत्रानिषिद्धानां योग्यानां गुणानां वाक्यान्वयन्यायेन 'यथा खलु भगवत्प्रतिपादक 'सहस्रशीर्षा पुरुषः' इत्यादिवाक्यानां सर्वेषामन्यत्र चतुर्मुखादौ सम्बन्धाभावेऽपि 'हिरण्यगर्भः समवर्तताग्रे' इत्यादीनां तद्योग्यानां सम्बन्धस्तथेत्यनेन' न्यायेनोपसंहाराद्धेतोः । न शाखास्वित्यादौ आदिपदेन प्रतिवेदमिति सूत्रशेषस्य, समत्वाद्वेति स्मृतेश्च



ग्रहणम् । विशेषः- अयोग्यगुणोपसंहाररूपविशेषः, निषेधविषय इत्यर्थः । 'ऋते तत्र प्रसिद्धाश्च' इत्युग्भाष्योपपादितप्रकारेण यथाऽग्न्याद्यधमदेवताविषयमन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेनाधीयते, उत्तमानां तत्प्रतिपाद्यत्वात् । एवमुत्तमेषु ब्रह्मादिष्वधमानां रुद्रादीनां गुणानामुपसंहारे न कश्चिद्दोष इत्यधमगुणापेक्षया मन्त्रादिवद्वेति सूत्रप्रवृत्तिरित्यर्थः । एवं च न्यायदृष्ट्या यथायोग्यमेवाङ्गदेवतोपासनं कर्तव्यमिति भावः । (अयं च न्यायः 'समत्वात्' इतिसूचितसूचकेन हिशब्देन सूचितः ।) ॥ ३६ ॥

## भूमज्यायस्त्वाधिकरणम् III-3-37

**न्या.वि. — न च भूमगुणस्योपासकं प्रति विशेषाभावेऽपि तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यविशेषः। 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते' इत्यादिशिष्टेः ॥ ३७ ॥**

**भा.बो.—** ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ इत्यत्र सर्वोपास्यसर्वानुपास्यगुणदर्शनाद्भागवत्सम्बन्धी भूमगुणः सर्वोपास्यो न वेति सन्देहे नेति पूर्वः पक्षः । सर्वोपास्य इति सिद्धान्तः । तत्र 'इष्टं फलम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भूमगुणस्येति ॥ उपासकं प्रति भूमगुणस्य सम्भृत्यादिभ्योऽनुपास्यत्वेन विशेषाभावेऽपि तस्य उपासकस्य इष्टा अपेक्षिताः ये आनन्दादयो गुणाः तदनुसारेणतदुपासनानुसारेण, फलस्य- इष्टस्याऽऽनन्दादेरुपपत्तिरित्यतो हेतोः प्रियशिरस्त्वादिगुणवदानन्दादिविशेषणत्वेऽपि भूमगुणस्यानुपास्यत्वेन प्रियशिरस्त्वाद्यविशेष इत्यर्थः । अनेनानुव्याख्याने इष्टमित्येतत् सप्तसु प्रथमेति सूत्रात्तृतीयान्तत्वेन प्रथमान्तत्वेन च तन्त्रेणोपात्तमिति व्याख्यातं भवति । एवं चेष्टेनोपासितेन विष्ण्वानन्दादिनेष्टं जीवस्याविर्भूतानन्दादिरूपं कथमुपपद्यत इति इष्टफलस्यान्यथासिद्धेर्भूमत्वमनुपास्यमिति नालौकिकतयोपासनमिति नेति भावः । (अयं च न्यायो 'ज्यायस्त्वम्' इत्यनेन दृष्टानामानन्दादिगुणानां भूमत्वेन सहोपासने एतत्फलं भवति नान्यथेति भूमस्य ज्यायस्त्वं वदता भूमत्वं विना नैतेनोपासितेन गुणेन फलमिति सूचितः ।)

तद्धेतुत्वेन 'शिष्टिः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ भूमैव देव इति ॥ 'तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः' इति शेषः । श्रुतियोजना तु, हि- यस्मात्, परमो देवो भूमा- भूमत्वेनानुपासितः, एषामुपासकानां फलं नैव विधत्ते । तस्माद्यथा क्रतुः कर्ममध्ये विशिष्टः तथा भूमगुणो गुणराशितो विशिष्टः । ततो भूमत्वेनैवोपास्य इति शिष्टेःशासनात्, उपास्य इति विधेरिति यावत् । अत्र पूर्वपक्षहेतोरसिद्धिरभिप्रेता । एवं च भूमत्वानुपासने फलाभावेन फलार्थं भूमैव देव इति भूमत्वोपासनशिष्टेः न भूमत्वस्य सम्भृत्याद्यविशेषः । किं तु भूमत्वं सर्वैरुपास्यमिति न लौकिकतयोपासनमिति भावः । (अयं च न्यायः 'तथा च दर्शयति' इत्यनेनोक्तः ।) ॥ ३७ ॥

## नानाशब्दाधिकरणम् III-3-38

**न्या.वि. — न च भूमगुण उपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यम् । विशेषस्य कल्पनोपपत्तेरिति न मन्तव्यम् ।**

**यावानेवाधिकारेषु विशेषोऽनून एव हि ।**
**ततो भूमत्वदृष्टौ च ब्रह्मादीनां पृथक्पृथक् ॥**

**इति विशेषस्यानूनत्ववचनात् ॥ ३८ ॥**

भा.बो.— ॐ नानाशब्दादिभेदात् ॐ ॥ इत्यत्र एकानेकप्रकारतया दृश्यमानवस्तुप्रतीत्या भूमगुणः किमधिकारिणां तारतम्येन प्रतीयते उतैकप्रकारेणवेति सन्देहे एकप्रकारेणेति पूर्वः पक्षः । तारतम्येनेति सिद्धान्तः । तत्र 'अकल्पना' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भूमगुण इति ॥ उपासकानामित्युक्त्या प्रतीयते इत्यत्रोपासने इति लक्ष्यते । कुत इत्यत आह ॥ विशेषस्येति ॥ विशेषकल्पनानुपपत्तेरित्यर्थः । केषाञ्चित्सम्यक्पूर्णानन्द इति केषाञ्चित्किञ्चित्पूर्णानन्द इत्युपासनस्य मिथ्योपासनत्वेनायोगादित्यर्थः । एवं च भूमत्वे विशेषस्याकल्पनाद्भूमत्वमेकप्रकारेणैव प्रतीयत इति नोक्ततारतम्यं युक्तमिति नेति भावः । (अयं च



न्यायः नानेत्यनेन भूमत्वस्य नानाप्रकारत्वोक्त्या असम्भवेनाविशेषकल्पनादिति सूचितः ।) तद्धेतुत्वेन 'अनूनता'इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यावानिति ॥ ब्रह्मादीनामुपासनाधिकारेषु यावानेव विशेषः तारतम्यरूपः । ततो विशेषादनून एव विशेषः भूमत्वावान्तरविशेषः । भूमत्वदृष्टौ ब्रह्मादीनां पृथक्पृथगेव प्रतीयते । यद्वा, तस्मात् ब्रह्मादीनामधिकारेषु विशेषस्तारतम्यरूपोऽनून एव । ततो हेतोर्यावानेव भूमगुणतो विशेषो भूमत्वदृष्ट्या विषयीकर्तुं योग्यस्तावान्पृथक्पृथगेव ब्रह्मादीनां प्रतीयत इति योजना । विशेषस्य उपास्यानन्दादिगुणविशेषणीभूतभूमत्वविशेषस्य । ब्रह्माद्यधिकारिविशेषापेक्षयाऽनूनत्वस्यानुसारित्ववचनादित्यर्थः । अनेन पूर्वपक्षहेतोरसिद्धिरुक्ता भवति । न च भूमत्वे विशेषानुपपत्तेः कथमसिद्धिरिति वाच्यम् । अतीतवत्सराणां मासानां चानन्त्येऽपि विशेषवद्भूमत्वेऽपि विशेषोपपत्तेः । रुद्रादिभिर्भूमत्वोपासने चतुर्मुखादियोग्यभूमत्वनिषेधान्नान्यथोपासनमपीति भावः । एवं च भूमत्वविशेषस्याधिकारादनूनतयाऽधिकारिणां युक्तं तारतम्यमिति भावः । (अयं च न्यायः, 'शब्दादिभेदात्' इत्यनेन यावानेवाधिकारेष्वित्यादिप्रमाणानुसारेण प्रतीयत इति सूचितः।) ॥ ३८ ॥

## विकल्पाधिकरणम् III-3-39

**न्या.वि. — न च शुद्धमोक्षसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यता । अविघ्नतासाधनत्वात् ॥ ३९ ॥**

भा.बो.— ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ इत्यत्र बिम्बोपास्तेरनवधारणात् भगवदुपासनस्य स्वबिम्बातिरिक्तरूपविषयत्वे स्वबिम्बमात्रविषयत्वे वोपपन्नतया भगवदुपासनं मुमुक्षूणां स्वबिम्बातिरिक्तरूपविषयं कर्तव्यं न वेति सन्देहे नेति पूर्वः पक्षः । स्वमोक्षसाधनातिरिक्तं नरसिंहाद्युपासनं कर्तव्यमेवेति सिद्धान्तः । तत्र 'शुद्धवैरूप्यम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च शुद्धेति ॥ शुद्धस्य निष्कामस्य मोक्षसाधनबिम्बोपासनस्य, वैरूप्यात् विघ्नकरत्वेन विरुद्धत्वात्,

मोक्षसाधनोपदिष्टं बिम्बोपासनं विना विष्णौ विष्णुविषय एव । एवकारेण कर्तव्यत्वेन प्राप्तिं सूचयति । उपासनान्तरस्य बिम्बातिरिक्तरूपोपासनस्येत्यर्थः । एवं च बिम्बातिरिक्तोपासनस्य शुद्धवैरूप्यादकर्तव्यत्वेन तदभिधायकवेद-वैयर्थ्यमिति नेति भावः । (अयं च न्यायो 'विकल्पः' इत्यनेन विघ्नादिभावे कर्तव्यं तदभावे न कर्तव्यमिति विघ्नाल्पोक्त्या कर्तव्यतानियमे बिम्बोपासनविलम्बहेतुत्वेन शुद्धवैरूप्यमिति सूचितः।) तद्धेतुत्वेन 'अविघ्नत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अविघ्नतेति ॥ न विद्यते विघ्नो यस्य, तस्य भावोऽविघ्नता । विशिष्टमोक्षस्येति शेषः । ततश्च मोक्षसाधनबिम्बोपासनानन्तरं क्रियमाणस्य बिम्बातिरिक्तनसिंहाद्युपासनस्य विशिष्टमोक्षप्रतिबन्धकदु-रितनिवर्तकत्वेन विशिष्टमोक्षस्याविघ्नतासाधनत्वाच्छुद्धवैरूप्यं तस्यासिद्धमिति भावः । एवं चाविघ्नताहेतुत्वेन बिम्बातिरिक्तमप्युपास्यमिति न तद्विद्यावैयर्थ्यमिति भावः । (अयं च न्यायः 'विशिष्टफलत्वात्' इत्यनेन नृसिंहाद्युपासनस्य बिम्बोपासनानन्तरभावित्वेन दुरितादिनिवृत्तिलक्षणमोक्षोपयोगिफल - साधनत्वमिति सूचितः।) ॥ ३९ ॥

## काम्याधिकरणम् III-3-40

**न्या.वि. — न च काम्यसाधनानामपि गुणानामङ्गत्वा-देवोपसंह(हारक)र्तव्यतानियमः । अनुपसंहारे विरोधाभावात् । काम्यानामनियताङ्गत्वाच्च । 'अर्थादिधर्मसिद्धौ हि न निय-त्याङ्गमिष्यते' इति ब्रह्मतर्के ॥ ४० ॥**

भा.बो. — ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ इत्यत्र आवश्यकवैकल्पिकोपासनप्रतीत्या कामसाधनभगवद्रूपगुणविषयमुपासनं किमावश्यकं वैकल्पिकं वेति सन्देहे आवश्यकमिति पूर्वः पक्षः । वैकल्पिकमिति सिद्धान्तः । तत्र 'अङ्गत्वम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च काम्यसाधनानामिति ॥ आदिपदं नृसिंहत्वादिसमुच्चयार्थम् । बिम्बगुणसमुच्चयार्थं वा । अङ्गत्वान्मोक्षसाधनज्ञानसाधनार्थादिफलोपसनविषयत्वेन मोक्षोपयोगित्वात् । एवकारेण तदुपासनस्यावश्यकत्वं सूचयति ।



सिद्धान्तवैषम्यप्रदर्शनार्थं नियम इत्युक्तम् । एवं च काम्योपासनस्य मोक्षाङ्गत्वेनावश्यकत्वाद्वच्यर्थः प्रथमपाद इति नेति भावः । (अयं च न्यायः 'हेत्वभावात्' इत्यनेन अर्थस्य ज्ञानाङ्गकत्वग्राहकान्वयव्यतिरेकरूपहेत्वभावादिति वदता सूचितः।) तद्धेतुत्वेन 'अविरोधः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अनुपसंहार इति ॥ स्वबिम्बोपासनेनैव ज्ञानसिद्धौ ज्ञानासिद्धिरूपविरोधस्य नृसिंहाद्युपासन इव विशिष्टमोक्षप्रतिबन्धकदुरितनिवृत्त्यभावरूपविरोधस्य चाभावादित्यर्थः । साधकाभावाच्च न नियम इत्याह ॥ काम्यानामिति ॥ ज्ञानं प्रति अर्थादीनामनियताङ्गत्वादित्यर्थः । अर्थादिकं विनापि ज्ञानोत्पत्तेः । क्वचिदर्थे सत्यपि ज्ञानानुत्पत्तेरन्वयव्यतिरेकव्यभिचारादिति भावः । अत्र प्रमाणमाह ॥ अर्थादीति ॥ धर्मपदेन ज्ञानमप्युपलक्ष्यते । क्वचिदर्थादिना धर्मासिद्धेः नियत्येत्युक्तम् । एवं च काम्यगुणानामनुपसंहारे विरोधाभावात् काम्योपासनस्य वैकल्पिकत्वात् सार्थक्यं वैराग्यपादस्येति भावः । (अयं च न्यायो 'हेत्वभावात्' इत्यादिनैव विरोधफलहेत्वभावादिति वदता सूचितः।) ॥ ४० ॥

## अङ्गाधिकरणम् III-3-41

**न्या.वि. — न च देवादीनामिति तत्रैव विशेषवचना-भावाद्ब्रह्मा शिरसि ललाटे रुद्र इत्यादीनां नावश्योपास्यता देवादीनामेव । 'ध्यायेदङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणामुक्तौ देवानां भवन्ति ते हि तादृशास्ते हि हरेरनुरूपाः' इति श्रुतेर्गुणवैशेष्यात् ॥ ४१ ॥**

भा.बो. — अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ इत्यत्र भगवदङ्गाश्रितत्वेन श्रुतिवचनस्य तथोपासनेऽनुपासनेऽपि सम्भवात् ब्रह्मादीनां भगवदङ्गाश्रित-त्वेनोपासनं मुमुक्षुणा कर्तव्यं न वेति सन्देहे न कर्तव्यमिति पूर्वः पक्षः । कर्तव्यमिति सिद्धान्तः । तत्र 'अविशेषदृशिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च देवादीनामिति ॥ देवादीनामेवेति कर्तरि षष्ठी । 'आनन्दादयः प्रधानस्य' इति सिद्धान्ते मनुष्याणां चतुर्गुणव्यतिरिक्तगुणोपासनानिषेधात् देवानामिति विशिष्योक्तम् । तत्रैवं ब्रह्मा

शिरसि ललाटे रुद्र इत्यादिवाक्योक्तब्रह्माश्रयशीर्षत्वादीनां देवादिभिरेव नावश्योपास्यतेति भावः । एवं च भगवदङ्गाश्रितदेवोपासनं देवैः कर्तव्यमिति विशेषवचनाभावादितरेषां तत्राधिकाराभावान्निरधिकारिकमेव प्राप्तमिति नेति भावः। (अयं च न्यायः 'समाहारा(च)त्' इत्यनेन 'ध्यायेत्' इति श्रुतिसूचकेन विशिष्टगुणरूपफलानुसारेण देवानामेवाधिकारसिद्धेरित्यर्थकेनाङ्गदेवतोपासने देवानामिति विशेषतोऽधिकारस्यानुक्तत्वादिति सूचितः।) तद्धेतुत्वेन 'गुणवैशेष्यम्' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ ध्यायेदिति ॥ अङ्गदेवताः पर(म)स्याङ्गेषु तत्तदङ्गोत्पन्नत्वेन तत्तदाश्रितत्वेन ध्यायेत् । एतद्ध्यानं देवानामेव कुत इत्यत उक्तम् ॥ विशिष्टा हीति ॥ हि यस्मात्, देवानामेव मुक्तौ विशिष्टा गुणाः परमस्थानत्वप्रभृतयो भवन्ति । तर्हि फलार्थिभिः सर्वैरेतदुपासनस्य कर्तव्यत्वे देवानामेवेति कथमित्यत उक्तं ॥ ते हीति । हि यस्मात् ते देवाः, तादृशाः उक्तफलयोग्याः । तदपि कुत इत्यत उक्तं ॥ ते हि हरेरिति ॥ गुणवैशेष्यात् देवादीनामेवेत्यत्रापि सम्बध्यते । तेनोत्तराधिकरणस्य देवव्यतिरिक्तविषयत्वसूचनेन विरोधपरिहारोऽपि सूचितः । ततश्च हर्यनुरूपत्वपरमस्थानप्राप्तिलक्षणफलयोग्यत्वादिगुणानां देवानामेव वैशेष्यात्तेषामेवोक्तोपासनायामधिकार इत्यर्थः । एवं च देवानां गुणवैशेष्यात्तेषामेवाङ्गदेवतोपासनेऽधिकार इति सार्थक्यं तद्विद्यानामिति भावः । (अयं च न्यायः 'समाहारात्' इत्यनेनैव सूचितः।) ॥ ४१ ॥

## न वाऽधिकरणम् III-3-42

न्या.वि. — न च क्रियात्वादुपासनायाः अग्निष्टोमादिवत्प्रतिशाखं वक्तव्यता ।

उपासना यजनं चेति साम्यं तत्तद्विशेषान्संहरेत्सर्वतश्च ।
तथा कर्तॄणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च सार्थाः ॥
इत्युपासनाविशेषाणां त्वधिकारिविशेषाणां चागमेऽवगमात् ॥ ४२ ॥

इति श्रीमन्न्यायविवरणे तृतीयाध्यायस्य तृतीयः पादः ॥



भा.बो. — ॐ न वा तत्सहभावश्रुतेः ॐ ॥ इत्यत्र कर्तव्याकर्तव्योपासनप्रतीत्या भगवदङ्गाश्रितत्वेनोपासनं कर्तव्यं न वेति सन्देहे नेति पूर्वः पक्षः । देवैरेव कर्तव्यमिति सिद्धान्तः। तत्र 'क्रिया' इत्युक्तपूर्वपक्षन्यायं साक्षात्पूर्वपक्षसाधकत्वसूचनाय तत्साध्यप्रदर्शनपूर्वकं विवृणोति ॥ न च क्रियात्वादिति ॥ अङ्गदेवतोपासनायाः कर्तव्यत्वे क्रियात्वादग्निष्टोमादिवत्प्रतिशाखं सर्वशाखासु वक्तव्यता स्यादिति शेषः । न चैवम् । तस्मात्प्रतिशाखमनुक्तेः नाङ्गदेवतोपासनं कैरपि कर्तव्यमिति नेति भावः । (अयं च न्यायः सर्वशाखागतोपासनसहपाठाभावेन व्यवस्थितविकल्पं समर्थयता सूत्रेण सर्वोपास्यत्वे क्रियात्वात्सर्वैरवश्यकर्तव्यत्वात्सर्वत्र वक्तव्यता स्यादिति सूचितः।) तद्धेतुत्वेन 'आगमः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ उपासनेति ॥ यद्यप्युपासना यजनं चेत्यनयोः क्रियात्वेन साम्यं तथापि तद्विशेषाच्चतुर्मुखाश्रयशीर्षत्वादिभगवद्धर्मविशेषात् सर्वतः प्रतिपादकशाखाभ्यः संहरेत् । उपसंहृत्योपासीत च । कुत इत्यत उक्तम्– तथा कर्तॄणामिति । विक्षिप्य तत्रोक्तानां चतुर्मुखाश्रयशीर्षत्वादिभगवद्गुणानां उपसंहृत्योपासनाकर्तॄणां तत्फलानां तेषां तदुपासनफलानां विशेषात्कर्तॄणां परमप्राप्त्यादि विशेषाद्धेतोः । प्रतिशाखमनुक्तत्वादेवंविधोपासनस्याकरणमेव किं न स्यादित्यत उक्तम्– व्यर्था हीति । हि यस्मात्, अन्यथा अङ्गाश्रितत्वेन देवतोपासनस्य सर्वथा कर्तव्यत्वे शाखाः 'ब्रह्मा शिरसि ललाटे रुद्रः' इत्यादिका व्यर्थाः । एवं च देवैः कर्तव्यत्वे तदुपासनस्य 'शाखाः सार्थाः सप्रयोजनाः' इत्याद्यागमेनोपासनाविशेषाणां तत्र तत्रोक्तचतुर्मुखाश्रयशीर्षत्वादि-गुणोपसंहारपूर्वकं कृतोपासनानामधिकारिविशेषाणां देवादीनां चशब्दात्फलविशेषाणां चावगमादित्यर्थः । अधिकारिविशेषाणामिति वदता प्रतिशाखमनुक्तेर्निमित्तान्तरं सूचितं सर्वैः कर्तव्यमिति । अनेन पूर्वपक्षहेतोरन्यथासिद्धिरपि ज्ञापिता । एवं चागमेनाङ्गदेवतोपासनस्य देवैरेव कर्तव्यतावगमाद्युक्तं तद्विद्यानां सार्थक्यमिति भावः । (अयं च न्यायो 'दर्शनाच्च' इत्यनेनोक्तः।) ॥ ४२ ॥

इति श्रीमन्न्यायविवरणभावबोधे तृतीयाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः

### पुरुषार्थाधिकरणं असार्वत्रिक्याधिकरणं च III-4-1,2

**न्या.वि. —** न च ज्ञानिन औदार्यात् मोक्षादन्यफलेच्छाया एवासम्भवात्तदुक्तिः प्रशंसामात्रमिति वाच्यम् । प्रायशो न सम्भवत्येव । कस्यचित्सौभर्यादिवद्भवति चेत् ज्ञानेनैवाशेषमीप्सितं भवतीति व्यवस्थोपपत्तेः ॥ १-२ ॥

**भा.बो.—** उपासनाजनितभगवदपरोक्षज्ञानसामर्थ्यप्रतिपादनार्थमयं पादः प्रवृत्तः । एतत्पादान्तर्गताधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः ।

औदार्यमुच्चावचशक्तिरात्मस्वरूपदार्ढ्यं च निजस्वभावः ।
स्वातन्त्र्यमापूर्णविशेषयोग्यता विरोधहानिश्च चतुर्थपादे ॥
व्यवस्थितिस्त्वविशेषस्थितिश्च निषेधसामान्यविधिक्रियाणाम् ।
विभक्तता चात्वरयैव सिद्धिर्विपक्षसम्प्राप्तिविरोधहेतवः ॥ इति ।

ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ इत्यत्र ज्ञानस्य निरवधारणतया मुक्तिं प्रति साधनत्वोक्तेः ज्ञानस्य मुक्तिमात्रसाधनत्वे मुक्तिस्वर्गादिसाधनत्वे च सम्भवात् ब्रह्मज्ञानं किं मोक्षमात्रसाधनं उत फलान्तरस्यापीति सन्देहे ज्ञानं मोक्षमात्रसाधनमिति पूर्वः पक्षः । मोक्षस्वर्गादिसमस्तपुरुषार्थ-साधनमिति सिद्धान्तः । तत्र 'औदार्यम्' इत्युक्तपूर्वपक्षन्यायं साक्षात्परम्परासाध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च ज्ञानिन इति ॥ औदार्यात् विरक्तत्वात् । बुध्द्या विवेकेन मोक्षादन्यफलेत्येतत्सप्तम्यन्तं सत् औदार्यादित्यनेनापि सम्बध्यते। तदुक्तिः



'ज्ञानादेव स्वर्गः' इत्यादिरूपा ज्ञानस्य मोक्षेतरपुरुषार्थ-साधनत्वोक्तिः । प्रशंसामात्रम् - ज्ञानस्य प्रशस्तत्वज्ञापन-परैवेत्यर्थः । तथा च 'परीक्ष्य लोकान्' इत्यादिश्रुतिस्मृतिभ्यां ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाभावस्य प्रमितत्वात् । 'ज्ञानादेव स्वर्गः' इत्यादिवाक्यस्य प्रशंसामात्रत्वस्य कल्पनीयत्वेन ज्ञानस्य स्वर्गादिहेतुत्वे प्रमाणाभावात् ज्ञानस्य मोक्षमात्रसाधनत्वान्नैतत्सर्वथाऽऽपाद्यमिति नेति भावः । (अयं च न्यायः 'शब्दात्' इत्यनेन श्रुतौ, विशुद्धसत्वो ज्ञानी यं यं लोकं मनसा यदीच्छति तर्हि तं तं लोकं प्राप्नोतीति व्यवस्थोक्त्या ज्ञानिनो विरक्तत्वरूपौदार्यवत्त्वेन मोक्षातिरिक्तफलेच्छाभावादिति सूचनेन सूचितः।) तद्धेतुत्वेन 'व्यवस्थितिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ प्रायशः इति ॥ न सम्भवत्येव ज्ञानिनो मोक्षान्यफलेच्छेति वर्तते । कस्यचिज्ज्ञानिनः । सौभर्यादी-नामनेकदेहधारणेन स्त्रीभोगादिमोक्षेतरपुरुषार्थेच्छायाः पुराणेषु प्रसिद्धत्वात्सौभर्यादिवदित्युक्तम् । भवति चेदित्यत्रापि मोक्षादन्यफलेच्छेति सम्बध्यते । ज्ञानेनैव तत्तत्साधनत्वेन विहितकर्मणेव ब्रह्मापरोक्षज्ञानेनैव अशेषमभीष्टं भवतीत्यनेन प्रकारेण 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्', प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्' इत्यादेर्ज्ञानिनां वैराग्यप्रतिपादकश्रुतिस्मृत्यादिवाक्यस्य प्रायेण ज्ञानिनां स्वर्गेच्छाभावपरत्वेन, 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः' इत्यादिज्ञानिनामपि मोक्षादन्यफलेच्छाप्रतिपादकस्य श्रुत्यादि-वाक्यस्य च तदिच्छोपेतसौभर्यादिविषयत्वेन व्यवस्थोपपत्ते-रित्यर्थः । एवं च व्यवस्थित्या वाक्ययोर्विरोधाभावेन न ज्ञानादेवेति वाक्यस्य प्रशंसामात्रस्याकल्प्यत्वेन तेनैव ज्ञानस्याशेषपुरुषार्थसाधनत्वसिद्धेः सर्वथा तदापाद्यमिति भावः । (अयं च न्यायः 'शब्दात्' इत्यनेनैव व्यवस्थाप्रतिपादकश्रुति-ग्राहकेण सूचितः।) ॥ १ ॥

**भा.बो.—** ॐ असार्वत्रिकी ॐ ॥ इत्यत्र लौकिकसाधने सर्वाधिकारिकत्वैकाधिकारिकत्वप्रतीत्या ब्रह्मज्ञानं सर्वाधिकारिकं न वेति सन्देहे

सर्वाधिकारिकमिति पूर्वः पक्षः । नेति सिद्धान्तः । यद्यप्येतदधिकरणसम्बन्धित्वेन पूर्वोत्तरपक्षन्याययोर्विवरणं न कृतं तथापि पूर्वाधिकरणसम्बन्धित्वेन विवृतयोरौदार्यव्यवस्थित्योरेतदधिकरणसम्बन्धित्वमपि ज्ञातव्यम् । तथा हि । औदार्यं नामोत्कृष्टत्वम् । ततश्च ज्ञानफलस्य मोक्षस्य निर्दुःखानन्दाद्यात्मकत्वरूपौदार्यात्सर्वेषां तदर्थित्वसम्भवात्सर्वेषामपि श्रवणादिसामर्थ्यात्तदुपयोगिविद्वत्त्वरूपौदार्यादर्थी समर्थो विद्वान् साधनेऽधिक्रियत इति सर्वेषामप्यस्ति ज्ञानेऽधिकार इति पूर्वपक्षन्यायगमनिका । (अयं च न्यायो 'विभागः शतवत्' इत्यनेन नवकोटिदेवानां देवत्वसाम्येऽपि परापरब्रह्मार्थित्वसाम्येऽपि अध्ययनवतामेवाधिकारो नान्येषामिति विभागकथनेनार्थित्वादेरप्रयोजकत्वकथनात्सूचितः।) अर्थित्वादिसाम्येऽपि न सर्वेषां ज्ञानाधिकारः । किं तु यथाश(क्य)त्त्यखिलाध्ययनवत्वेन विशेषणान्तरेण युक्तस्यैवेति व्यवस्थोपपत्तेरिति सिद्धान्तन्यायगमनिका । (अयं च न्यायो 'विभागः' इत्यनेनैवोक्तः।) ॥२॥

## अविशेषाधिकरणम् III-4-3

**न्या.वि.— न चाधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात्फलभेदोपपत्तेरधिकारविशेषकल्पनं व्यर्थम् । भक्त्याद्यधिकारानुसारेण शास्त्रात्फलप्राप्तेः सर्वेषामविशेषात् । दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्य । उच्चावचशक्तेरपि तन्निबन्धनत्वात् । ॥ ३ ॥**

भा.वो.— ॐ नाविशेषात् ॐ ॥ इत्यत्र लौकिकसाधनेष्वेकप्रकारानेकप्रकारत्वदर्शनाद्ब्रह्मज्ञानाधिकारः किं देवानामेकप्रकारः उतानेकप्रकार इति संशये एकप्रकार इति पूर्वः पक्षः । अनेकप्रकार इति सिद्धान्तः । तत्र 'उच्चावचशक्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाधिकार इति ॥ ननु 'प्रज्ञान्तरपृथक्त्ववद्दृष्टिः' इति ज्ञानतारतम्यस्योक्तत्वात्तदधिकारेऽपि तारतम्यं कल्पनीयमित्यत उक्तम्– अधिकारे समेऽपीति । तथा चाधिकारे स्वाभाविके समेऽपि तेषामधिकारिणामुच्चावचशक्तिरूपाद्योगात् उपायादेव



फलभेदस्य ज्ञानलक्षणफलतारतम्यस्योपपत्तेः । फलभेदस्य कल्पकत्वाभावादधिकारिविशेषस्य भक्त्यादिमत्वलक्षणस्याधिकारस्य यो विशेषस्तस्य स्वाभाविकदेवत्वर्षित्वमनुष्योत्तमत्वरूपस्य कल्पनं व्यर्थमित्यर्थः । एवं चाधिकारिणामुच्चावचशक्तियोगाज्ज्ञानतारतम्यस्योपपत्तेरेकप्रकार एव ज्ञानाधिकार इति न ज्ञानमतिशयवदिति नेति भावः । (अयं च न्यायः फलभेदेनाधिकारभेदं समर्थयतोदाहृतसूत्रेण फलभेदस्योच्चावचशक्त्यैवोपपत्ते- रधिकारभेदकल्पनसूचकेन सूचितः) तद्धेतुत्वेन 'अविशेषः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ भक्त्यादीति ॥ आदिपदेनाध्ययनादिकं गृह्यते । शास्त्रात् विचारितात् ध्यानद्वारा फलस्य ज्ञानस्य प्राप्तिः । सर्वेषां देवानामधिकारिणामविशेषादविशिष्टत्वान्न त्वेकस्यापि भक्त्याद्यधिकारानुसारेण फलप्राप्तिः । येन व्यभिचाराद्भक्त्याद्यधिकारस्य ज्ञानकारणता न स्यादित्यर्थः । यद्वा सर्वेषां देवादीनां ज्ञानस्येति शेषः । अविशेषप्रसङ्गाद्भक्त्याद्यधिकारानु- सारेणैव शास्त्रात्फलप्राप्तेर्ग्राह्यत्वादित्यर्थः । भक्त्याद्यधिकारतारतम्ये कार्यवैचित्र्यरूपमनुमानमुक्त्वा प्रत्यक्षमप्याह ॥ दृश्यमानत्वाच्चेति ॥ यद्वा 'अथे'त्यादिश्रुताविति शेषः । अनुमाने पूर्वपक्षोक्तान्यथासिद्धिं परिहरति ॥ उच्चावचशक्तेरिति ॥ तन्निबन्धनत्वात् भक्त्याद्यधिकारतारतम्यनिबन्धनत्वात् । अधिकारतारतम्यमन्तरेण तत्कारणाभावादिति भावः । यथोक्तं प्राक् ।

स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते ।
कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेत् ॥

इति । एवं च विशेषप्रसङ्गादधिकारतारतम्यानुसारेण ज्ञानप्राप्तिरिति सम्पूर्णज्ञानाधिकारस्य सर्वसुलभत्वाभावात्सातिशयं तदिति भावः । (अयं च न्यायो 'विशेषात्' इत्यस्यावृत्तौ सत्यामधिकारस्य विशेषज्ञानस्य विशेषः स्यादित्यर्थकेनोक्तः ।) ॥ ३ ॥

## स्तुत्यधिकरणम् III-4-4

**न्या.वि. — न च ज्ञानिनामात्मस्वरूपदार्ढ्यात्सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेषः । एतावतोऽधिका नास्ति प्राप्तिरित्यन्ततः स्थिता ।**

**या स्थितिस्तां समाप्नोति यथाशक्ति प्रयत्नतः ।**
**विपरीतप्रवृत्तेस्तु तस्य ह्रासोऽधिकं भवेत् ॥**

**इति वचनात् स्थितिविशेषोपपत्तेः ॥ ४ ॥**

भा.बो.— ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ इत्यत्र लोके सदसत्प्रवृत्त्या 'विशेषदर्शनात्तुल्यं'त्वित्युक्त्या च भगवज्ज्ञानिषु सदसत्प्रवृत्त्या विशेषोऽस्ति वा न वेति सन्देहे नेति पूर्वः पक्षः । अस्तीति सिद्धान्तः । तत्र 'आत्मस्वरूपदार्ढ्यम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च ज्ञानिनामिति ॥ आत्मस्वरूपदार्ढ्यात् आत्मस्वरूपाविर्भूतानन्दादिलक्षणस्य दार्ढ्यात् निश्चितत्वात् सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेषः सत्प्रवृत्तिसम्पाद्यातिशयस्यासत्प्रवृत्तिप्रतिबध्यस्य मोक्षातिरिक्तस्याभावादिति भावः । यद्वा ज्ञानिनामात्मस्वरूपदार्ढ्यात्स्वरूपस्य मोक्षभाक्त्वेन मोक्षो भविष्यति न वेति शङ्काशून्यत्वादित्यर्थः । एवं चाद्याधिकरणोक्तमयुक्तमिति भावः । (अयं च न्यायः 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इत्यनेन सूचितः।) तद्धेतुत्वेन 'अस्थितिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ एतावत इति ॥ यस्य यावत्स्वरूपानन्द इति निर्णीत एतावत आनन्दादेरधिका प्राप्तिः ततोऽधिकानन्दादेः प्राप्तिरिति यावत् । सा नास्ति न भवति । किं तु, 'यात्यन्ततः निष्कृष्टतया स्थितिः स्वरूपानन्दादेः स्थिता प्रमाणेन व्यवस्थिता तां स्थितिं यथाशक्ति प्रयत्नतो ज्ञानोत्तरकृतस्वभक्त्यनुसारिसत्प्रवृत्त्या समाप्नोति अधिकं यथा भवति तथा विपरीतप्रवृत्तेरसत्प्रवृत्तेस्तस्यानन्दादेः ह्रासो भवेत्' इति वचनात्सत्प्रवृत्त्या स्थितिविशेषस्य, ज्ञानानभिव्यक्तानन्दाद्याविर्भावलक्षणस्यासत्प्रवृत्त्याऽसुराणां स्वरूपापेक्षयाऽधिकतया सेवादिप्राप्तस्यानन्दादेरप्राप्तिरूपस्य नृणां यावत्स्वरूपानभिव्यक्तिरूपस्य ह्रासलक्षणस्योप-



पत्तेरित्यर्थः । एवं चाऽऽद्याधिकरणोक्तं युक्तमिति भावः ॥ (अयं च न्यायः 'शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्, 'अपि स्मर्यते' 'शब्दश्चातोऽकामचारे, 'विहितत्वाच्चाश्रमकर्मापि' इति सूत्रचतुष्टयेन सूचितः।) ॥ ४ ॥

## उभयलिङ्गाधिकरणं आधिकारिकाधिकरणं च III-4-5,6

**न्या.वि. — न च सर्वजीवानामेकप्रकार एव निजस्वभावश्चैतन्यमिति फलेऽप्यविशेषः । निषेधसामान्यविधिक्रियाणां विभक्तत्वात् । 'नादेवो देवपदमन्विच्छेदन्विच्छन् यात्यधरं तमः । न देवः स्वीयं पदमन्विच्छन्विदुष्यति । तदेव ह्यस्य स्वम्' इति निषेधविभागः । 'स्थिरं ज्ञानं स्थिरो हरावभिषङ्गः स्थिरमोजो बलं विराग एतद्धि सामान्यं देवानाम् । अन्येषामस्थिराण्येतानि सर्वाण्यथापि यथायोगं विनेयानि'इति सामान्यविभागः । 'ज्ञानदानमेव देवानां विहितम् । तप एवर्षीणाम् । आचार एव मनुष्याणां तदविरोधेनान्यानि करणीयानि'इति विधिविभागः । 'चरन्ति देवा विहितं समस्तमर्धमेव मुनयो दशांशतो मनुष्याः' इति क्रियाविभागः ।**

**॥ ५-६ ॥**

भा.बो.— ॐ सर्वथापि तु त एवोभयलिङ्गात् ॐ ॥ इत्यत्र लोकेऽर्थादिसाधनस्याधिकार्यनधिकारिप्राप्यत्वदर्शनाद्भगवदपरोक्षज्ञानं किमधिकारिभिरेव प्राप्यते उतानधिकारिभिरपीति सन्देहेऽनधिकारिभिरपि प्राप्यत इति पूर्वः पक्षः । अधिकारिभिरेव प्राप्यत इति सिद्धान्तः । 'न चाधिकारिकमपि पतनानुमानात्तदयोगात्' इत्यत्र लोके राजादिपदस्यामात्यादिभिरपि प्राप्यत्वदर्शनाद्भगवदपरोक्षज्ञानस्याधिकारिभिरेव प्राप्यत्वोक्तेश्चतुर्मुखादिपदानि किमन्यैः प्राप्यन्ते उत तत्पदयोग्यैरिति सन्देहे अन्यैरपीति पूर्वः पक्षः । तद्योग्यैरेव प्राप्यन्त इति सिद्धान्तः । तत्र 'निजस्वभावः'

इत्युक्तन्यायमेतदधिकरणद्वयपूर्वपक्षसम्बन्धित्वेन तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सर्वजीवानामिति ॥ सर्वजीवानां योग्यायोग्यानाम् । न केवलं जीवानाम् । स्वाभाविकभूतचैतन्ये एकप्रकारतैव न त्वनेकप्रकारता इति एवशब्दार्थः, किं तु सर्वेषु यच्चैतन्यं तदेव स्वाभाविकं न तु देवत्वादिकमपीत्यप्येवशब्दस्यार्थः । फलेऽपि अपरोक्षज्ञाने ब्रह्मादिदेवतापदे चेत्यर्थः । साधनसमुच्चयेऽपिशब्दः । चैतन्याविशेषसमुच्चये वा । अधिकारमात्रप्राप्यत्वलक्षणविशेषाभावः ।

अयं भावः । ज्ञानं देवतापदं चाधिकारिभिरेव प्राप्यमिति न नियमः । वेदाद्यनधिकारिणामपि प्रयत्नेन वेदादिप्राप्तेर्दर्शनात् । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति' इत्यादिना देवतापदादेः प्रयत्नसाध्यत्वोक्तेश्च महाप्रयत्नेन सर्वैः प्राप्तुं शक्यत्वात् । ननु देवत्वादिकं स्वाभाविकमिति चेन्न । प्रयत्नसाध्यत्वश्रवणेन चैतन्यव्यतिरिक्तस्य स्वाभाविकत्वाभावात् । चैतन्यस्य सर्वसाम्यात् । स्वाभाविकत्वेऽप्यौत्पत्तिकक्षत्रियत्वाभिभवेन विश्वामित्रस्य महाप्रयत्नसाध्यविप्रत्ववन्महता प्रयत्नेन स्वभवाभिभवेन ज्ञानपदयोरयोग्यैरपि प्राप्यत्वात्तेषामपि मोक्षप्रसङ्ग इति नेति भावः । (अयं च न्यायः 'सर्वथापि' इत्यनेनात्मस्वरूपस्यात्माव्यभिचरितस्येच्छाप्रयत्नादेर्दार्ढ्यस्य महत्त्वस्याप्रयोजकत्वं वदता सूचितः।) यद्वा 'सर्वथापि' इति (सर्वार्थत्वादिति) सूत्रे जीवस्वभावस्य नानाप्रकारत्वोक्त्या सूचितः ।) (अयं च न्यायो 'न चाधिकारिकम्' इत्यनेन देवतापदं नाकाङ्क्ष्यमिति वदता सर्वजीवानां निजस्वभावश्चैतन्यमेकप्रकारमेवेति देवादिपदं योग्यप्राप्यमिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'निषेधसामान्य-विधिक्रियाणां विभक्तता' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ निषेधेति ॥ अयं भावः । ज्ञानपदयोरधिकारिमात्रप्राप्यत्वमिति नियम एव । तत्तत्प्रयोजकचैतन्य-व्यतिरिक्तदेवत्वादेरपि स्वाभाविकत्वात् । न च प्रयत्नेन स्वाभाविकस्याभिभवः । 'दैवीमेव' इत्यादिश्रुत्यादिनाऽनभिभवस्य प्रमितत्वात् । देवादीनां निषेधसामान्य-विधिक्रियाविभागेन प्रयत्नस्यैवायोगात् । कस्यचित् कथंचित्प्रयत्नेच्छादौ विरोचनादिभिर्मिथ्याज्ञानस्यैव प्राप्तेः 'न देवपदमन्विच्छेत्' इत्यादिना पाताद्यनर्थोक्तेश्चेति । देवतापदविषये विधिनिषेधसामान्यक्रियाविभागपराः



श्रुतीरुदाहरति ॥ नादेव इत्यादिना । अदेवस्य देवतापदं नान्विच्छेदितीच्छानिषेधः। देवस्य तु इच्छन्न वि(दू)दुष्यतीति (दोषनिषेध) दोषनिषेध इति विभागो द्रष्टव्यः। कुतो न (दू)दुष्यतीत्यत उक्तम्– तदेव ह्यस्य स्वमिति । (अन्यथेत्युक्तमेव विवृणोति– स्थिरमिति ।) तर्हि ज्ञानादिलोपेन मोक्षो न स्यादित्यत उक्तम्– अन्येषामिति । विनेयानि– आपाद्यानि ।

उपलक्षणं चैतत् । अपरोक्षज्ञानविषये तु दैवीमेव सम्पत्तिमिति असुराजातेरेवासुरत्वमिति, न सुराणां दैवं रूपमिति च निषेधविभागपराः । शृण्वे वीर इति, ततः कनीयसा एव देवा ज्यायांसोऽसुरा असुरान्दमयन्विष्णुरिति, असुरा आसुरेणैवेति च सामान्यविभागपराः । 'तं भूतिः' इत्याद्याः क्रियाविभागपरा अपि श्रुतिस्मृतयो भाष्योदाहृता द्रष्टव्याः । अधिकरणद्वयसम्बन्धप्रदर्शनार्थमेव सामान्यतो न्यायविवरणं कृतम् । ननु सामान्यन्यायत्वात्कथं द्वितीयाधिकरणस्योत्थानमिति चेन्न । सर्वथापीत्यधिकरणे ज्ञानमात्रस्याधिकारिमात्रप्राप्यत्वस्य विवक्षितत्वात् । न चाधिकारिकमित्यत्र तदाक्षेपाभिप्रायेण स्वधर्मनिष्ठ इत्यादिविशेषवाक्यबलोत्पन्नाद्यादेवादिपदस्य प्रयत्नप्राप्यत्वशङ्कायाः परिहारात् । अत एव तत्वप्रकाशिकायाम् । 'अतो ज्ञानमप्ययोग्यप्राप्यफलम्' इति पूर्वपक्षफलं दर्शितम् । एवं च निषेधसामान्यविधिक्रियाणां विभक्तत्वादपरोक्षज्ञानब्रह्मादि पदयोरधि-कारिमात्रप्राप्यत्वमिति भावः । (अयं च न्यायः 'अनभिभवम्' इत्यादिसूत्रषट्केन ज्ञानमोक्षयोः सुरेष्वेव स्थितेरज्ञानतमसंसारसुरेष्ववस्थितेर्मिश्रत्वस्य मनुष्येष्ववस्थि-तेर्नाऽनधिकारिणां ज्ञानमोक्षप्राप्तिरिति वदता सूचितः । यद्वा अयं च न्यायः 'अनभिभवम्' इत्यादिसूत्रषट्केन निषेधसामान्यक्रियाविभागप्रतिपादकेन विधिविभागोपलक्षकेण सूचितः । एतन्न्यायसम्बन्धप्रदर्शनार्थमेवोक्तं तत्व-प्रकाशिकायां उत्तराधिकरणे, 'अतो ज्ञानमप्ययोग्यप्राप्यम्' इति ।) ॥ ५ ॥

अयं च न्यायो 'न चाधिकारिकम्' इति, 'उपपूर्वमतपि' इति 'बहिस्तु' इति सूत्रत्रयस्य निषेधविभागप्रतिपादकस्यान्यविभागोपलक्षकत्वात्सूत्रत्रयेण सूचितः ।) ॥ ६ ॥

## फलश्रुत्यधिकरणम् III-4-7

न्या.वि. — न च स्वातन्त्र्याद्देवानामेव ज्ञानादिफलं, न किञ्चिदन्येषामिति वाच्यम् ।

त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु ।
देवानां तत्प्रसादेन मुक्त्यारेव सतां नृणाम् ॥

इति मानुषमुक्त्यर्थमेव देवानामत्वरया सिद्धिश्रुतेः ॥ ७ ॥

भा.बो.— ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ इत्यत्र प्रयोजकत्वकर्तृत्वाभ्यां भगवज्ज्ञानं किं देवानामेव फलप्रदं प्रजानां वेति सन्देहे देवानामेवेति पूर्वः पक्षः । देवादीनां प्रजानामपीति सिद्धान्तः । तत्र 'स्वातन्त्र्यम्' इत्युक्तपूर्वपक्षन्यायं तत्फलप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च स्वातन्त्र्यादिति ॥ स्वातन्त्र्यात् इन्द्रियादिप्रेरकत्वेन स्वामित्वात् । देवानामेवेत्येतत्पूर्वोत्तराभ्यां सम्बध्यते । लोके च स्वामिन एव फलदर्शनादिति भावः । एवकारव्यावर्त्यमाह ॥ न किञ्चिदिति ॥ अन्येषां प्रजारूपकर्तॄणां कर्तुरप्यस्वामिनः फलाभावदर्शनादिति भावः । नान्येषामिति वक्तव्ये यन्न किञ्चिदन्येषामित्याह । तेन चेतनादिरूपेणापि न प्रजानां ज्ञानफलं पृथग्दीयमानत्वादिति सूचयति । एवं च देवानामेव स्वातन्त्र्यात्तेषामेव फलप्राप्तिरित्यनियमः सर्वेषामित्युक्तानुपपत्तिरिति नेति भावः । तद्धेतुत्वेन 'अत्वरयैव सिद्धिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ त्वरयैवेति ॥ देवानामत्वरया सिद्धौ निमित्तमाह– तत्प्रसादेनेति । तत्प्रसादेन– तेषां देवानां प्रसादेन–इन्द्रियादिप्रेरणेन मुक्त्यर्थमेवेति । (अनेन 'मुक्त्या एव' इति तादर्थ्ये चतुर्थीत्युक्तं भवति ।) देवानां त्वरया सिद्धौ मनुष्याणामिन्द्रियादिप्रेरणाभावेन ज्ञानाद्यलाभाच्च मुक्तिर्न स्यादिति भावः । एवं च मनुष्यमुक्त्यर्थमेव देवानामत्वरया सिद्धेर्मनुष्याणामपि ज्ञानफलमोक्षप्राप्तिरित्युक्तं युक्तम् ।) ॥७॥



## कृत्स्नभावाधिकरणम् III-4-8

न्या.वि. — न च गृहस्थानामशेषकर्मविशेषयोग्यत्वादाधिक्यं मुक्तौ । त्वरयैव गृहिणः साधयन्ति मुक्तिमत्वरयैव यतयस्तेभ्यश्चात्वरया देवास्तेषु च ब्रह्मा । तदेष श्लोकः ।

शतं परानभिपश्यैव देवं ब्रह्माऽचरद्दुश्चरं यत्तपोऽग्र्यम् ।
विहाय रागं मनसश्चोपरिष्टं ततोऽभवत्परमेष्ठी स मुक्तौ ॥
इति ।

'यो हि त्वरया साधयेत्स मन्दं सुखमाप्नुयात् । यो ह्यत्वरया स महत्' इति श्रुतेर्गृहिभ्यो यतीनां तेभ्यो देवानामत्वरया सिद्धेः । बहुकालसाधनाद्बहुकर्माधिकारमात्रस्य दुर्बलत्वात् ॥ ८ ॥

भा.बो.— ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥ इत्यत्र लोके समविषमफलोपेतपुरुषदर्शनादाश्रमभेदभिन्ना मनुष्याः किं सर्वेऽपि मोक्षे समा उत तारतम्योपेता इति सन्देहे गृहस्थो मुक्तावुत्तम इति पूर्वः पक्षः । सर्वाश्रमिषु यतिरेवोत्तम इति सिद्धान्तः । तत्र 'आपूर्णविशेषयोग्यता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च गृहस्थानामिति ॥ 'आपूर्णता' इत्यस्यार्थोऽशेष इति । न ह्यन्याश्रमिणां कृत्वादावधिकारोऽस्तीति भावः । एवं चापूर्णकर्मविशेषयोग्यत्वाद्गृहस्थानामेवोत्तमत्वमिति न ज्ञानमतिशयितमिति नेति भावः । तद्धेतुत्वेन 'अत्वरयैव सिद्धिः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ त्वरयैव गृहिण इति ॥ देवेषु मध्ये चतुर्मुखस्यात्वरयैव सिद्धिप्रदर्शनार्थं श्लोकः । शतं परानिति । मनसश्च रुद्रादप्युपरिष्ठः स प्रसिद्धो ब्रह्मा देवं विष्णुमभिपश्यैव शतं परान् ब्रह्मकल्पान् मनसो रागं विहाय दुश्चरं तपोऽग्र्यं यद्यस्मादाचरत्, ततो मुक्तौ परमेष्ठी सायुज्यभाक्त्वाद्यतिशयवानभवदिति योजना । अत्वरोपपादनार्थमपरोक्षज्ञानप्राक्तनतपोव्यावृत्त्यर्थमभिपश्यैवेत्येवकारः । एतावतापि कथं यतीनां गृहस्थेभ्य उत्तमत्वमित्यत उक्तम् ॥ यो हीति ॥ ननु यतीनां तपःकालबाहुल्यवद्गृहस्थानां कर्मबाहुल्यात्साम्यमेव स्यादित्यत आह ॥ बहुकालेति ॥ गृहिणां

बहुकर्माधिकारमात्रसद्भावेऽपि तदाचरणनियमाभावादिति भावः । अनेन पूर्वपक्षहेतोर्बाधितविषयत्वमुक्तं भवति । एवं च यतिमोक्षस्यात्वरयैव सिद्धेर्ज्ञानप्रचुराणां यतीनामेवोत्तमत्वमिति युक्तो ज्ञानस्यातिशाय इति भावः । (अयं च न्यायो गृहस्थमोक्षापेक्षया यतिमोक्षस्यात्वरयैव सिद्धेर्यतीनामेवोत्तमत्वमित्यभिप्रेत्य तत्र बाधकमुद्धरता 'कृत्स्नभावात्' इति सूत्रेण सूचितः ।) ॥८॥

## अनाविष्काराधिकरणम् III-4-9

**न्या.वि.— न चाविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यास्थानचत्वरादिषु स्थित्वैव प्रकथनीयम् । न ह्येवं त्वरमाणे सिद्धिर्भवति । अयोग्यानामपि श्रवणप्रसङ्गात् । तस्माद्विचार्य योग्यानामेवात्वरयैव कथयित्वा सिद्धिर्भवति । 'त्यक्त्वा त्वरां ब्रह्मविद्यां वदेत जनाय योग्याय सदैव विद्वान्' इति श्रुतेः । 'मानस्तेनेभ्यः' इत्यादेश्च ॥ ९ ॥**

भा.बो.— ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ इत्यत्र ब्रह्मोपदेशस्याविष्कारेण गोप्येन चोपपत्तेर्ब्रह्मविषयकापरोक्षज्ञानसाधनमाविष्कारेणोपदेष्टव्यं न वेति सन्देहे आविष्कारेणेति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'आपूर्णविशेषयोग्यता' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चाविष्कारेणेति ॥ अनेनापूर्णानां सर्वेषां विशेषज्ञानयोग्यतेति न्यायो विवृतो भवति । स्थित्वैवेत्येवकारेणावश्यकत्वमाह । एवं च तस्य रहस्यत्वाद्यतिश(यि)तो न सिद्ध्यतीति नेति भावः । (अयं च न्यायः 'अनाविष्कुर्वन्' इत्यनेनाविष्कारेण चापूर्णविशेषयोग्यता स्यादिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'अत्वरयैव सिद्धिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ न ह्येवमिति ॥ व्याख्यानस्य व्याख्यातुर्विशेषज्ञानहेतुत्वात्तेन चापरोक्षज्ञानद्वारा मुक्तिरूपसिद्धिसम्भवात्सभाचत्वरादौ व्याख्यारूपत्वराकरणे सिद्धिः कुतो न भवतीत्यत आह ॥ अयोग्यानामपीति । अयोग्येषूपदेशस्यानर्थहेतुत्वेन न सिद्धिहेतुत्वमिति भावः । तर्हि केन प्रकारेणोपदेशे सिद्धिर्भवतीत्यत आह ॥ तस्मादिति ॥ विचार्य अधिकारिदेशकालाधिकम् । योग्यानामेव ज्ञानस्येत्यर्थः । विचारश्च त्वरया न



भवतीत्यत्वरयैवेत्युक्तम् । कथयित्वा स्थितस्य पुरुषस्य सिद्धिर्भवतीत्यर्थः । अत्र प्रमाणमाह ॥ त्यक्त्वेति ॥ योग्यायैवेत्येवशब्दसम्बन्धे अयोग्याय न वदेदित्यर्थात्सिध्यति । योग्येष्वेवोपदेशः कर्तव्यो नायोग्येष्वित्यत्र स्पष्टप्रमाणमाह ॥ मान इति ॥ आदिशब्देन 'मानस्तेनेभ्यो य अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । येषां नैतन्नापारं किं च नैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः । आदेवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुः' इति ऋग्द्वयग्रहणम् । तस्यार्थः । एतत् वायुं प्रति विद्यादेवतानां प्रार्थनम् । द्रोहास्पदेऽन्धे तमसि स्थातुं योग्या रामविरुद्धाः । अत एव तस्य रिपवोऽन्नेषु जागृधुः । भोगेष्वाकांक्षावन्तः । येषामेतत्परं ब्रह्म तदवरं च जगन्नास्ति । किन्तु किं च नैकं निर्गुणं ब्रह्मानिर्वाच्यं च जगत्तेभ्यः अस्मान् कदाचित् माब्रूहि । किं नाम ये शमेन विष्णुनिष्ठयोपरताः तस्मिन्नेव रता ये च देवानां विव्रयः वरत्वे सति नियामकं ब्रह्म वरश्चासौ यः नियामकश्चेति विग्रहः । वकारस्थाकारलोपोनिर्वचनत्वात् 'सप्तसु प्रथमा' इति द्वितीयायाः प्रथमा । हृदि व्योहते सम्यग्वहन्ति । साम्नस्तत्प्रतिपाद्यात् ब्रह्मणः परः परं च न विदुः । तेभ्यो नोऽस्मान् सदा ब्रूहीति । यद्वा मानस्तेनेभ्य इति ऋग्द्वयप्रतीकग्रहणम् । आदिपदेन विद्या ह वै ब्राह्मणमाजगामेत्यादेर्ग्रहणम् । एवं च त्वरयैव सिद्धेरनाविष्करेण ज्ञानसाधनस्योपदेष्टव्यत्वाद्युक्तस्तस्यातिशयः । (अयं च न्यायः 'अन्वयात्' इत्यनेन यत्र क्वचन त्वरया व्याख्याने सिद्धिर्भवतीति सूचनेन सूचितः ।) ॥ ९ ॥

## ऐहिकाधिकरणं मुक्तिफलाधिकरणं च III-4-10,11

**न्या.वि. — न च विरोधाभावात्साधनानुष्ठानजन्मन्येवापरोक्षज्ञानं मुक्तिश्चेति नियमः। प्रतिबन्धे सति तन्निरासेनात्वरयैव सिध्युपपत्तेः । 'यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य' इत्यादिश्रुतेः । 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति भगवद्वचनम् ॥ १०-११ ॥**

इति श्रीमन्न्यायविवरणे तृतीयाध्यायस्य चतुर्थः पादः ॥

**भा.बो.—** ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ इत्यत्र कृष्यादिसाधने साधनानुष्ठानजन्मन्येव यागादिसाधने च जन्मान्तरे फलदर्शनाच्छ्रवणादिसाधनं स्वसम्पत्तिजन्मन्येवापरोक्षज्ञानसाधनं किं जन्मान्तरे इति सन्देहे स्वसम्पत्तिजन्मन्येवेति पूर्वः पक्षः । स्वसम्पत्तिजन्मनि जन्मान्तरे चेति सिद्धान्तः । तथा

॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ इत्यत्र अदृष्टफलस्य साधनोत्पत्तिजन्मनि जन्मान्तरे च दर्शनाज्ज्ञानसाध्यो मोक्षः किं यच्छरीरे ज्ञानमुत्पन्नं तत्पातानन्तरमेव भवति उत नेति सन्देहे यद्देहे ज्ञानमुत्पन्नं तद्देहपातानन्तरमेवेति पूर्वः पक्षः । तद्देहपातानन्तरं देहान्तरं प्राप्य तत्पातानन्तरमपीति सिद्धान्तः । एतदधिकरणद्वयसम्बन्धित्वेन 'विरोधहानिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च विरोधाभावादिति ॥ प्रतिबन्धरूपविरोधाभावादित्यर्थः । साधनपदेनापरोक्षज्ञानसाधनं श्रवणादिकं मुक्तिसाधनमपरोक्षज्ञानं च ग्राह्यम् । श्रवणादिज्ञानसाधनापेक्षया अनुष्ठानेत्युक्तम् । सम्पूर्तिपरं वा । मुक्तिश्चेत्यत्र जन्मन्येवेति सामीप्याधिकरणे सप्तमी । नियम इति निष्कारणम् । कारणे सति कार्यानुदये कदाप्यनुदयः स्यादिति भावः । एवं च विरोधहान्या ऐहिकत्वेन प्राप्यस्य ज्ञानस्य तस्मिन्नेव जन्मन्यनुदयादनुदय इव तद्देहपातानन्तरमेव प्राप्यस्य मोक्षस्य तद्देहपातानन्तरमेवाभावात्कदापि स न स्यादित्यनियम इत्युक्तव्याघात इति नेति भावः । (अयं च न्यायः आद्याधिकरणे 'अप्रस्तुतप्रतिबन्ध' इत्यनेन प्रारब्धकर्मप्रतिबन्धकाभावे साधनसम्पत्तिजन्मन्येव ज्ञानं भवतीति वदता सूचितः । द्वितीयाधिकरणे तु एवमिति सूत्रांशेनाप्रस्तुतप्रतिबन्ध इत्यर्थकेन पूर्ववत्सूचितः ।) तद्धेतुत्वेन 'अत्वरयैव सिद्धिः' इत्युक्तमेव सिद्धान्तन्यायमधिकरणद्वयसम्बन्धित्वेन विवृणोति ॥ प्रतिबन्धे सतीति ॥ प्रारब्धकर्मणा प्रतिबन्धे जाते कर्मणि प्रतिबन्धके विद्यमाने वेत्यर्थः । अत्रात्वरयैवेत्येवकारः प्रतिबन्धसद्भावस्थलापेक्षयेति ज्ञातव्यम् । सिद्धिपदेन ज्ञानस्य मोक्षस्य च ग्रहणम् । ज्ञानोत्पत्त्यनियमे प्रमाणमाह ॥ यद्यारब्धमिति ॥ निबन्धकं– प्रतिबन्धकम् । प्रेत्यैवजन्मान्तरं प्राप्यैव । योगमेवान्ववेक्ष्य– पुनः किञ्चिच्छ्रवणादिकमप्यपेक्ष्य । ब्रह्म पद्यादित्यन्वयः । मुक्त्युत्पत्तिनियमे प्रमाणमाह ॥ अनेकजन्मेति ॥ अनेकजन्मसु संसिद्ध अपरोक्षज्ञानी सन् स्थितः । एवं 'मुक्तिफलानियमः' इत्यधिकरणस्य पूर्वाधिकरणातिदेशाधिकरणत्वादधिकरणद्वये एकेनैव वाक्येन पूर्वोत्तरपक्षन्यायविवरणं कृतमिति ज्ञातव्यम् । द्वितीयाधिकरणोत्थानं तु पूर्वाधिकरणवत् प्रतिबन्धकसत्वनिश्चयभावाभिमानेन पूर्वपक्षोत्थानादुपपद्यते । एवं च यथा ज्ञानस्य प्रतिबन्धकसद्भावेऽत्वरयैव सिद्धेः प्रतिबन्धकाभावे स्वसम्पत्तिजन्मन्येवेति तद्वत् ऐहिकत्वान्मोक्षस्यापि प्रतिबन्धकसद्भावेऽत्वरयैव सिद्धेः प्रतिबन्धकाभावे तद्देहपातानन्तरमेव जायमानत्वादुक्तं युक्तमिति भावः । (अयं च न्यायः आद्ये 'अप्रस्तुतप्रतिबन्ध' इत्यनेन प्रारब्धकर्मप्रतिबन्धेऽत्वरयैव सिद्धेर्भवतीति सूचितः । द्वितीये तु 'एवम्' इत्यनेन पूर्ववत्सूचितः ।) ॥ १०, ११ ॥



इति श्रीमन्न्यायविवरणभावबोधे तृतीयाध्यायस्य चतुर्थः पादः ॥

# चतुर्थाध्याये प्रथमः पादः

## आवृत्त्यधिकरणम् IV-1-1

**न्या.वि.— न च श्रवणाद्यनावृत्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुणः । महाफलत्वात्सर्वेषामशक्यताया एवोपपन्नत्वात् । अन्यथा सर्वसुशक्यस्यैव साधनतया सर्वेषां मोक्षापत्तेः ॥ १ ॥**

भा.बो.— फलप्रतिपादकेऽस्मिन्नध्याये पूर्वभाविकर्मक्षयाख्यमोक्षप्रतिं-पादनार्थोऽयं पादः प्रवृत्तः । एतत्पदीयाधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः ।

**सुशक्यता शश्वदतिप्रसिद्धिर्विवेकविन्यासविचारसंज्ञाः ।**
**नानाप्रवृत्तिः कृतकृत्यता च विपक्षतर्काः समतीतपादे ॥**
**महाफलत्वं प्रविविक्तता च सन्धिग्रहः साधनमाप्तकृत्यम् ।**
**विशेषकार्यं कृतसंस्थितिश्च सुयुक्तयो निर्णयगाः स्वपक्षे ॥**

ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ इत्यत्र उभयविधसाधनदर्शनेन श्रवणादिकं किं सकृदनुष्ठेयं उताऽऽवर्तनीयमिति सन्देहे ज्योतिष्टोमादिवत्सकृदनुष्ठेयमिति पूर्वः पक्षः । व्रीह्यवघातवदावर्तनीयमिति सिद्धान्तः । तत्र 'सुशक्यता' इत्युक्तपूर्व-पक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च श्रवणादीति ॥ अपरोक्षज्ञानोदयेऽभ्युपगते सतीति शेषः । सुशक्यत्वं ज्ञानस्येति शेषः । एवं च श्रवणाद्यनावृत्त्याऽपरोक्ष-ज्ञानाभ्युपगमे सकृच्छ्रवणाद्यनुष्ठानस्य सर्वसौलभ्येन सुशक्यत्वगुण-लाभात्तादृशश्रवणादिना चापरोक्षज्ञानाभावान्न श्रवणादिकमपरोक्षज्ञानसाधनमिति नेति भावः । (अयं च न्यायः 'आवृत्तिः' इत्यनेन सर्वेषां सुशक्यत्वादनावृत्त्यैव ज्ञानमिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'महाफलत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ महाफलत्वादिति ॥ ज्ञानस्येति शेषः । महत्फलं येनेति विग्रहो द्रष्टव्यः । ज्ञानस्य महाफलत्वेऽपि सर्वसुशक्यता कुतो नोपपन्नेत्यत आह ॥



अन्यथेति ॥ एवं च महाफलत्वाज्ज्ञानस्य श्रवणाद्यावृत्तिसाध्यत्वमिति युक्तं श्रवणादेः ज्ञानसाधनत्वमिति भावः (अयं च न्यायः 'असकृदुपदेशात्' इत्यनेन श्रवणादीनामज्ञाननिवृत्तिरूपमहाफलत्वाभावेऽसकृदुपदेशोऽपि न स्यादिति सूचितः ।) ॥ १ ॥

## आत्माधिकरणम् IV-1-2

**न्या.वि. — न च शश्वदतिप्रसिद्धत्वादात्मशब्दोदितं स्वामित्वं न नित्यशः उपास्यम् । अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्य ॥ २ ॥**

भा.बो.— ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥ इत्यत्र उपासनस्य नित्यशः कर्तव्यत्वेन गुणान्तरप्रतीत्या चात्मत्वं नित्यश उपास्यं न वेति सन्देहे नेति पूर्वः पक्षः । नित्यश उपास्यमिति सिद्धान्तः । तत्र 'शश्वदतिप्रसिद्धिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च शश्वदिति ॥ स्वामित्वमिति ॥ हरेर्जगतीति शेषः । शश्वदतिप्रसिद्धस्य नित्यमुपासनं व्यर्थमेव किं त्वप्रसिद्धगुणोपासनस्य ज्यायस्त्वेन तदेव नित्यशः कर्तव्यमिति भावः । फलसम्बन्धः स्फुटः । (अयं च न्यायः, 'आत्मशब्दप्रयोगादेवाऽऽत्मशब्दोदितस्वामित्वस्य शश्वदतिप्रसिद्धत्वादिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'प्रविविक्तता' इत्युक्तसिद्धान्तन्यायं सहेतुकं विवृणोति ॥ अन्येभ्य इति ॥ अन्येभ्यः उपासितानन्दादिगुणेभ्यः । अधिकफलत्वेन स्वावरस्वामित्वलक्षणाधिकफलत्वेन । आनन्दादिवत्स्वामित्वस्य सकलमुक्त-साधारण्यादिति भावः । अनेन प्रसिद्धस्यापि फलानुसारेणोपास्यत्वाच्छश्वदति-प्रसिद्धेर्न प्रयोजकत्वमुक्तं भवति । तथा च प्रविविक्तता नाम सविशेषत्वमिति विवरणं कृतमिति ज्ञातव्यम् । एवं च प्रविविक्तत्वादात्मत्वस्य सर्वदोपास्य-त्वमिति । (अयं च न्यायोऽवधारणार्थकतुशब्देन गुणान्तरपरित्यागेनात्मत्व-स्यैवोपास्यत्वोक्त्या सूचितः ।) ॥ २ ॥

## न प्रतीकाधिकरणम् IV-1-3

**न्या.वि. — तर्हि विशेषवत्त्वादेव प्रतीकमपीश्वर इत्युपास्यमिति न । तत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात् । अन्यस्येशत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेः ॥ ३ ॥**

भा.बो.— ॐ न प्रतीके न हि सः ॐ ॥ इत्यत्र 'नाम ब्रह्मेति' श्रुत्या प्रमाणसिद्धभेदेन च नामवागादिकं भगवत्प्रतीकं किं ब्रह्मत्वेनोपास्यं न वेति सन्देहे उपास्यमिति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'विवेकः' इत्युक्तपूर्वपक्षन्यायं तत्फलप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ तर्हीति ॥ ननु गुणोपासनस्याऽऽवश्यकत्वसमर्थनपराधिकरणयोर्मध्ये कथमस्याधिकरणस्य प्रवेश इत्यतः पूर्वाधिकरणसिद्धान्तरीत्यैतदधिकरणपूर्वपक्षोत्थानेन सङ्गतिसम्भवान्मध्ये निवेश इति ज्ञापयितुं तर्हीत्याद्युक्तम् । विशेषवत्वादिति । 'नाम ब्रह्मेत्युपास्ते यावन्नाम्नोपगतं तत्रास्य कामचारो भवति' इति श्रुतेः प्रतीके ब्रह्मत्वोपासनस्य फलाधिक्यसम्भवेन विशेषवत्वादित्यर्थः । यथा पूर्वाधिकरणे प्रसिध्यादेरप्रयोजकत्वमुक्त्वा फलमात्रस्योपासनाप्रयोजकत्वेनोपासनं समर्थितं तथाऽत्रापि प्रतीके ब्रह्मत्वोपासनस्य फलसम्भवात्फलस्यैवोपासनाप्रयोजकत्वेन भेदादेरप्रयोजकत्वात्प्रतीकं ब्रह्मत्वेनोपास्यमिति नेति भावः । (अयं च न्यायः 'न प्रतीके' इत्यनेन प्रतीके ब्रह्मदृष्टिं निषेधता 'यावन्नाम्नोपगतम्' इत्यादिविशेषफलत्वात्प्रतीके ब्रह्मदृष्टिः कार्येति सूचनेन सूचितः ।) तद्धेतुत्वेन 'सन्धिग्रहः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ यत्रेति ॥ अनेन 'सन्धिना उपपत्या ग्रहः अङ्गीकारः' इति विवृतो भवति । तथापि प्रकृते किमायातमित्यत आह ॥ अन्यस्येति ॥ प्रतीके ब्रह्मत्वोपासनस्य ग्राह्यत्वे उपपत्तिर्नास्तीति भावः । ननु फलाधिक्यरूपोपपत्तेरुक्तत्वात्कथं नेत्यतोऽप्याह ॥ अन्यस्येति ॥ ईश्वरादन्यस्येत्यर्थः । अनुपपत्तेः फलस्येति शेषः । उपलक्षणं चैतत् । अनर्थफलाचेति द्रष्टव्यम् । एवं चोपपन्नस्यैव ग्राह्यत्वात्प्रतीके ब्रह्मत्वोपासनस्यानुपपन्नत्वात्सकलस्वामित्वेन भगदुपासनं युक्तमिति भावः । (अयं च न्यायः 'न हि सः' इत्यनेन प्रतीके ब्रह्मत्वदृष्टेर्युक्तिविरुद्धत्वादिति वदता युक्तियुक्तस्यैव ग्राह्यत्वादिति सूचनेन सूचितः ।) ॥ ३ ॥



## ब्रह्मदृष्ट्यधिकरणम् IV-1-4

**न्या.वि. — न च प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति वाच्यम् । अशेषगुणान्तर्भावेन तस्यैवाधिकसाधनत्वात् ॥ ४ ॥**

भा.बो.— ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ इत्यत्र उपास्यानुपास्यगुणदर्शनेन भूमत्वरूपं ब्रह्मत्वं सर्वदोपास्यं न वेति सन्देहे नेति पूर्वः पक्षः । सर्वदोपास्यमिति सिद्धान्तः । तत्र 'विन्यासः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रतिदिनमिति ॥ वीत्यस्यार्थो विविधेति । न्यासेनेति ॥ उपसंहृत्योपासनेनेत्यर्थः । भगवत्प्रीत्युपपत्तेरिति ॥ सार्वकालिकब्रह्मतोपासनस्यापि भगवत्प्रीतिरेव फलमिति भावः ॥ ब्रह्मतेति ॥ अनेन सूत्रे ब्रह्मपदं भावप्रधानमित्युक्तं भवति । आत्मत्वोपासननियमवत् ब्रह्मत्वोपासनायामपि नियमः किं न स्यादित्यत उक्तम् ॥ नियम इति ॥ तद्वदत्र विशेषहेत्वभावादिति भावः । एवं च भूमत्वस्य सदोपास्यत्वाभावादुक्तज्यायस्त्वमयुक्तमिति नेति भावः (अयं च न्यायः 'ब्रह्मदृष्टिः' इत्यनेन ब्रह्मत्वोपासनस्यावश्यकर्तव्यत्वं समर्थयता सूचितः ।) तद्धेतुत्वेन 'साधनम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अशेषेति ॥ ब्रह्मत्व इति शेषः । अत्र सर्वगुणानां हि यतोऽन्तर्भाव इष्यत इति वचनात्तस्यैव ब्रह्मत्वोपासनस्यैवाधिकसाधनत्वात् गुणान्तरोपासनापेक्षयाऽधिक प्रसादहेतुत्वादित्यर्थः । एवं च ब्रह्मत्वोपासनस्यैवाधिकसाधनत्वात् ब्रह्मत्वं सदोपास्यमिति युक्तमिति भावः । (अयं च न्यायः 'उत्कर्षात्' इत्यनेन सर्वगुणान्तर्भावेन ब्रह्मत्वस्यैवोक्तत्वादिति वदता सूचितः ।) ॥ ४ ॥

## आदित्याधिकरणम् IV-1-5

**न्या.वि. — न च विविधस्थानेष्वादित्यादीनां चरणाद्विष्णवङ्गेष्वादित्यादिमतिनियमो नास्तीति वाच्यम् । तत्कृतावेव कृत्यस्याप्तत्वादादित्यादीनाम् ॥ ५ ॥**

भा.बो.— ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ इत्यत्र सदोपास्यानुपास्यगुणदर्शनात्स्वोत्पादकाङ्गाश्रितत्वेन देवैरुपासनं सर्वदा कर्तव्यं न वेति सन्देहे नेति पूर्वः पक्षः । सदा कर्तव्यमिति सिद्धान्तः । तत्र 'विचारः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च विविधस्थानेष्विति ॥ वीत्यस्यार्थो विविधस्थानेष्विति । सूर्यादिदेवानां विविधस्थानेषु चरणेन सदा चक्षुराद्यङ्गाश्रितत्वाभावात्तथोपासन-स्यानर्थफलहेतुत्वादित्यर्थः । एवं च विचारात्स्वोत्पादकाङ्गाश्रितत्वेन देवतोपासनस्याकर्तव्यत्वात्तद्धदात्मत्वमपि न सर्वदोपास्यमिति नेति भावः । (अयं च न्यायः 'उपपत्तेः' इत्यनेन विविधस्थानेषु चरणेऽपि रूपान्तरेण भगवदङ्गाश्रितत्वादादित्याद्याश्रयत्वेनोपासनमुपपद्यत इति वदता सूचितः) तद्धेतुत्वेन 'आप्तकृत्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तत्कृताविति ॥ आदित्यादिदेवानां स्वोत्पत्त्यङ्गाश्रितत्वेनोपासनकृतावेव तत्र देहलयद्वारा मोक्षलक्षणकृत्यस्याप्तत्वादाप्यत्वादित्यर्थः । देवानां तथोपासनस्याकरणे विष्ण्वङ्गे लयासम्भवेन मोक्षानुपपत्तेरित्यर्थः । न चान्यथोपासनप्रसङ्गादेतदयुक्तमिति वाच्यम् । आदित्यादीनां तत्कृतौ विविधस्थानचरणलक्षणकृत्यकृतावपि रूपान्तरेण विष्ण्वङ्गाश्रितत्व रूपकृत्यस्य प्राप्तत्वादिति भावः । एवं चाप्तकृत्यत्वाद्भगवदङ्गाश्रितदेवोपासनमावश्यकमिति भावः ।) अयं च न्यायः 'उपपत्तेः' इत्यनेनैव विविधस्थानेषु चरणेऽपि रूपान्तरेण भगवदङ्गाश्रितत्वरूप-कृत्यस्याप्तत्वादुपपद्यते तथोपासनमिति वदता सूचितः ।) ॥ ५ ॥

## आसीनाधिकरणम् IV-1-6

**न्या.वि. — न च ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति वाच्यम् । आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेः ॥ ६ ॥**

भा.बो.— ॐ आसीनस्सम्भवात् ॐ ॥ इत्यत्र द्विविधसाधनदर्शनेनासनं सर्वथाऽपेक्षितं न वेति सन्देहे नेति पूर्वः पक्षः । सर्वथाऽपेक्षितमिति सिद्धान्तः । तत्र 'संज्ञा' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥



न च ज्ञानस्येति ॥ ज्ञानस्येत्यस्य पूर्तेरित्यनेन सम्बन्धः । सम्यगित्यतः पूर्वं मनस इति शेषः । यद्वा ज्ञायतेऽनेनेति ज्ञानस्येत्यस्य मनस इत्यर्थो द्रष्टव्यः । संशब्दार्थः सम्यगिति ॥ तद्विषयत्वमात्रेणेति ॥ भगवद्विषयत्वेनैवेत्यर्थः । आदिपदेन 'समं कायशिरोग्रीवम्' इत्यस्य ग्रहणम् । एवं चासनाद्यभावेऽपि मनसो भगवद्विषयत्वमात्रेणापरोक्षज्ञानसम्भवाद्व्यर्थमासनादीति तदुपदेशाप्रामाण्य-मिति नेति भावः । (अयं च न्यायः 'सम्भवात्' इत्यनेनासने सत्येव चित्तविक्षेपाभावेनोपासनसम्भवात्तदभावे चित्तविक्षेपाभावसम्भवादिति वदता सूचितः ।) तद्धेतुत्वेन 'विशेषकार्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ आसनादिनेति ॥ निश्चलत्वादिति ॥ मनस इति शेषः । आदिपदेन 'अचलत्वं चापेक्ष्ये'ति सूत्रानुसारेण शरीराचलत्वं च ग्राह्यम् । मनसो निश्चलत्वादिकं विना सम्यग्भगवद्विषयत्वासम्भवेन ज्ञानस्यैवासम्भवादिति भावः । एवं चासनादिना विशेषकार्योपपत्तेरासनादिकमावश्यकमिति न तदुपदेशाप्रामाण्यमिति भावः ।) अयं च न्यायः 'अचलत्वं चापेक्ष्ये'ति सूत्रेण शरीराचलत्वद्वारा मनसोऽचलत्व-रूपकार्यविशेषं प्रति हेतुत्वमिति वदता सूचितः ॥ ६ ॥

## आप्रायणाधिकरणम् IV-1-7

**न्या.वि. — न चान्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्तिध्यानं कार्यमिति वाच्यम् । ध्यानं विनाऽपरोक्ष-ज्ञानाख्यविशेषकार्यानुपपत्तेः ॥ ७ ॥**

भा.बो.— ॐ आप्रायणात्तत्रापि हि दृष्टम् ॐ इत्यत्र ज्ञानसाधनत्वाज्ज्ञानिनामपि दर्शनात् ध्यानं किं ज्ञानपर्यन्तमेवावश्यकमुत मुक्तिपर्यन्तमिति सन्देहे ज्ञानपर्यन्तमेवावश्यकमिति पूर्वः पक्षः । मुक्तिपर्यन्तमपीति सिद्धान्तः । तत्र 'नानाप्रवृत्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चान्यस्यापीति ॥ नानेत्यस्य विवरणमन्यस्यापीति । एवं च ध्यानादन्यस्य श्रवणादिसाधनस्याप्यानन्दातिशयार्थं कर्तुं शक्यत्वान्न तदर्थं ध्यानमावश्यकमिति नेति भावः । (अयं च न्यायः 'आप्रायणात्' इत्यनेन ज्ञानपर्यन्तं ध्यानं ध्यानविषयं समर्थयता ध्यानं विना श्रवणादिसाधनान्तरस्यापि

वक्तुं शक्यत्वादनियम इति सूचनेन सूचितः) तद्धेतुत्वेन 'विशेषकार्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ ध्यानं विनेति ॥ उपलक्षणं चैतत् । ध्यानं विनाऽऽनन्दाद्यतिशयाख्यविशेषकार्यानुपपत्तेरित्यपि द्रष्टव्यम् । तेन ज्ञानपर्यन्तमवश्यं कर्तव्यत्वेऽपि मुक्तिपर्यन्तत्वं कुत इति शङ्का निरस्ता । आनन्दातिशये ध्यानस्यान्तरङ्गसाधनत्वादिति भावः । एवं चानन्दातिशयाख्य-विशेषान्मुक्तिपर्यन्तं ध्यानमावश्यकमिति भावः । (अयं च न्यायः 'तत्रापि हि दृष्टम्' इत्यनेन फलाभावेऽपि यदा ध्यानं कर्तव्यत्वेन प्रमितं तदा किमु वक्तव्यं फले सत्यवश्यं कर्तव्यमिति । (अयं च न्यायः) अपरोक्षज्ञानात्स्व-स्वज्ञानोत्तरश्रवणादिमात्रसाध्यस्यानन्दातिशयस्य विशेषकार्यस्य सद्भावात् ध्यानमावश्यकमिति सूचनेन सूचितः) ॥ ७ ॥

## तदधिगमाधिकरणम् IV-1-8

**न्या.वि. — न च ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिः, न चेत्कर्मक्षय इति वाच्यम् । प्रारब्धस्यैव कृतस्य यावद्भोगं संस्थितेः ।**

**कर्माणि क्षपयेद्विष्णुरप्रारब्धानि विद्यया ।**
**प्रारब्धानि तु भोगेन क्षपयन् स्वं पदं नयेत् ॥**

**इति वचनाच्च ॥ ८ ॥**

**इति न्यायविवरणे चतुर्थाध्यायस्य प्रथमः पादः ॥**

भा.बो.— ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ । इत्यत्र सकामनिष्कामकर्मणोर्मोक्षसाधनत्वासाधनत्वदर्शनाज्ज्ञानं मुक्तिसाधनं न वेति सन्देहे नेति पूर्वः पक्षः । मुक्तिसाधनमिति सिद्धान्तः । तत्र 'कृतकृत्यता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च ज्ञानोदय इति ॥ तदैव-ज्ञानानन्तरमेव मुक्तिः । स्यादिति शेषः । न चेष्टापत्तिः । जीवन्मुक्तानामुपलम्भादिति भावः । आपादकस्याप्रयोजकत्वं परिहरति ॥ न चेति ॥ मुक्तिरित्यत्रापि सम्बध्यते । यदि ज्ञानोदयेऽपि मुक्तिर्न स्यात्तर्हि कर्मक्षयो



न स्यात् । निष्कारणमवस्थानायोगादिति भावः । ननूत्पन्नं ज्ञानं तदैव न कर्म क्षिणोतीत्यापादकासिद्धिं वाऽऽशङ्क्य परिहरति ॥ न चेदिति ॥ ज्ञानोदयेऽशेषकर्मक्षय इत्यनुवर्तते । कर्मक्षय इति सप्तम्याः प्रथमान्तत्वेन विपरिणामः । तर्हीति शेषः । कर्मक्षयः कदापीति शेषः । ज्ञानस्य विरम्य व्यापारायोगादिति भावः । एवं च ज्ञानेनैवाशेषकर्मक्षये तदैव मुक्तिः स्यात् । न चैवम् । तस्मात्कर्मणां प्रतिबन्धकत्वेन ज्ञानस्य मोक्षसाधनत्वानियम इत्युक्तव्याघात इति नेति भावः । (अयं च न्यायः 'तदधिगम' इति सूत्रेण ज्ञानोदयानन्तरमेव पूर्वोत्तरपुण्यपापभाव्यश्लेषोक्त्या सर्वकर्मसम्बन्धाभावे कृतकृत्यत्वात्तदैव मुक्तिः स्यादिति सूचनेन सूचितः)

तद्धेतुत्वेन 'कृतसंस्थितिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ प्रारब्धस्यैवेति ॥ कृतस्य-कर्मणः । यदि ज्ञानोदय एव (न) मुक्तिः तर्हि ज्ञानेन कर्मक्षय एव न प्राप्नोतीत्युक्तमेवेत्याशङ्कापरिहारार्थमुक्तं ॥ प्रारब्धस्यैवेति ॥ अप्रारब्धस्यैव ज्ञानेन नाशो न सर्वस्येति भावः । एवं तर्हि प्रारब्धकर्मण एव प्रतिबन्धकत्वान्न मुक्तिः स्यादित्यत उक्तं ॥ यावद्भोगमिति ॥ ननु प्रारब्धकर्मणो भोगेन क्षयोऽन्यस्य ज्ञानेनेत्येतत्कुत इत्यत आह ॥ कर्माणीति ॥ एवं च ज्ञानोदयेऽपि प्रारब्धस्य कृतस्य यावद्भोगं स्थितत्वात्तदैव मोक्षो न भवतीत्युक्तं युक्तमिति भावः । (अयं च न्यायः 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते' इति सूत्रद्वयेन सूचितः) ॥ ८ ॥

इति न्यायविवरणे भावबोधे चतुर्थाध्यायस्य प्रथमः पादः ।

## अथ द्वितीयः पादः

### वागधिकरणम् IV-2-1

**न्या.वि. — न च 'वाक्पूर्वरूपं, 'मन उत्तररूपं, 'मनः पूर्वरूपं, 'वागुत्तररूपं, इत्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेव । 'वाक्पूर्वरूपं, 'मन उत्तररूपं, इति वाचः पूर्ववर्णदेवतात्वनिर्देश-मात्रेण 'मनः पूर्वं, इत्यनेन साम्यम् । 'मनसा वा अग्रे**

**सङ्कल्पयत्यथ वाचा व्याहरती' ति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रुत इति प्राधान्यं मनस एवेति हि ज्ञायते ।**

**सृष्टौ च विलये चैव सदा पूर्वप्रवर्तने ।**
**नियन्तृत्वे च वचसे मनोऽधीशं शिवो हि तत् ॥**

**इति श्रुतेश्च ॥ १ ॥**

भा.बो. — देवदेहलयमनुष्योत्क्रान्तिप्रतिपादनार्थोऽयं पादः प्रवृत्तः । एतत्पादीयाधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायां सङ्ग्रहेणोक्ताः ।

**व्यामिश्रता कार्यकरत्वमर्थक्लृप्तिः सुदार्ढ्यं परतन्त्रता च ।**
**समानधर्मः कृतशेषता च लोकोपमा पूर्वमतानुसाराः ॥**
**विशेषसाम्यश्रुतिराढ्यता च समानलोपो महिमाविशेषः ।**
**कृतार्थता शश्वदनुप्रवृत्तिः सिद्धान्तनिर्णीतिविशेषहेतवः ॥**

ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ इत्यत्र 'तत्पूरकत्वाद्वाच' इति वाचो मनोजातत्वोक्तिविशेषप्रमाणादर्शनाभ्यां वाङ्मनसि लीयते न वेति सन्देहे नेति पूर्वः पक्षः । मनसि लीयत इति सिद्धान्तः । तत्र 'व्यामिश्रता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च वागिति ॥ अनिर्णीतिर्वाङ्मनसयोर्नियम्यनियामकभावस्येति शेषः । तदधीनस्य तत्र लयो वक्तव्यः । एवं च वाङ्मनसयोर्नियम्यनियामकभावे प्रतिपादकोक्तेर्व्यामिश्रत्वेन तदनिर्णयान्न मनसि वाचो लय इति मोक्षाभावादनियम इत्युक्तव्याघात इति नेति भावः । (अयं च न्यायः दर्शनाच्छब्दाच्चेत्यनेन, वाक्पूर्वरूपमिति श्रुत्यपेक्षया मनः पूर्वरूपमिति श्रुतेः सयुक्तिकश्रुत्यानुकूल्येन प्रत्यक्षानुसारित्वेन च प्राबल्यद्योतकेन सूचितः) तद्धेतुत्वेन 'विशेषसाम्यश्रुतिः' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ वाक्पूर्वरूपमिति ॥ इति वाचः अस्य वाक्यस्येत्यर्थः । साम्यमित्यनेन सम्बन्धः । वाचो वाङ्नामकस्य विष्णोरिति च ॥ पूर्ववर्णदेवतात्वेति ॥ विष्णुरिति संहितायां षकारादिपूर्ववर्णप्रतिपाद्यत्वनिर्देशमात्रेणेत्यर्थः । साम्यमिति मनोनामकस्यापि विष्णोः



पूर्ववर्णदेवतात्वोपपत्तेरित्यर्थः । इदमुक्तं भवति । अस्त्येव वाचो मनसि लयः । न चोक्त्योर्व्यामिश्रत्वेन मनःप्राधान्यानिश्चयः । अत्र खलु वाक्पूर्वरूपं, 'मन उत्तररूपम्, इत्यादिना विष्णुरिति संहितायां पूर्वोत्तरवर्णदेवतात्वे मुनिमतविवाद उच्यते । तत्र चास्तूक्त्योः साम्यम् । अन्यतरपक्षे विशेषादर्शनात् । न च व्यामिश्रतापि । वक्तृत्वमन्तृत्वनिमित्तकवाङ्मनःशब्दवाच्ययोरुभयोरपि विष्णुरूपयोः पूर्वोत्तरवर्णदेवतात्वोपपत्तेरिति ।

ननु यदा पूर्वोत्तरवर्णदेवतात्वे मुनिमतविवादस्तदा मास्तु व्यामिश्रत्वं वाङ्मनसनामकयोर्देवतयोर्गुणप्रधानभावे यदा मुनिमतविवादस्तदाऽस्त्येवोक्त्योर्व्यामिश्रत्वम् । न च तत्र मुनिमतविवाद एव नास्तीति वाच्यम् । तथा सत्येतद्वाक्यद्वयस्य देवताविषयकत्वाभावप्राप्त्या 'तत्पूर्वकत्वाद्वाचः' इत्यधिकरणे भाष्ये, 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपमिति मनःपूर्वकत्वाद्वाचो नानुत्पत्तिः' इत्युक्त्ययोगादित्यतो विशेष श्रुतिरित्यंशं विवृणोति ॥ मनसेति ॥ युक्तित इति तृतीयान्तात्तसिः । मनःपूर्वकत्वस्य 'मनः पूर्वरूपं' 'वागुत्तररूपं' इत्युक्तस्य वाचो मनोजन्यत्वस्येत्यर्थः । एवकारेण मनसो वाक्पूर्वकत्वस्येत्यस्य व्यवच्छेदः । हिशब्दो हेतौ । तथा च गुणप्रधानभावे मुनिमतविवादेऽपि नोक्त्योर्व्यामिश्रत्वम् । मनःपूर्वकत्वस्यैव युक्त्या विशेषश्रवणेन मनस एव प्राधान्यपरिज्ञानात् । न च वाचो मनोऽधीनत्वेऽपि देवतायाः कुतस्तदिति वाच्यम् । अचेतनस्यान्योन्यवशत्वस्य देवतानिमित्तकत्वात् । न चास्मिन्पक्षे वाक्पूर्वरूपं मन उत्तररूपमिति मुनिमतस्याप्रामाण्यापत्तिः । तस्य पूर्वोत्तरवर्णदेवतात्वमात्रपरत्वेन देवतापरत्वाभावादिति भावः । मनस एव प्राधान्ये प्रमाणमाह ॥ सृष्टाविति ॥ पूर्वप्रवर्तने स्वावरापेक्षया प्रथमप्रवर्तन इत्यर्थः । वचसः सृष्ट्यादौ विषये मनोऽधीनता । मनोभिमानीन्द्रादीनां कथं वागभिमान्युमाधीशत्वमित्यत आह ॥ शिवो हीति ॥ एवं च वाङ्मनसयोर्नियम्यनियामकभावस्योक्तरीत्या निश्चयसम्भवाद्वाचो मनसि लयोपपत्तेर्युक्तमिति भावः । (अयं च न्यायः शब्दाच्चेत्यनेन, 'मनसा वा अग्रे सङ्कल्पयती'त्युक्त्या वाचो मनोवशत्वरूपविशेषप्रतिपादकश्रुतिग्राहकेणोक्तः । एतच्चोपलक्षणम् । उभयोरपि वर्णदेवतात्वरूपसाम्यस्यापि श्रुतत्वादित्यपि द्रष्टव्यम्) ॥ १ ॥

## मनःप्राणाधिकरणम् IV-2-2

न्या.वि.— न च मनःपूर्वकत्वनियमादशेषदृष्टादृष्टव्यापाराणां तस्य प्राणादनूनता ।

इन्द्रियस्थैः स्वरूपैस्तु ज्ञानानि जनयत्यसौ ।
मनःस्थेन विशेषेण कामैः कर्मवदेव च ॥
पृथक्स्थितेन रूपेण जीवं धारयति प्रभुः ।
जीवस्थितेन रूपेण वेदयत्यहमित्यपि ॥
प्राण एको वशी नित्यं बाह्यान्तःकरणेश्वरः ।
तान्येतान्यवशान्येव तथापि कृपयैव सः ॥
पृथक्शक्तोऽपि तद्वैस्तु स्वरूपैस्तद्गकार्यकृत् ।
तस्येशो भगवान्विष्णुरेवमेष यथान्यगः ॥
इत्यादिश्रुतेः प्राणस्यैवाढ्यतावगमात् ॥ २ ॥

भा.बो.— ॐ तन्मनः प्राण उत्तरात् ॐ ॥ इत्यत्र प्राणान्मन इति मनसः प्राणोत्पन्नत्वविशेषादर्शनाभ्यां मनः प्राणे लीयते न वेति सन्देहे नेति पूर्वः पक्षः । प्राणे लीयत इति सिद्धान्तः । तत्र 'कार्यकरत्वम्' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च मन इति ॥ तदूनस्य हि तत्र लयो वक्तव्यः । न च मनसः प्राणादूनत्वं सम्भवति । यथा प्राणः सर्वप्रवृत्तिहेतुः तथा मनोऽप्यन्वयव्यतिरेकाभ्यां सर्वप्रवृत्तिकारणं दृश्यते । एवं च मनसः सर्वकार्यकरणत्वेन प्राणानूनतया प्राणे लयाभावे नोक्तमयुक्तमिति नेति भावः । (अयं च न्यायोऽन्वयव्यतिरेकाभ्यां सर्वप्रवृत्तिकारणत्वेन 'तद्दर्शनात्' इति पूर्वसूत्रे प्रतिपादितं मनः, तत्परामर्शकिन तदित्यनेन सूचितः । अन्यथा 'मन' इत्येवावक्ष्यत् । तद्धेतुत्वेन, 'आढ्यता' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ इन्द्रियस्थैरिति ॥ इन्द्रियस्थैः – चक्षुरादिनियामकसूर्यादिपुंस्थितैः । मनःस्थेन मनोनियामकरुद्रस्थितेन । विशेषेण रूपेण । ज्ञानानि जनयतीति सम्बन्धः । मनसः सर्वज्ञानहेतुत्वादिति भावः । कामैः कर्मेन्द्रियनियामकदेवतागतैः । ननु प्राणः किमिन्द्रियादिदेवताः परित्यज्य



ज्ञानजननादौ शक्तो न वा । आद्ये तत्रावस्थानवैयर्थ्यम् । द्वितीये कथं तस्याऽऽढ्यतेत्यत आह ॥ तानीति ॥ अपि– यद्यपि, प्राणः पृथक्– तद्वारतामन्तरेण । कार्यकरणे शक्तः तथापि इन्द्रियनियमनात्तेषां फलाधिक्यं भवेदिति तेषु कृपया अवशान्येव– परतन्त्राण्येव, द्वारत्वेनादाय, तद्गतरूपविशेषैस्तद्गकार्यकृत्– तेषु गतकार्यं तद्गकार्यं, तैः क्रियमाणमिति यावत् । तत्करोतीत्यर्थः । नन्वेवं प्राणस्यैव निरुपचरितस्वातन्त्र्यं स्यादित्यत आह ॥ तस्येति ॥ एवं प्राणान्तः प्राणकार्यकृदित्यर्थः । अनेन, 'सोऽध्यक्ष' इत्यत्र सिद्धान्ते प्रमाणमुक्तं वेदितव्यम् । एवं च मनोऽपेक्षया प्राणस्याऽऽढ्यतया मनसः प्राणे लय इत्युक्तं युक्तमिति भावः । (अयं च न्यायः 'प्राणः' इत्यनेन प्रकर्षेणानितीति रुद्रादिभ्योऽप्यतिशयेन चेष्टकत्वोक्त्या सूचितः ॥

## अध्यक्षाधिकरणं भूताधिकरणं च IV-2-3,4

न्या.वि.— सोऽध्यक्षे इत्यस्याप्येवमेवाशङ्का, परिहारश्च । श्रुतिबाहुल्यमेव शङ्कायां परिहारे च विशेषहेतुः ॥ ३,४ ॥

भा.बो.— ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ इत्यत्र 'स प्राणमसृजत' इति परमात्मोत्पन्नत्वविशेषादर्शनाभ्यां प्राणः परमात्मनि लीयते न वेति सन्देहे नेति पूर्वः पक्षः । लीयत इति सिद्धान्तः । तत्र पूर्वाधिकरणसम्बन्धित्वेनोक्तौ कार्यकरत्वाढ्यतारूपन्यायावतिदिशति ॥ सोऽध्यक्ष इतीति ॥ एवमेवाशङ्केति ॥ तदूनस्य हि तत्र लयो वक्तव्यः । न च प्राणस्य परमात्मनः सकाशादूनत्वं सम्भवति । यथा विष्णुर्हि सर्वकार्यकर्ता तथा प्राणोऽपि । प्राणादिदमाविरासीदिति श्रुत्या सर्वकार्यकर्ता प्रतीयते । अतो न प्राणः परमात्मनि लीयत इति शङ्कार्थः ॥ परिहार इति ॥ 'सर्वं ह्येवैतत्परमेव तिष्ठते, प्राणश्च प्राणाश्च प्राणिनश्चेत्यादिश्रुत्या प्राणादपि परमात्मन आढ्यतावगमात् । प्राणस्य विष्णौ लय इत्युक्तमुपपन्नमिति परिहार इत्यर्थः । (अयं च न्यायः 'अध्यक्षे' इत्यनेन प्राणस्य सकलचेष्टकत्वात्परमात्मनस्ततोऽपि सकलचेष्टकत्वरूपाधिक्यप्रतिपादकेन सूचितः) नन्वस्याधिकरणस्य यदि पूर्वाधिकरणवदेवाशङ्कापरिहारौ तर्हि पृथगारम्भो व्यर्थः स्यादित्यत आह ॥ श्रुतिबाहुल्यमेवेति ॥ 'न प्राणः

किंचिदाश्रितः । अनद्यमानो यदनन्नमत्तीत्यादिश्रुतिबाहुल्यं शङ्कायां, 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणो वाव ईशोह्यसौ सर्वस्येशितव्यश्च परस्येत्यादिश्रुतिबाहुल्यं विशेषहेतुरित्यर्थः । तथा चाभ्यधिकशङ्कासद्भावान्नैतदधिकरणवैयर्थ्यमिति भावः । न च श्रुतिबाहुल्यमवलम्ब्य शङ्किते कथं तेनैव परिहार इति वाच्यम् । परिहारबाहुल्यपदस्य निरवकाशत्वोपलक्षकत्वात् । पूर्वपक्षोदाहृतानां श्रुतीनां सावकाशत्वादिति भावः । यद्वा ननु 'चक्षुरादिवत्तत्सहशिष्ट्यादिभ्यः' इत्यत्र प्राणस्य परमात्माधीनत्वस्योक्तत्वेन तदूनत्वात्कथमुक्तरीत्याऽत्राधिकाशङ्का । न च प्राणादिदमाविरासीदिति श्रुतिमवलम्ब्येयमाशङ्का सम्भवतीति वाच्यम् । 'अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात्' इत्यादिना तत्रैव तस्याः सावकाशत्वस्योक्तत्वादित्यत आह ॥ श्रुतिबाहुल्यमिति ॥ आढ्यतामात्रस्योक्तयुक्त्यनुपमर्दकत्वात् कथं परिहार इत्यत आह ॥ परिहारे चेति ॥ शिष्टं पूर्ववत् ॥ ३ ॥

ॐ भूतेषु तच्छ्रुतेः ॐ ॥ नन्वत्राधिकरणे पूर्वपक्षसिद्धान्तन्यायौ कुतो नोक्तौ न विवृतौ चेति चेत्सत्यम् । अस्याधिकरणस्य 'नैकस्मिन् दर्शयतो हि' इत्यनेनानतिभिन्नार्थत्वात् । तर्हि प्रथमातिक्रमणे कारणाभावादत्र न्यायावनुक्त्वाऽऽवृत्य चोत्तराधिकरणे तदुक्तौ तद्विवृतौ च किं निमित्तमिति चेत् । सत्यम् । अनेकभूतेषु लयोऽर्थात्सिध्यति । भूतलयमात्रनिर्णये तु नोत्तराधिकरणोक्तानेकभूतेषु लय इति नैकस्मिन्नित्यस्य प्राधान्यात् । न चात्रापि भूतेष्विति बहुवचनबलात्तत्सिद्धिरिति साम्यमिति वाच्यम् । 'भूतेषु देवा विलीयन्ते' इति भूतलयवाक्यस्यैकस्मिन् भूते सर्वेषामपि देवानां मुख्यलयेऽपि तद्द्वारेणान्यत्र लयोपपत्तेरस्याधिकरणस्य विवक्षितलयविशेषानिर्णायकत्वात् । न चैवं सत्येतदधिकरणं व्यर्थमिति वाच्यम् । भूतेषु देवा विलीयन्त इति श्रुतिसिद्धविशेषसूचकत्वेन सार्थकत्वात् । यद्वाऽर्थक्लृप्तिसमानलोपावेवात्र पूर्वपक्षसिद्धान्तन्यायौ द्रष्टव्यौ । तथा हि 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुत्या भूतान्तराधीनत्वेन च ऋभ्वादिदेवा अग्नावेव विलीयन्ते भूतान्तरे च वेति सन्देहे अग्नावेव सर्वेषां लय इति पूर्वः पक्षः । न केवलमग्नौ पृथिव्यादिभूतान्तरेऽपीति सिद्धान्तः । तत्र 'अग्नौ सर्वे देवा विलीयन्ते' इति



श्रुत्यर्थस्य सर्वदेवानामग्नौ लय इत्यस्य क्लृप्तत्वादिति पूर्वपक्षन्यायाभिप्रायः । 'भूतेषु देवा विलीयन्ते' इति श्रुतिरूपमान (सहित लोपस्य) सहितस्य लोपस्य लयस्य ग्राह्यत्वादिति सिद्धान्तन्यायाभिप्रायः । (पूर्वपक्षन्यायस्तु अनेकभूतेषु लयं वदता 'अग्नौ सर्वे देवा' इति श्रुत्या अग्नावेव लय इत्यस्यार्थस्य क्लृप्तत्वादिति सूचनेन सूचितः । सिद्धान्तन्यायस्तु 'तच्छ्रुतेरित्यनेन सूचितः) ॥ ४ ॥

## जैकस्मिन्नधिकरणम् IV-2-5

**न्या.वि.— न च भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चैकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः क्लृप्त इति वाच्यम् । तत्तद्भूतोद्भवत्वात्तत्तद्देवानां तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेः । विशेषश्रुतेश्च ॥ ५ ॥**

**भा.बो.** — ॐ नैकस्मिन् दर्शयतो हि ॐ ॥ इत्यत्र श्रुत्यन्याधीनत्वाभ्यां देवाः किमग्नावेव विलीयन्त उत सर्वेषु भूतेष्विति सन्देहे अग्नावेव विलीयन्त इति पूर्व पक्षः । सर्वेषु भूतेष्विति सिद्धान्तः । तत्र 'अर्थक्लृप्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भूतानामिति ॥ 'एकस्मिन् भूत' इत्यत्र भूत इत्युक्त्याऽत्र सूत्रे पूर्वसूत्राद्भूतेष्विति वचनविपरिणामेनानुवर्तत इत्युक्तं भवति । सर्वेषां देवानामिति शेषः । अर्थतः अग्नौ सर्वे देवा विलीयन्त इत्यन्यथानुपपत्तेः । न चात्राग्नाविति श्रुत्यन्यथानुपपत्त्या एकस्मिन् भूते सर्वेषां देवानां लय इति पूर्वपक्षो न युक्तः । पूर्वाधिकरणे भूतेषु देवा विलीयन्त इति श्रुत्यवष्टम्भेन भूतेषु लयस्य समर्थनादित्यत उक्तम् ॥ विशेषाभावाच्चेत्यन्तम् ॥ एकस्मिन्नग्नावेव सर्वदेवलयाङ्गीकारेऽपि 'भूतेषु देवा विलीयन्ते' इति श्रुत्युपपत्तिरिति वाक्यशेषः । इदमुक्तं भवति । अस्ति तावद्भूतानामुत्पत्तिक्रमवैपरीत्येन लयः ।

कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च ।
यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते ॥ इति श्रुतेः ।

'अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः' इति स्मृतेश्च । उत्पत्तिश्चाकाशादिक्रमेणैव । 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतेः । तथा चाग्नावेव सर्वदेवलयाङ्गीकारेऽपि भूतेष्वित्युपपद्यते । अग्नेर्वायौ, वायोराकाशे विलयात् । न च श्रुतिस्मृती संहारविषये, न मुक्तिविषये इति वाच्यम् । मुक्तिप्रलययोर्विशेषाभावादिति । एवं चार्थक्लृप्त्याऽग्नावेव सर्वदेवानां लय इति नेति भावः । (अयं च न्यायः एकस्मिन् भूते लयं निषेधता 'नैकस्मिन्' इत्यनेन 'भूतेषु देवा विलीयन्ते' इति श्रुतेरग्नौ देवा विलीयन्तेऽग्निर्वायौ, वायुराकाश इति परंपरया भूतेषु देवानां लय इत्यर्थोपपत्तेरर्थादेकस्मिन्, न चाग्नौ लयः क्लृप्त इति सूचनेन सूचितः) कुतो नेत्यत आह ॥ तत्तद्भूतेति ॥ येषां येषां देवानां यस्मिन् भूते लय उच्यत इति शेषः । तथा च तत्तद्देवानां तत्तद्भूत एव साक्षाल्लयो वक्तव्य इति नैकस्मिन्भूते सर्वेषां लय इति भावः । तत्तदुत्पन्नानां यदि तत्र तत्र लयस्तर्हि वरुणाद्युनुत्पन्नाश्विप्रभृतीनां वरुणादौ लयो न स्यादिति बाधकपरिहारार्थं 'समानलोप' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तत्समानानां चेति ॥ वरुणाद्युत्पन्नाबादिदेवतासमानानां वरुणाद्यनुत्पन्नानामश्विप्रभृतीनां स्वसमानाबादिदेवतालयस्थाने वरुणादौ लय इत्यर्थः । क्वचिदेवंविधानामन्यत्र लयदर्शनात्कथमयं नियम इत्यत आह ॥ विशेषवचनाभाव इति ॥ अनेन समानलोप इत्यत्र समानानामित्यावृत्तिः । द्वितीयसमानानामित्यस्यानन्तरं लयस्थान इति शेष इत्युक्तम् । न केवलमिदं युक्तितः, किं तर्हीत्यत आह ॥ विशेषश्रुतेश्चेति ॥ श्रुतिश्च 'पृथिव्यामुभवः' इत्यादिका भाष्योदाहृता द्रष्टव्या । अनेन समानलोपो विशेषश्रुतिरूपमानसहितो लय इति प्रकारान्तरेण विवृतं भवति । एवं च तत्तदुत्पन्नत्वेनानुक्तदेवानामपि समानलोपेन तत्तदुत्पन्नदेवानां तत्र तत्र लय इत्युक्तं युक्तमिति भावः । (अयं च न्यायः दर्शयतो हीत्यनेन श्रुत्योरसन्दिग्ध इत्यननुगुणत्वोक्त्या तत्तद्भूतोद्भवत्वात् तत्तद्देवानां तत्र तत्र लय इत्युक्तिसाहित्येन प्राबल्यं सूचयन् तत्र बाधकपरिहारार्थत्वेन सूचितः) ॥ ५ ॥



## समनाधिकरणम् IV-2-6

**न्या.वि.— न च प्रकृतेः संसाराभावादिनेशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वात्सर्वसाम्यमेवेश्वरेण । न चेत्संसारित्वमिति युक्तम् । ईश्वरस्य महामहिमत्वात् । नित्यमसंसारित्वस्य नित्यं तदनुग्रहेणैवोपपत्तेः ।**

**सदाऽनित्यतयाऽनित्यं नित्यं नित्यात्मना यतः ।**<br>
**नित्ययैव स्वशक्त्येशो नियामयति नित्यदा ॥**<br>
**द्रव्यं कर्म च कालश्च स्वभावश्चेतनाधृतिः ।**<br>
**प्रकृतिः पुरुषश्चैव न सन्ति यदुपेक्षया ॥**

**इत्यादिश्रुतेश्च ॥ ६ ॥**

**भा.बो.—** ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ॥ इत्यत्र भगवदधीनत्वनित्यमुक्तत्वाभ्यां प्रकृतिः परमात्मनि लीयते न वेति सन्देहे लीयत इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'सुदार्ढ्यम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च प्रकृतेरिति ॥ ननु प्रकृतिः परमात्मनि लीयत इति पूर्वः पक्षो न युक्तः । संसारिणो हि मुक्त्यर्थं लयः । प्रकृतेः 'कामादितरत्र' इत्यत्र नित्यमुक्तत्वेनासंसारित्वस्योक्तत्वादित्यतोऽसंसारित्वे बाधकमुक्तम् ॥ न चेदिति ॥ संसारित्वं प्रकृतेः । तर्हि संसाराभावादिना प्रकारेणेश्वरेण सर्वसाम्यं स्यादिति शेषः । नासंसारित्वं प्रकृतेरुपपन्नम् । तथात्वे भगवता सर्वसाम्यापातादिति भावः । नन्वीश्वरप्रकृत्योरसंसारित्वे समानेऽपि स्वातन्त्र्यादिगुणान्तरेण वैषम्यं स्यादिति न सर्वसाम्यमित्यत उक्तम् ॥ ईशेनापीति ॥ संसाराभावादिनेत्यत्रापि सम्बध्यते । तेन निमित्तेन, अन्यथा त्वनियम्यत्वात्पूर्णत्वादेरीशेनापि कर्तुमशक्यत्वेन स्वातन्त्र्यस्य सुदृढत्वादित्यर्थः । तथा च नित्यं संसाररराहित्ये सर्वगुणोपपत्त्या गुणान्तरेऽपि वैषम्यं न स्यादिति भावः । सर्वसाम्यमिति वाक्यं, सिद्धान्तविरोधेन न चेत्सर्वसाम्यं तर्हि संसारित्वं सिद्धमिति विपर्ययपर्यवसानपरत्वेनापि योज्यम् । तथा च प्रकृतेः संसारित्वाद्विष्णौ लय इति भावः । एवं प्रकृतेः संसाराभावे ईशेनाप्यन्यथाकर्तुमशक्यत्वेन

सुदृढत्वादीशेन सर्वसाम्यं स्यादिति । प्रकृतेरपि संसारित्वेन विष्णौ लय इति नाधिकारिणां प्राणावसानत्वमिति नेति भावः । (अयं च न्यायः 'अमृतत्वं चानुपोष्य' इत्यनेन प्रकृतेर्नित्यमुक्तत्वेनेशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वमिति सूचनेन सूचितः)

तद्धेतुत्वेन 'महिमा' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ ईश्वरस्येति ॥ 'ॐ तदपीतेः संसारव्यपदेशात्' इत्यादि सूत्रोक्तमोचकत्वसूक्ष्मत्वज्ञानानन्दादि-गुणाधिक्यरूपमहामहिमत्वादीश्वरस्य न प्रकृतेरीश्वरेण साम्यमित्यर्थः । नन्वसंसारित्वे गुणान्तरेण वैषम्यं न सम्भवतीत्यत आह ॥ नित्यमिति ॥ तदधीनत्वेनासंसारित्वे कथं न साम्यापादनमिति भावः । यद्वा महामहिमत्वेनैवेश्वरेण साम्याभावे प्रकृतेः संसारित्वमपि स्यादित्यत आह ॥ नित्यमिति ॥ नित्यस्यासंसारित्वस्य कथमीश्वराधीनत्वमित्यत उक्तम् ॥ तदनुग्रहेणेति ॥ नित्यस्यापि भगवदधीनत्वे प्रमाणमाह ॥ सदेति ॥ यतो यथाऽनित्यं घटादिकमनित्यतयेश्वरः सदा नियामयति, कदाचिदपि न नित्यं करोति । तथा नित्यं प्रकृत्यादिकं नित्यात्मना नित्यया स्वशक्त्यैव नित्यदा नियामयति । न जात्वनित्यं करोतीत्यर्थः । नन्वेतदलौकिकमिति चेन्न । नित्यकर्मभिर्दुरितप्रागभावानुवृत्तेः साध्यत्वेन वादिभिरभ्युपेयत्वात् । अनुवृत्तेर्नित्यतयाऽऽपादनानतिरेकात् । ननु भवेदेवमस्वरसनित्यस्य, न स्वरसनित्यस्येति चेन्न । ईश्वरातिरिक्तेस्वरसनित्यताऽसम्मतेः । इयांस्तु विशेषः । दुरितप्रागभावादे र्नित्यकर्मानुष्ठानद्वाराऽस्मदधीनं नित्यत्वम् । प्रकृत्यादेस्त्वीश्वराधीननित्यत्वमिति भावः । ननु प्रकृत्यादेरस्मदधीननित्यत्वं, कथमीश्वराधीननित्यत्वमिति शङ्कापरिहारायोक्तं ॥ नित्ययैवेति ॥ शक्तेरन्यसम्बन्धित्वभ्रमनिरासाय स्वेत्युक्तम् । चेतनाऽज्ञानम् । एवं चेश्वरस्य महामहिमत्वेन प्रकृतेस्तत्साम्याभावादुक्तं युक्तमिति भावः । (अयं च न्यायः 'प्रतिषेधात्' इति सूत्रव्यतिरिक्तेन 'तदपीतेः' इत्यादिसूत्रषट्केन सूचितः । ईश्वरस्य महामहिमत्वादिति वदतोक्तः ।) ॥ ६ ॥



## पराधिकरणम् IV-2-7

**न्या.वि.— न चान्यदेवादीनां प्राणाधीनत्वात्तत्प्राप्ति-नियमात्परप्राप्तिर्नास्त्येव ।**

**प्राणं प्राप्य परं देवास्तदन्ये चैव तद्गताः ।**
**प्राप्नुवन्ति परं देवं वसन्ति च यथासुखम् ॥**
**इति विशेषश्रुतेः ॥ ७ ॥**

**भा.बो.—** ॐ तानि परे तथा ह्याह ॐ ॥ इत्यत्रोभयथापि सम्भवेन चतुर्मुखेतरदेवाः परमात्मनि लीयन्ते न वेति सन्देहे नेति पूर्वः पक्षः । लीयन्त इति सिद्धान्तः । तत्र 'परतन्त्रता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चान्यदेवादीनामिति ॥ अन्येत्यतः पूर्वं प्राणादिति शेषः ॥ प्राणाधीनत्वादिति ॥ चतुर्मुखप्रतिबिम्बत्वादित्यर्थः । 'प्रतिबिम्बो हरेः प्राणः प्राणस्यान्याः कलाः स्मृताः' इति वचनादिति भावः । अनेन परतन्त्रतेत्युक्तपरशब्दः प्राणवाचीत्युक्तं भवति ॥ तत्प्राप्तिनियमादिति ॥ प्रतिबिम्बस्य बिम्बलयनियमादिति भावः ॥ परप्राप्तिर्नास्तीति ॥ चतुर्मुखेतरदेवानां परमात्मप्रतिबिम्बत्वाभावादिति भावः । एवं च चतुर्मुखेतरदेवानां प्राणाख्यपरतन्त्रतया, परमात्मनि लयाभावाज्ज्ञानिनामपि मोक्षाभाव इति नेति भावः । (अयं च न्यायः प्राणद्वारा परमात्मनि लयप्रतिपादकश्रुतिग्राहकेण 'तथा ह्याह' इत्यनेन सर्वदेवानां प्राणाधीनत्वेन तत्रैव लय इति सूचनेन सूचितः ।) तद्धेतुत्वेन 'विशेषः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ प्राणमिति ॥ अनेन विशेष इत्यत्र श्रुतिरिति शेष इत्युक्तं भवति । तदन्ये-देवेभ्योऽन्ये ऋष्यादयः । अत एव प्राक् देवानामित्युक्तम् । अनेन सूत्रे तानीत्येतदृष्याद्युपलक्षकमित्युक्तं वेदितव्यम् । प्राणप्रतिबिम्बत्वरूप-परतन्त्रत्वविरोधपरिहारार्थमुक्तं प्राणं प्राप्येति । प्राप्यैवेत्येवशब्दसम्बन्धः । तथा च नियमोक्त्या प्राणप्रतिबिम्बत्वस्य परमात्मनि लये तद्द्वारत्वेन गतिरुक्ता भवति । परं प्राप्नुवन्ति- लीयन्त इत्यर्थः । सामान्यतोऽशेषजीवानां भगवत्प्रतिबिम्बत्वादिति भावः । तद्गता इत्यनेन प्राणस्य परमात्मप्राप्तौ प्राणप्रविष्टानां

परमात्मप्राप्तिरपरिहार्येत्युक्तं भवति । एवं च विशेषश्रुतेः प्राणद्वारा परमात्मप्राप्तिसम्भवादुक्तं युक्तमिति भावः । (अयं च न्यायः 'तथा ह्याह' इत्यनेनैवोक्तः ।) ॥ ७ ॥

## अविभागाधिकरणम् IV-2-8

**न्या.वि. — न च सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमे संसारसमानधर्मत्वं मुक्तेरिति वाच्यम् । कृतार्थत्वेनैव विशेषोपपत्तेः ।**

**अपूर्णतादिभावो वा दुःखं वा नास्ति किंचन ।**
**मुक्तस्य पारतन्त्र्येऽपि तारतम्येऽप्यतः सुखी ॥**
**इति च श्रुतिः ॥ ८ ॥**

**भा.बो.**— ॐ अविभागो वचनात् ॐ ॥ इत्यत्र मुक्तत्वेन, स्वातन्त्र्यस्य भगवद्धर्मत्वेन किं मुक्ताः स्वतन्त्रा न वेति सन्देहे स्वतन्त्रा इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'समानधर्मः' इत्युक्तं विपक्षबाधकतर्कत्रयपूर्वपक्षन्यायं तदनुग्राह्यहेतुप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सत्यसङ्कल्पत्वादेरिति ॥ आदिपदेन मुक्तत्वादेर्ग्रहणम् । मुक्ताः स्वतन्त्रा इति वाक्यमध्याहार्यम् । अयमर्थः । मुक्ताः स्वतन्त्राः सत्यसङ्कल्पत्वात्, मुक्तत्वात् । ईश्वरवत् । न चाप्रयोजको हेतुः । अस्वातन्त्र्ये संसार इव दुःखादिप्राप्तेः । न च सत्यसङ्कल्पत्वमसिद्धम् । 'ऋते देवाः' इति भाष्योदाहृतश्रुतिसिद्धत्वात् । ननु यच्छ्रुत्यादौ सत्यसङ्कल्पत्वादिकमुच्यते तत्परमेश्वरसङ्कल्पाद्यनुसारेणैव न तु स्वातन्त्र्येण । न च तत्स्वातन्त्र्ये साधकम् । तदभावेऽपि तस्योपपत्तेरित्याशङ्का । तत्र बाधकमाहईश्वरेति । सत्यसङ्कल्पत्वादेरित्यनुवर्तते । संसारसमानधर्मत्वं स्यादिति शेषः । यदि सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमोऽङ्गीक्रियते तदाऽत्यन्तास्वातन्त्र्यप्राप्त्या दुःखादिप्राप्तिः स्यात् । ततश्च मुक्तेः संसारसमानधर्मत्वं स्यात् । न चैवम् । अत ईश्वराद्यनधीनमेव सत्यसङ्कल्पत्वादिकमङ्गीकार्यम् । ततश्च तस्य स्वातन्त्र्यसाधकत्वं सम्भवतीति भावः । यद्वा



प्रतिज्ञाहेतू बहिरेव कृत्वा तत्रान्यथासिद्धिशङ्कानिरासकत्वेनेदं योज्यम् । एवं च मुक्तानामस्वातन्त्र्ये मुक्तेः संसारसमानधर्मत्वप्राप्त्या मुक्ताः स्वतन्त्रा एवेति परमात्मनः सर्वोत्तमत्वोक्तिर्विरुद्धेति नेति भावः । (अयं च न्यायः मुक्तौ पारतन्त्र्येऽपि संसारवैषम्येण दुःखाद्यभावं साधयता 'अविभागः' इत्यनेन सूचितः ।) तद्धेतुत्वेन 'कृतार्थता' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ कृतार्थत्वेनेति ॥ कृतार्थत्वेन— मुक्तत्वेन ईश्वरपारतन्त्र्येऽपि मुक्तानां मुक्तत्वादेव दुःखाभावसत्यसङ्कल्पत्वादिविशेषोपपत्तेरित्यर्थः । इदमुक्तं भवति । यदुक्तं सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमाङ्गीकारे मुक्तानामत्यन्तास्वातन्त्र्यापत्त्या दुःखादिप्राप्तौ संसारसमानधर्मत्वं स्यादिति । तन्न । यदा खलु भगवदिच्छाननुसारेणेच्छति तदा तदलाभेन दुःखादिकमनुभवति । मुक्तास्तु सर्वदा भगवदिच्छानुसारेणैव कामयन्ते । अतो भगवत्कामनिमित्तेन मुक्तकामानन्तरमेव कामितप्राप्तेरस्वतन्त्राणामपि अदुःखित्वमुपपन्नम् । मुक्तस्य पारतन्त्र्येऽपि दुःखं नास्तीत्यत्र प्रमाणमाह– अपूर्णतादिभावो वेति । यतो मुक्तानां पारतन्त्र्येऽपि किञ्चन दुःखं नास्ति । अतो मुक्तः सुखी युज्यते । मुक्तामुक्तयोः परतन्त्रत्वाविशेषेऽपि मुक्तः सर्वदुःखविनिर्मुक्तत्वेन सुखीत्युच्यते । न तु संसरीति भावः । ननु मुक्तानामीश्वरपारतन्त्र्ये परस्परं साम्यस्य श्रुत्यादिविरुद्धत्वात्तारतम्यमङ्गीकर्तव्यम् । ततश्च परस्परद्वेषेर्ष्यादिना दुःखादिप्राप्तेः किञ्चन दुःखं नास्तीति कथमुक्तमित्यत उक्तम्– तारतम्येऽप्यपूर्णतादिभावो नास्तीति । स्यादेतदेवं यदि मुक्तानामपूर्णतादिभावः स्यात् । न चैवम् । स्वस्य योग्यतानुसारेण सर्वेषामपि पूर्णत्वात्स्वस्यापूर्तौ हि तस्य कामेन तदभावेन दुःखादिप्राप्तिः स्यात् । संसारिणां तु स्वस्यापूर्णत्वादिभावस्य विद्यमानत्वेनाधिककामने दुःखादिप्राप्तिरिति भावः । एवं च मुक्तस्य कृतार्थत्वात्पारतन्त्र्येऽपि दुःखाद्यप्राप्त्या मुक्तेः संसारसमानधर्मत्वाभावाद्युक्ता विष्णोः सर्वोत्तमतेति । (अयं च न्यायो 'ब्रह्ममत्यनुकूले'ति स्मृत्यनुसारेणेति मुक्तानां सत्यकामत्वमिति भाष्योदाहृतस्मृत्यनुसारेण च 'कामेन मे काम आगात्' इत्येकवचनत्वात्तद्ग्राहकेण वचनादित्यनेन सूचितः ।) ॥ ८ ॥

## तदोकोऽधिकरणम् IV-2-9

न्या.वि.— न च प्रारब्धकर्मशेषवत्वादुदुत्क्रान्ताववि‍शेषो ज्ञानिनः । ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुवृत्तेः ।

प्रारब्धकर्मशेषस्तु विरजातरणावधिः ।
स्वोदयात्फलदं ज्ञानमादेहं कर्म वाऽऽरवेः ।
तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते ॥ इति श्रुतिः
'शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' ।

'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव पाप्मना विनिर्मुक्तः ॥ 'स प्राप्नोति विरजां नदीम् । तत्सुकृतदुष्कृते विधूनते । "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे " इति च । 'अन्यथाभाव-नियमोऽनृतता कार्यकारणे' इति च ॥ ९ ॥

भा.बो.— ॐ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् ॥ इत्यत्र मरणत्वज्ञानिसम्बन्धित्वाभ्यां ज्ञानिनां किं मरणं अज्ञजनमरणवदेव उत वैलक्षण्येनेति सन्देहे अज्ञजनमरणवदेवेति पूर्वः पक्षः । तद्वैलक्षण्येनेति सिद्धान्तः । तत्र 'कृतशेषता' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च प्रारब्धकर्मशेषवत्वादिति ॥ उत्क्रान्तौ– मरणे । अविशेषो ज्ञानिभिरिति शेषः । इदमुक्तं भवति । नाज्ञानिमरणापेक्षया ज्ञानिमरणस्य विशेषः । तस्याप्यन्यमरणवत् प्रारब्धनिबन्धनत्वात् । न च तदा प्रारब्धाभावः । तस्य देहत्यागाद्यवसानत्वात् । न च सत्यपि प्रारब्धे विलक्षणं ज्ञानिमरणमिति युक्तम् । विशेषकारणाभावादिति । अनेन कृतस्य प्रारब्धकर्मणः शेषो यस्य स तथोक्तस्तस्य भावः कृतशेषतेति व्यधिकरणबहुव्रीहिरित्युक्तं भवति । अन्यथा तल्प्रत्ययानुपपत्तिः । एवं च ज्ञानिमरणस्याज्ञमरणसाधारण्यान्न ज्ञानस्यातिशय इति नेति भावः । (अयं च न्यायः 'तच्छेषगत्यनुस्मृतियोगाच्च' इत्यनेन प्रारब्धकर्मावसानस्य गत्यनुस्मृति-कालीनत्वोक्त्या प्रारब्धकर्मणस्तद्धेतुक-विशिष्टोत्क्रमणप्रतिबन्धकत्वसूचनेन सूचितः ।) तद्धेतुत्वेन 'शश्वदनुप्रवृत्तिः'



इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ ज्ञानेति ॥ शश्वदित्यस्यार्थः– सर्वदेति । अन्वित्यस्यार्थोज्ञानोदयानन्तरमिति ॥ ज्ञानफलस्येति ॥ सञ्चितकर्मक्षयागाम्यशेष-प्रारब्धोपमर्दोत्क्रमणादेरित्यर्थः । अयं भावः । प्रारब्धकर्मवत्त्वाविशेषेऽपि ज्ञानिन उत्क्रान्तौ विशेषो युज्यते । ज्ञानसामर्थ्यादेव विशेषोपपत्तेः । न च ज्ञानस्याविद्यानिवृत्तिमात्रफलकत्वेन कथमुत्क्रान्तिफलकत्वमिति वाच्यम् । ज्ञानस्य स्वोदयमारभ्य सर्वदा फलजनकत्वेनोत्क्रान्त्यादेरपि तत्फलत्वसम्भवात्, उत्क्रान्तेर्मोक्षैकदेशत्वेन हेतुत्वोपपत्तेश्च । ततश्च ज्ञानलक्षणविशेषकारणसद्भावेन ज्ञानिमरणस्याज्ञमरण वैलक्षण्योपपत्तौ कृतशेषत्वमप्रयोजकमिति ।

ननु किं प्रारब्धकर्मसद्भावमङ्गीकृत्य ज्ञानसामर्थ्येनैव विशिष्टोत्क्रमणोपपादनेन । सञ्चितस्येव प्रारब्धस्यापि ज्ञानेनैव विनाशमङ्गीकृत्य विशेषोत्क्रमणं कुतो नोपपद्यत इत्याशङ्कां परिहरन् ज्ञानस्य स्वोदयमारभ्य फलदत्वे प्रमाणमाह ॥ प्रारब्धकर्मेति ॥ स्वोदयादिति ल्यब्लोपनिमित्ता पञ्चमी । स्वोदयमारभ्येत्यर्थः । कर्म– प्रारब्धम् । आदेहमारवेर्वा फलदमित्यर्थः । अधिकारभेदेन व्यवस्थित-विकल्पोऽयम् । 'वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा । विधूय सर्वपापानि' इत्यादिप्रमाणोक्तमपि ग्राह्यम् । अत्र प्रारब्धकर्मणः फलदत्वोक्त्या ज्ञानिनामपि तत्सद्भावोऽवगम्यते । ननु यदि कर्म आदेहमारवेर्वा फलदं तर्हि तदनन्तरमेव लिङ्गभेदः स्यात् । न चैवम् । 'ब्रह्मणा सह भिद्यते' इति वक्ष्यमाणत्वेन तदानीं लिङ्गभङ्गाभावादित्यत उक्तम्– प्रारब्धकर्मशेषस्त्विति ॥ न वयं सूर्यादौ निःशेषप्रारब्धविनाशं ब्रूमः । येन प्रमाणविरोधः स्यात् । किं तु सशेषमेव । तच्छेषस्तु विरजातरणावधिः । तत्र लिङ्गभङ्गस्तु वर्तत एव । अन्यथा शरीरावस्थानस्य निर्निबन्धनत्वापत्तेरिति भावः । ननु यदि ज्ञानं स्वोदयमारभ्य फलदं तर्हि तदनन्तरमेव लिङ्गभङ्गोऽपि स्यात् । तस्यापि ज्ञानफलत्वादित्यत आह– तथापीति । यद्यपि ज्ञानं स्वोदयमारभ्य फलदं तथापीत्यर्थः । प्रारब्धकर्मण एव प्रतिबन्धकत्वादिति भावः । 'आदेहं कर्म फलदम्' इत्यत्र स्पष्टं प्रमाणमाह– शरीर इति । आरवेरित्यत्रापि । तदाह– स तेजसीति ॥ स त्रिमात्रेणोङ्कारेण परमपुरुषाभिध्याता ध्येयं परमेश्वरमपरोक्षीकृत्य तेजसि– तेजोरूपे सूर्ये, सम्पन्नः– सम्प्राप्नोतीति यावत् । सूर्यं प्राप्य चासौ यथा पादोदरः त्वचा जीर्णया

विनिर्मुच्यते। एवं खलु स ध्यानी पाप्मना प्रारब्धेन विनिर्मुक्तो भवतीत्यर्थः। प्रारब्धकर्मशेषस्त्वित्यत्रापि प्रमाणमाह– स प्राप्नोतीति । तत्तत्र सुकृतमनिष्टं सुकृतदुष्कृते तच्छेषमित्यर्थः ।

तथापि प्रकृतेर्बन्ध इत्यत्रापि प्रमाणमाह– ते ब्रह्मलोक इति ॥ ये सन्यासयोगात् । ल्यब्लोपनिमित्ता पञ्चमी । काम्यकर्मपरित्यागलक्षणोपायं सम्पाद्येत्यर्थः । यतयः– सत्कर्मानुष्ठानप्रयत्नवन्तः । अत एव शुद्धं सत्वमन्तःकरणं येषां ते तथोक्ताः । अत एव 'वेदान्तविज्ञानसुनिश्चितार्थाः' वेदान्तश्रवणजनितविज्ञानेन सुनिश्चितोऽर्थः परब्रह्मरूपो यैस्ते तथोक्ताः । काम्यकर्मपरित्यागपूर्वकसत्कर्मानुष्ठानेनान्तःकरणशुद्धिं सम्पाद्य वेदान्तश्रवणादिना सम्पादितमोक्षज्ञाना इति यावत्। ब्रह्मलोके सत्यलोके विष्णुलोके वा तिष्ठन्ति ते, प्राप्नुवन्तीति यावत्। ते सर्वेऽपि परान्तकाले चतुर्मुखस्यायुःपरिसमाप्तिकाले परामृतात्– प्रकृतेः प्राकृतस्याप्यनृतत्वात्परेत्युक्तम् । परिमुच्यन्तीत्यर्थः । ननु प्रकृतिप्राकृतयोः सत्यत्वात्कथमनृतत्वमित्यत आह– अन्यथेति ॥ कार्यकारण इति द्वन्द्वैकवद्भावः । महत्त्वादिकार्ये प्रधानादिकारण इत्यर्थः । कार्यकारणयो-र्याऽनृतता श्रुतावुच्यते (सा)सोऽन्यथाभावनियम(:) परिणाम एव न तु मिथ्यात्वमित्यर्थः । तदुक्तम् । 'अनृतं परिणामतः । प्रकृतिप्राकृतं प्रोक्तम्' इति । एवं च ज्ञानिमरणस्याज्ञमरणविलक्षणत्वाद्युक्तं ज्ञानस्य माहात्म्यमिति । (अयं च न्यायो 'विद्यासामर्थ्यात्' इत्यनेनैव स्वोत्पत्तिमारभ्यैव फलदत्वरूपापरोक्षज्ञानसामर्थ्यादिति वदतोक्तः ।)॥ ९ ॥

## योग्यधिकरणम् IV-2-10

न्या.वि. — न च कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात्स्वर्गमोक्षयोरपि तथात्वमिति वाच्यम् ।

क्रियानुवृत्तिर्लौकिके साधने तु मनोऽनुवृत्तिर्वैदिके साधने स्यात्।
फलं भवेत्सर्वथैत्येव तस्मात्स्मरेत्सदा निश्चितत्वेन विद्वान् ॥



इति श्रुतेस्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोः साम्यात् । अतोऽत्र फलानुस्मरणं लवनादिकृष्यनुवृत्तिवद्द्रष्टव्यम् । वचनप्रामाण्यात् ॥ ॥ १० ॥

### इति श्रीमन्न्यायविवरणे चतुर्थाध्यायस्य द्वितीयः पादः ॥

भा.बो.— ॐ योगिनः प्रतिस्मर्येते स्मार्ते चैते ॐ ॥ इत्यत्र गत्यनुस्मृती इत्युक्तिस्फुटप्रमाणादर्शनाभ्यां विद्यागतिस्मृती अपेक्षिते न वेति सन्देहे नेति पूर्वः पक्षः । अपेक्षिते इति सिद्धान्तः । तत्र 'लोकोपमा' इत्युक्तं पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च कृष्यादीति ॥ इति सूत्रगतद्विवचनानुरोधात्स्वर्गेत्युक्तम्। एवं च लोकोपमत्वाद्विद्यागतिस्मृती नापेक्षिते इति न ज्ञानस्य सम्पूर्णमोक्षार्थतेति नेति भावः । (अयं च न्यायः 'स्मार्ते चैते' इत्यनेन गत्यनुस्मरणाद्यतिरिक्तसाधनसमुच्चायकचशब्देन लोके फलानुस्मृतिव्यतिरिक्तसाधनेन फलप्राप्तेर्न गत्यनुस्मृत्यपेक्षानिय(मं)मः चेति सूचनेन सूचितः ।) तद्धेतुत्वेन 'शश्वदनुप्रवृत्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ क्रियानुवृत्तिरिति ॥ सर्वथेति इतिशब्दः प्रकारवचनः । यतः क्रिया मनोवृत्तिरूपविशेषणत्यागेन सर्वथाऽनुवृत्त्यैव फलं भवेत् । तस्माद्विद्वान् स्मरेदेवेति सम्बन्धः । लवनादि– छेदनादि । अयं भावः । यथा खलु छेदानादौ न कर्षणाद्यावृत्तिः किं तु परशोरुद्यम्योद्यम्य दारुणि निपातावृत्तिः । कृष्यादौ तु नासौ किं तु कर्षणाद्यावृत्तिरेव । न तावता लोकाननुसारिता । अवान्तरविशेषाणां वैलक्षण्येऽप्यनुवृत्तिमात्रस्योभयत्र साम्यात्तथा प्रकृतेऽपि । अवधीरितक्रियामनोवृत्तित्वविशेषस्यानुवृत्तिमात्रस्य लौकिकवैदिकयोः साधनयोः साम्यादिति । फलस्मरणसापेक्षत्वं गतेर्युक्तिविरुद्धं कथमङ्गीकार्यमित्यत आह– वचनेति । युक्तेराभासत्वादिति भावः । एवं च शश्वदनुवृत्त्याऽनुगमनस्य विद्यादिसापेक्षत्वमिति ज्ञानस्य सम्पूर्णमोक्षार्थत्वमिति भावः । (अयं च न्यायः 'स्मार्ते चैते' इत्यनेनैव मनोवृत्तिरूपस्मरणापेक्षत्वोक्त्या शश्वत्सदा मनसोऽनुवृत्तिरिति सूचनेन सूचितः ।) ॥ १० ॥

इति न्यायविवरणभावबोध चतुर्थाध्यायस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः

### अर्चिराद्यधिकरणम्, वायुशब्दाधिकरणम् , तटिदधिकरणम्, आतिवाहिकाधिकरणम् IV-3-1-4

न्या.वि. — न च तत्र तत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथङ्मार्गसुक्रमोपपत्तिरिति वाच्यम् । 'सर्वे वा एत उत्क्रामन्ति तेऽर्चिषमेवाभिसंयन्ति ततो वायुं ततोऽहः पूर्वपक्षमित्येष उ एव ब्रह्मपथः । द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च'इति विशेषश्रुतितो ज्ञानिनामेकमार्गस्यैव प्राप्तेः । एष एव ब्रह्मपथ इत्यवधारणविरोधादन्यथा । एजदिति वैदिकानुष्ठानवत उक्तेर्नाधोगतिविरोधः ।

पुनरावर्तिनो ये तु तेषां धूमपथो ध्रुवः ।
अन्येषामर्चिरादिश्च तद्भेदो मध्यसंस्थितिः ॥
धूमार्चिरादिदेवेभ्यः प्राप्यानुज्ञां तु मध्यगाः ।
विहृत्य स्वेष्टदेशेषु तदूर्ध्वं याति चाधरम् ॥
अत्यल्पानामविज्ञाताऽप्यनुज्ञावर्तिनां भवेत् ।
पुंद्वारेण स्वदृष्ट्या वा यथायोग्यं विमुच्यताम् ॥
अतो न मार्गभेदोऽस्ति न हि मार्गोऽत्र सम्भवः ।
प्रेतत्वं चाधरो मार्गः पापजत्वात्तयोः पृथक् ॥
इति स्मृतेश्च ॥ १-४ ॥

भा.बो.— ब्रह्मनाड्योत्क्रान्तानां ब्रह्मप्राप्त्यर्थं मार्गस्य, तेन मार्गेण गतानां गम्यस्य च निर्णायकेऽस्मिन्पादे प्रत्यधिकरणपूर्वपक्षसिद्धान्तन्याया अनुव्याख्यायामुक्ताः ।



'सुक्रमविक्रमौ च सान्तानिकं प्राप्तिरभीष्टता च ।
सौकर्यमित्यन्यमतस्य तर्का विशेषसंप्राप्तिरुरुत्वमाप्तिः ।
क्रमानुरागः कथितानुवृत्तिः सिद्धान्तनिर्णीतिकराः'- इति ॥

॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ इत्यत्र 'तेऽर्चिषमभिसम्भवन्ति, यदाह पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' इति श्रुत्यवष्टम्भेनार्चिषः प्राथम्यं वायोर्वेति सन्देहे उभयोरपि प्राथम्यमिति पूर्वः पक्षः । अर्चिष एव प्राथम्यमिति सिद्धान्तः । तत्र 'सुक्रमः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च तत्र तत्रेति ॥ तत्र तत्रोदाहृतश्रुतिद्वये मार्गस्यान्यथाऽर्चिरादित्वेन वाय्वादित्वेन चोक्तत्वान्मार्गभेदेनोभयोः प्राथमिकत्वेऽप्यधिकारिभेदेन विरोधाभावाच्च मार्गनानात्वलक्षणसुक्रमोपपत्तिरित्यर्थः । एवं च सुक्रमोपपत्तेर्मार्गस्य निर्णयाभावात्तदनुस्मृत्ययोग इति नेति भावः । (अयं च न्यायः अर्चिः प्राप्तिरेव प्रथमेनार्चिरादिनेत्यनेनार्चिष एव प्रथमप्राप्यत्वोक्त्या सूचितः ।) तद्धेतुत्वेन 'विशेषसम्प्राप्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ सर्वे वा एत इति ॥ ततो वायुमित्येतावत्युदाहर्तव्येऽन्यांशोदाहरणमुत्तरत्रोपयोक्ष्यते । अनेन विशेषाच्छ्रुत्यादिरूपाज्ज्ञापकादर्चिः प्राथमिकस्यैव ज्ञानिकर्तृकप्राप्तेरिति न्यायो विवृतो भवति । सत्यमित्यस्यार्थः एवेति । तेऽर्चिषमित्यस्याः श्रुतेः कथं विशेषश्रुतित्वमित्यत आह- एष एवेति । अन्यथा मार्गभेदे । अनेन मार्गैक्यविशेषश्रुतित्वमुपपादितमिति द्रष्टव्यम् । उपलक्षणं चैतत् । मार्गस्यार्चिरादित्वेऽपि तेऽर्चिषमेवेत्यवधारणयुक्तत्वेन ततो वायुमिति वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वेन च विशेषश्रुतित्वं द्रष्टव्यम् ।

ननु सर्वेषां स्वर्गमोक्षप्रापकधूमार्चिरादिमार्गद्वयप्राप्तौ तमःप्रभृत्यधोगतिः केषाञ्चिन्न स्यात् । सन्ति च तथाविधाः केचित् । अतः कथं द्वे सृती इत्यत्र विश्वमित्युक्तमित्याशङ्कानिरासार्थं श्रुतावेजदित्युक्तमित्याशयेनाह ॥ एजदितीति ॥ वैदिकानुष्ठानवत इति सावधारणं, मार्गद्वयस्येति शेषः । ततश्चायं मन्त्रार्थः । मर्त्यानां मरणशीलानां मोक्षस्वर्गादिगन्तॄणां द्वे एव सृती मार्गावहमशृणवम् । के ते देवानां पितॄणां च सम्बन्धिन्यौ देवयानपितृयानलक्षणे । 'द्यौर्नः पिता

पृथिवी माता' इति श्रुतेः पितरं मातरं चान्तरा द्यावापृथिव्योर्मध्ये वर्तमानं यदेतत्प्रत्यवायाद्बिभ्यत् वेदोक्तप्रवृत्तनिवृत्तकर्मादिसाधनसम्पूर्णमदिति यावत् । इदं विश्वं जीवजातं ताभ्यां सृतिभ्यां ब्रह्म स्वर्गं च समेतीति । अनेनास्याः श्रुतेर्ब्रह्ममार्गैक्य एव विशेषश्रुतित्वमुपपादितं भवति । ब्रह्ममार्गस्यैकत्वेऽर्चिरादित्वे च स्पष्टं स्मृतिं चाह ॥ पुनरावर्तिन इति ॥ ननु 'आत्मेत्येव परं देवमुपास्य हरिमव्ययम्' इत्यात्मत्वमात्रोपासकानामस्ति तावन्मुक्तिः । केचिदत्रैव मुच्यन्त इत्युक्तेः । नन्वेतेषां देवानामिव स्वोत्तमप्रवेशेन देहलयद्वारा मुक्तिः, अत्यल्पत्वात् । नाप्युत्क्रमणं, नोत्क्रामन्तीत्युक्तत्वात् । न ह्युत्क्रमणशून्यानामर्चिरादिमार्गः सम्भवति । उत्क्रान्तिमार्गश्च विमुक्तगम्यमिति तेषामेवार्चिरादिमार्गोक्तेः । अतस्तेषां मुक्तेर्मार्गान्तरं वक्तव्यमिति कथमपुनरावर्तिमार्गैक्यमित्यत आह ॥ अत्यल्पानामिति ॥ पुन्द्वारेण स्वामित्वमेवोपास्यमिति गुरूपदेशेन, 'स्वदृष्टया यस्य गुणाः प्रतिभासन्त्युपासने' इत्युक्तरीत्या वाऽनुवर्तिनां स्वामित्वमात्रोपासनाविधिबद्धानां यथायोग्यं विमुच्यतां स्वोपासनानुसारेणोत्क्रमणमार्गव्यतिरिक्तकर्मक्षयभोगमात्रलक्षणमुक्तिं गच्छताम् । अत एव चतुर्गुणोपासकापेक्षयाऽत्यल्पानामविज्ञातापि तदोकोग्रज्वलनं तत्प्रकाशितद्वार इत्युक्तरीत्या ज्ञातब्रह्मनाडीव्यतिरिक्तापि चक्षुःश्रोत्रादिरूपा गतिर्मार्गो भवेद्यतोऽतो नार्चिरादिमार्गेऽवान्तरभेदोऽस्तीत्यर्थः । तथोक्तं बृहदारण्यकभाष्ये

> केचित्तु मानुषा मुक्तिमनुत्क्रम्यैव देहतः ।
> देहपाते तु देहस्य दोषान्मुक्त्वैव सर्वशः ।
> मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजात् ॥
> देहक्षीणे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया ।
> पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ॥

इति । देवव्यतिरिक्तानामुत्क्रान्त्यादिसम्पूर्णमोक्षवतामेवार्चिरादिमार्गैक्यं न तु सर्वेषामिति भावः । ननु द्युपर्जन्यादेर्जीवोत्पत्तिमार्गस्य प्रेतत्वस्य च सत्वात् कथं न मार्गभेद इत्यत आह ॥ न हीति ॥ सम्भव उत्पत्तिः ।



तयोर्देवयानपितृयानयोः सकाशात् ऊर्ध्वलोकगमनमार्गयोरेवात्र विवक्षितत्वादिति भावः । एवं च सम्प्राप्त्या एकस्यैव मार्गस्य निर्णयादनुस्मृतिसम्भवादिति भावः ॥ १ ॥

**भा.बो.**— ॐ न च वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ इत्यत्र 'स वायुमागच्छति अर्चिषोऽहः' इति श्रुत्यवष्टम्भेन वायोर(ह्नो)हो वा द्वितीयप्राप्यत्वमिति सन्देहे उभयोरपीति पूर्वः पक्षः । वायोरेवेति सिद्धान्तः । तत्रापि सुक्रमविशेषसम्प्राप्तिरूपपूर्वपक्षसिद्धान्तन्यायावेव 'न च तत्र' इत्यादिना न्यायविवरणेन विवृतौ । तथा हि । तत्र तत्र स वायुमागच्छति, अर्चिषोऽहरिति श्रुतिद्वये मार्गस्यान्यथा वायोर्द्वितीयत्वेन अह्नो द्वितीयत्वेन चोक्तेरिति पूर्वपक्षन्यायविवरणांशयोजना । शिष्टं पूर्ववत् । पूर्वपक्षन्यायश्च वायोरेव सुक्रमोपपत्तेरिति सूचनेन सूचितः । सिद्धान्ते तूदाहृतश्रुत्यादेर्मार्गस्यैकत्वे पूर्ववदेव । विशेषरूपत्वं वायोर्द्वितीयत्वे च ततो वायुं ततोऽहरिति वाय्वह्नोः क्रमेण द्वितीयतृतीयतया प्राप्यत्वप्रतिपादकत्वेनेत्यपि द्रष्टव्यम् । एकमार्गस्यैवेत्यस्य च तत्रापि वायुद्वितीयकस्येत्यर्थः । अत एव तत्वप्रकाशिकायामेतत् 'अधिकारिभेदेन मार्गभेदाद्द्वितीयप्राप्यत्वमिति पूर्वः पक्षः । न मार्गभेदेन द्वयोर्द्वितीयप्राप्यत्वं मन्तव्यं किं त्वेक एव मार्गः । तत्रापि मार्गेऽर्चिषोऽनन्तरमेव वायुं गच्छति । न च श्रुत्यन्तरविरोधः । वायोरनन्तरमह्नः प्राप्तिसम्भवादिति भावः' इति पूर्वपक्षसिद्धान्तौ दर्शितौ । तदेतदुक्तं सम्बन्धदीपिकायां- 'वायुशब्दादविशेषविशेषाभ्यां सुक्रमो विशेषसंप्राप्तिः' इति । (सिद्धान्तन्यायश्च, विशेषेत्यनेन भागेन 'स इतो गतो द्वितीयम्' इति विशेषश्रुत्या वायोरेव द्वितीयप्राप्यत्वस्य प्राप्यत्वादिति वदता सूचितः ।) ॥ २ ॥

**भा.बो.**— ॐ तटितोऽधिवरुणः सम्बन्धात् ॐ ॥ इत्यत्र 'संवत्सराद्वरुणलोकं संवत्सरात्तटितम्' इति श्रुत्यवष्टम्भेन संवत्सरानन्तरं वरुणलोकस्य प्राप्यत्वमुत तटित इति सन्देहे उभयोरपीति पूर्वः पक्षः । तटित एवेति सिद्धान्तः । तत्रापि सुक्रमविशेषप्राप्तिरूपावेव पूर्वपक्षसिद्धान्तन्यायौ 'न च तत्र' इत्यादिना न्यायविवरणेनैव विवृतौ । तथा हि । तत्र तत्र

संवत्सराद्वरुणलोकं संवत्सरात्तटितमिति श्रुतिद्वये मार्गस्यान्यथा तटिल्लोकस्य वरुणलोकस्य च साक्षात्संवत्सरानन्तरत्वेनोक्तेः । संवत्सरलोकात्प्रजापतिलोकं गन्तुं अधिकारिभेदेन मार्गभेदोपपत्तेर्विरोधाभावादिति पूर्वपक्षविवरणयोजना । शिष्टं पूर्ववत् । सिद्धान्ते तूदाहृतश्रुत्यादिकं मार्गैकत्वविषय एव द्रष्टव्यम् । तटित एव संवत्सरानन्तरप्राप्यत्वे तु 'तटिता ह्यूह्यते वरुणलोकः' इति भाष्योदाहृता विशेषश्रुतिर्द्रष्टव्या । अत एव तत्वप्रकाशिकायामस्मिन्नप्यधिकरणे एतावेव पूर्वपक्षसिद्धान्तन्यायाविति हृदि निधाय तद्विवरणरूपतत्र तत्रेत्यादिन्याय-विवरणानुसारेण । 'संवत्सरलोकात्प्रजापतिलोकं गन्तुमधिकारिभेदेन मार्गभेदोपपत्तेरिति पूर्वः पक्षः । किं त्वेक एव मार्गः । तत्र संवत्सरानन्तरं तटितमेव गच्छति' इति सिद्धान्तश्च प्रदर्शितौ । तदेतदुक्तं सम्बन्धदीपिकायां 'तटितोऽधिवरुणः सम्बन्धात्सुक्रमविशेषसम्प्राप्तिः' इति । (पूर्वपक्षन्यायस्तु 'तटितोऽधिवरुणः' इत्यनेन तटिदनन्तरं वरुणलोकस्य प्राप्यत्वोक्त्या संवत्सरानन्तरं तटिद्वरुणयोरप्यधिकारिभेदेन प्राप्यत्वान्मार्गस्य सुक्रमोप-पत्तेरिति सूचितः ।) ॥ ३ ॥

**भा.बो.**— ॐ आतिवाहिकस्तल्लिङ्गात् ॐ ॥ इत्यत्राप्यातिवाहिक-मुख्यप्राणयोः वायुशब्दप्रयोगात् स वायुमागच्छतीत्यादौ अर्चिरनन्तरं प्राप्यत्वेनोक्तो वायुरातिवाहिको मुख्यो वेति सन्देहे मुख्य इति पूर्वः पक्षः । आतिवाहिक इति सिद्धान्तः । तत्रापि सुक्रमविशेषसम्प्राप्तिरूपावेव पूर्वपक्षसिद्धान्तन्यायावनेनैव न्यायविवरणेन विवृतौ । तथा हि । तत्र तत्र 'स वायुमागच्छति' 'उत्क्रान्तो विद्वान्' इति श्रुतिद्वये मार्गभूतस्य वायोरन्यथाऽर्चिरनन्तरं विद्युदनन्तरं च प्राप्यत्वोक्तेः प्रथमत एव मुख्यवायुग्रहणे वायुशब्दमुख्यार्थत्वेन प्रतीतौ प्रथमप्राप्यत्वलक्षणसुक्रमोपपत्तेरिति पूर्वपक्षन्यायविवरणयोजना । सिद्धान्ते तु विशेषश्रुतेर्ज्ञानिनामेकमार्गस्यैव प्राप्तेरित्येतावत एव न्यायविवरणस्य ग्रहणम् । तद्योजना तु । अन्तिमस्य वायोर्दिवस्पतित्वप्रतिपादिकाया उत्क्रान्तो विद्वानिति श्रुतेर्ज्ञानिनां एकमार्गस्यैव मुख्यवायुरूपमार्गस्यैवान्ते प्राप्तेर्न त्वमुख्यस्यातिवाहिकस्येति परिशेषाद्द्वितीयप्राप्यत्वमातिवाहिकस्यैवेति । अत एव तत्वप्रकाशिकायामनयोरेव न्याययोरेतदधिकरणेऽपि सम्बन्ध इत्यभिप्रेत्य



तद्विवरुणरूपन्यायविवरणतात्पर्यार्थतया 'मुख्यस्यापि प्रथमप्राप्तिसम्भवात् । न च विशेषहेतुरस्तीति पूर्वः पक्षः । उत्तरस्य दिवस्पतित्वश्रवणात्तस्य मुख्यवायुलिङ्गत्वादिति भाव' इति सिद्धान्तश्च प्रदर्शितौ । तदुक्तं सम्बन्धदीपिकायाम् 'आतिवाहिकस्तल्लिङ्गात्सुक्रमः विशेषप्राप्तिः' इति । तत्रैव तदधिकरणत्रयेऽपि सिद्धान्तन्यायस्योपपादनं कृतम् । अत्र सिद्धान्तसंप्रापक-विशेषवाक्यानि, 'स इतो गतो द्वितीयां गतिं वायुमागच्छति । तटिता ह्यूह्यते वरुणलोकः । उत्क्रान्तो विद्वान्परमभिगच्छन्विद्युतमेवान्तत उपगच्छति । द्यौर्वा व विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इत्यादिनाऽऽचार्येणैव भाष्ये दर्शितानीति पृथगविवरणे कारणमप्युक्तम् ।

अत्र चास्यान्तर्भेदाधिकरणत्वात्तदन्तर्गतावान्तराधिकरणसमुदायस्याप्युक्तेः पृथगविवरणमिति ज्ञातव्यमिति । यद्वा विक्रमोरुत्वरूपावेव पूर्वपक्षसिद्धान्त-न्यायावेतदधिकरणसम्बन्धित्वेनापि 'न च सोमादग्निम्' इत्यादिन्यायविवरणेन विवृतौ ज्ञातव्यौ । तथा हि । मुख्यवाय्वातिवाहिकयोर्मार्गत्वेनावश्यं प्राप्यत्वान्मार्गे तु सोमादवरस्याग्नेरिन्द्रावरस्य ध्रुवस्यापि प्रथमप्राप्यत्वश्रवणादुत्तमत्वक्रमानुसारेणैव प्राप्त्यभावादुत्तरस्य मुख्यवायुत्वे नियामकविशेषाभावेन बाधकाभावाच्च । प्रथमप्राप्यो मुख्यवायुः । परप्राप्यस्तु प्रधानवायोरवरोऽपि अन्य आतिवाहिकः किं न स्यादिति पूर्वपक्षन्यायविवरणयोजना । अत एव तत्वप्रकाशिकायां 'उभयव्यामोहात्' इति सूत्रभाष्यानुसारेण, 'ननु तथापि कथं पूर्वप्राप्यस्य वायोरातिवाहिकत्वसिद्धिः' इत्यादिना निर्धारितपूर्वपक्ष उक्तः । एवं चोत्तमत्वक्रमापेक्षया विपरीतक्रमेणातिवाहिकात्पूर्वमर्चिषोऽनन्तरमेव मुख्यवायोः प्राप्यत्वान्न तस्याधिक्यमिति न वाच्यमिति भावः । सिद्धान्ते तु 'उत्तमत्वात्तस्य' इत्येतावत एव न्यायविवरणांशस्य ग्रहणम् । तस्याभिप्रायः । यद्यपि पूर्वोक्त आतिवाहिको मुख्यो वा परोक्तो मुख्यो वाऽऽतिवाहिको वेति सन्देहः तथापि पूर्वोक्तस्यातिवाहिकत्वं परोक्तस्य च मुख्यत्वं सिध्यति । तस्य परप्राप्यत्वेन बुद्धिस्थस्यैव दिवस्पतित्वरूपोत्तमत्वादेव । तस्य द्युशब्दवाच्यभारतीपतित्वस्योत्त-मत्वादतिशयितधर्मत्वान्मुख्यवायोश्च रुद्राद्युत्तमत्वात्तस्यैव लिङ्गत्वादिति । एवं च दिवस्पतित्वरूपोरुत्वादन्तिमप्राप्यस्य मुख्यवायुत्वमेवेति निर्णये

पूर्वोक्तस्यातिवाहिकत्वनिश्चय इति युक्तं तस्याधिक्यमिति । (अयं च न्याय:'तत्सिद्धेः' इत्यनेनोक्तस्य दिवस्पतित्वविशेषणात् पूर्वोक्त आतिवाहिकः, उत्तरोक्तश्च मुख्य इति सिद्धिरिति वदता सूचितः ।) ॥ ४ ॥

## वैद्युताधिकरणं कार्याधिकरणं च IV-3-5,6

**न्या.वि.— न च सोमादग्निमग्नेरिन्द्रमिति सोमादग्नेरेवमस्यापि प्राप्तेः प्रधानवायोरप्यवरोऽन्यः प्राप्योऽस्त्विति वाच्यम् । उत्तमत्वात्तस्यैव ब्रह्मप्रापयितृत्वशक्तेः । 'वायुरेव ब्रह्म गमयति तस्य ह्येषा शक्तिः । न ह्यन्यो ब्रह्म गमयति प्रियो ह्येनद्गमयति। ह्यन्यः प्रियो ब्रह्मण' इति श्रुतेः । मार्गे त्ववरस्यापि यथामार्गं पश्चात्प्राप्तिर्भवति लोकवत् । न हि राजानं यः कश्चित्प्रापयति क्लृप्तमतिप्रियं चापहाय ॥ ५ ॥**

**भा.बो.**— ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥ इत्यत्र मार्गत्वाविशेषादुभयथापि सम्भवेन मुख्यवायोरनन्तरमन्यः प्राप्योऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । नास्तीति सिद्धान्तः । तत्र 'विक्रमः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च सोमादग्निमिति ॥ प्रधानवायोरपीत्यपिशब्दः प्रधानत्वस्य प्रयोजकत्वज्ञापनार्थश्च । अनेन मार्गेऽधमप्राप्त्यनन्तरमुत्तमस्यैव प्राप्तिरित्युत्तमत्वक्रमानुसारेण प्राप्तिक्रमाभाव इति चोत्तमसोमेन्द्रादिप्राप्त्यनन्तरमग्निध्रुवप्राप्त्योत्तमक्रमापेक्षया विपरीतक्रम इति वा विक्रम इत्येतद्विवृतं भवति । एवं च विक्रमान्मुख्यवायोरप्यनन्तरमन्यस्य प्राप्यत्वसम्भवान्न तस्यातिशयेन प्राधान्यमिति नेति भावः । (अयं च न्यायो 'वैद्युतेनैव तत्' इत्यनेन विद्युत्पतिना वायुनैव ब्रह्म गच्छतीति वदता उत्तमत्वक्रमविपरीतक्रमेण प्राप्यत्वश्रवणान्मुख्यवायोरनन्तरमन्यः प्राप्योऽस्तीति सूचनेन सूचितः ।) तद्धेतुत्वेन 'उरुत्वम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ उत्तमत्वादिति ॥ तस्यैवेत्येतदुभयत्रापि सम्बध्यते । अनेनाऽन्तिमप्राप्यत्वसाधकब्रह्मप्रापयितृत्वशक्तिसाधकत्वेन परम्परया वायोरन्तिमप्राप्यत्वसाधकमुरुत्वमित्युक्तं भवति । ब्रह्मप्रापयितृत्वशक्तेरसिद्धिं परिहर्तुं श्रुतिमुदाहरति ॥



वायुरेवेति ॥ पूर्वपक्षयुक्तेरन्यथासिद्धिमाह ॥ मार्गे त्विति ॥ ननु वायोरनन्तरं ब्रह्मप्रियस्यैव प्राप्यत्वाभ्युपगमे तस्यापि ब्रह्मप्रापयितृत्वसम्भव इत्यत आह ॥ न हि राजानमिति ॥ वायोरेव तु ब्रह्मातिप्रियत्वं ब्रह्मप्रापयितृत्वं च क्लृप्तमिति भावः । एवं चोरुत्वाद्वायोरेव ब्रह्मप्रापयितृत्वमिति युक्तं तस्य प्राधान्यमिति भावः । (अयं च न्यायः 'तच्छ्रुतेः' इत्यनेन वायोरुत्तमत्वप्रतिपादकश्रुतिग्राहकेण सूचितः ।) ॥ ५ ॥ श्रीः ॥

न च चतुर्मुखमुक्तिपर्यन्तं सन्ततत्वनियमात् बन्धस्य तावद्भगवत्प्राप्तिर्नास्तीति नियमः ।

**यान्ति देवं परं केचित्पूर्वं केचिल्लये विभुम् ।**
**योग्यतातारतम्येन विशेषोऽयमपीष्यते ॥**

इति श्रुतेस्तथाप्राप्तत्वात् । न च परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वादपोह्ययुक्तेस्तस्यैव प्राप्तिनियमः । यान्ति देवं परं केचिदिति प्रमाणप्राप्तत्वादेव । न च परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियमः ।

**क्रमानुरागी भगवान् क्रमात्पुम्भिरवाप्यते ।**
**अतः क्रमात्समृद्धे तु ज्ञाने ब्रह्मलये नरैः ।**
**प्राप्यते नियमेनैव कैश्चिदेवाप्यते मृतौ ॥**

इति भगवतः क्रमानुरागित्वश्रुतेः । न च बहुधाश्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरिति वाच्यम् । श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वात् । 'सप्रतीकाश्चतुर्मुखमप्रतीकाः परममुहैते गच्छन्त्यागच्छन्ति च चतुर्मुखात्परमं परमाच्चतुर्मुखं यावल्लियमथ सह चतुर्मुखेन विमुच्यन्ते आनन्दिनो भवती'ति हि श्रुतिः । अन्तर्भेदाधिकरणत्वात्समुदायोक्तिः ॥ ६ ॥

इति श्रीमन्न्यायविवरणे चतुर्थाध्यायस्य तृतीयः पादः ॥

**भा.बो.**— ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ इत्यत्र 'स एतान् ब्रह्म गमयति' इति श्रुत्युक्तब्रह्मशब्दश्रवणात्किं मुख्यं वा उतामुख्यमुतोभयमित्यत्राप्येकस्योभयप्राप्यत्वसम्भवात्कश्चित्परं कश्चित्कार्यमित्यर्थः स्यात् । तत्र

किं केनचित्क्रमेणोभयप्राप्तिरुत क्रमं विनैव स्वेच्छानुसारेण । क्रमपक्षेऽपि किं कश्चिद्योग्यतारूपः क्रमस्तदन्यो वेति सन्देहे कार्यमेव परमेव क्रमं विना स्वेच्छानुसारेणोभयप्राप्तिः । क्रमपक्षेऽपि योग्यतातिरिक्त एव क्रम इति पूर्वः पक्षः । उभयमपि श्रुत्युक्तं केनचित्क्रमेणैवोभयप्राप्तिस्तत्रापि योग्यतारूप एव क्रम इति सिद्धान्तः । तत्र कार्यमेवेति प्रथमपक्षे 'सान्तानिकम्' इत्युक्तपूर्वपक्षन्यायमर्थात्तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च चतुर्मुखेति ॥ सन्ततत्वनियमाद्बन्धस्येति । 'तथापि प्रकृतेर्बन्धो ब्रह्मणा भिद्यते' इति वचनादिति भावः ॥ भगवत्प्राप्तिर्नास्तीति ॥ किं तु चतुर्मुखप्राप्तिरेवेति भावः । (अयं च न्यायः 'अस्य गत्युपपत्तेः' इत्यनेन चतुर्मुखमुक्तिपर्यन्तं सन्ततत्वाद्बन्धस्य प्रलयात्पूर्वं कार्यस्यैव गत्युपपत्तेरिति वदता सूचितः ।) तद्धेतुत्वेन 'आप्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ यान्ति देवमिति ॥ केचिदप्रतीकालम्बनाः । परं केचित्प्रतीकालम्बनाः । विभुं- चतुर्मुखं, लये- लयात्पूर्वं यान्तीत्यर्थः । अयमुभयप्राप्तिरूपो विशेषः योग्यतातारतम्य-रूपक्रमेणैवेष्यते न तु यथेष्टमित्यर्थः । यान्ति देवमिति पूर्वार्धस्यैवात्रोप-योगेऽप्युत्तरार्धोदाहरणं तु योग्यतारूपक्रमेणैवोभयप्राप्तिरिति वक्ष्यमाणचतुर्थ-सिद्धान्तापेक्षयेति ज्ञातव्यम् । (अयं च न्यायोऽप्रतीकालम्बनान्न-यतीत्यनेनाऽप्रतीकालम्बनान् परं नयति, प्रतीकालम्बनान्कार्यं नयतीत्युक्त्या 'यान्ति देवम्'इति प्रमाणबलेनोभयप्राप्तेः प्राप्तत्वादिति सूचनेन सूचितः ।)

परमेवेत्यस्मिन्पूर्वपक्षपक्षे 'प्राप्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च परब्रह्मण एवेति ॥ प्रथमाप्राप्तत्वादिति । मुख्यामुख्ययोर्मुख्य एव सम्प्रत्ययादिति भावः । अपोहायुक्तबाधकाभावादिति भावः । (अयं च न्यायः 'परं जैमिनिर्मुख्यत्वात्' इत्यनेन ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वाद्ब्रह्मशब्देन तस्यैव प्राप्तेरिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'आप्तिः' इत्युक्तमेव सिद्धान्तन्यायं विवृणोति ॥ यान्ति देवमिति ॥ अत्र कार्यमेव परमेवेति पूर्वपक्षद्वये उभयमित्येक एव सिद्धान्त इति, अनुव्याख्याने प्राप्तिरित्येक एव सिद्धान्तन्याय उक्तः । अत्रापि यान्ति देवमिति प्रमाणोदाहरणेनैक एव न्यायः पूर्वपक्षद्वयनिरासाकत्वेन द्विवारं विवृतः । अत



एव प्रागुक्तन्यायादेवेति सूचयितुं प्राप्तत्वादेवेत्येवशब्दः । (अयं च न्यायोऽप्रतीका-लम्बनान्नयतीत्यनेन कार्यपरयोरुभयोरपि प्राप्तेः प्रमाणबलेन प्राप्तत्वादिति सूचनेन सूचितः ।) क्रमं विना स्वेच्छानुसारेणैवोभयप्राप्तिरिति तृतीयपूर्वपक्षे 'अभीष्टता' इत्युक्तं पूर्वपक्षन्यायं किञ्चिद्विवृण्वन् प्रतिक्षिपति ॥ न च परप्राप्तिरिति ॥ तत्प्राप्तिरित्यनन्तरं यस्य चतुर्मुखप्राप्तिरभीष्टा तस्य तत्प्राप्तिरित्यपि ग्राह्यम् । उभयत्रापि साधकसद्भावात् । 'यत्प्राप्तुमभिवाञ्छन्ति' इत्यादिवचनाच्च क्रमस्य चादर्शनादिति भावः । (अयं च न्यायः 'तत्क्रतुः'इत्यनेन तत्प्राप्तीच्छामात्रेण तत्प्राप्तिनिषेधपूर्वकं क्रमाभिधायिकायाः 'स यथा कामो भवती'ति श्रुतेः ग्राहकेण सूचितः) तद्धेतुत्वेन 'क्रमानुरागः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ क्रमानुरागीति ॥ नरैः प्रतीकालम्बनैः । चतुर्मुखप्राप्तिपूर्वकं प्राप्यते । कैश्चिदप्रतीकालम्बनैः । साक्षादाप्यत इत्यत्र भगवानित्यनुवर्तते । मृताविति लयात्पूर्वमित्यर्थः (अयं च न्यायः 'तत्क्रतुश्च' इत्यनेन सूचितः ।) क्रमपक्षेऽपि योग्यतातिरिक्तः सौकर्यरूप एव क्रम इति पूर्वपक्षे 'सौकर्यम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च बहुधेति ॥ पक्षद्वयस्यापि प्रामाणिकत्वेना-परिहार्यत्वात् । महाफले क्रमाभावस्यायोगात् । सौकर्यव्यतिरिक्तक्रमस्य चादर्शनादिति भावः । (अयं च न्यायः 'अप्रतीकालम्बनान्' इत्यनेन प्रतीकालम्बनाप्रतीकालम्बनत्वरूपयोग्यतारूपक्रमोक्त्या यस्य यत्प्राप्तौ सौकर्यं तस्य तत्प्राप्तिरिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'कथितानुवृत्तिः' इत्युक्तसिद्धान्त-न्यायं विवृणोति ॥ श्रुत्युक्तेति ॥ अनुवृत्तिरनुसरणम् । तामेव श्रुतिमुदाहरति ॥ सप्रतीकाश्चेति ॥ परमाच्चतुर्मुखं, चतुर्मुखात्परममित्यन्वयः । ननु कार्यं बादरिरित्यादिदशसूत्र्या एकाधिकरणत्वे सान्तानिकमित्यादिपूर्वोत्तरन्यायबाहुल्यं कथमित्यत आह- अन्तर्भेदेति । अन्तर्भेदो यस्मिंस्तन्दन्तर्भेदं, तच्च तदधिकरणं च तदन्तर्भेदाधिकरणम् । दशसूत्र्या एकाधिकरणत्वे भिन्नाभिन्नार्थप्रतिपादनपूर्वकं गम्यालक्षणैकार्थप्रतिपादकत्वेनान्तर्भेदाधिकरणत्वात् सान्तानिकमित्यादिपूर्वोत्तरपक्षन्यायसमुदायस्यावान्तरप्रतिपाद्यापेक्षया उक्तिरित्यर्थः । तदुक्तं सम्बन्धदीपिकायां

मार्गेणानेन किं गम्यमित्यस्यैव विनिर्णये ।
कार्यं बादरिरित्यादिसूत्राणां व्यापृतिर्यतः ॥
कार्यप्राप्तौ न नियमः परमाप्तौ च नास्ति सः ।
न चेच्छयाऽस्य नियमो न चाऽनियम इष्यते ॥

इत्यादिरूपेण । तथा, 'बहवो निर्णयाश्च यत् । अन्तर्भेदाधिकरणमित्येव तत उच्यते' इति । (अयं च न्यायः 'अप्रतीकालम्बनान्' इत्यनेनैव सप्रतीकालम्बनाश्चतुर्मुखं गच्छन्ति श्रुतिकथितस्यैवानुसरणीयत्वादिति सूचनेन सूचितः ।) ॥ ५-६ ॥

इति श्रीमन्न्यायविवरणभावबोधे चतुर्थाध्यायस्य तृतीयः पादः ॥ श्रीः ॥

# अथ चतुर्थः पादः

## संपद्याधिकरणम् IV-4-1

**न्या.वि.— न च 'एतं सेतुं तीर्त्वा'इत्यत्रातिक्रमोक्तेर्मुक्तो ब्रह्म तीर्त्वा गच्छति । तरतीति सामान्यप्रतीतेः । ब्रह्म तीर्त्वेदं गच्छतीति विशेषानुक्तेः । 'इमां घोरामशिवां नदीं तीर्त्वा ब्रह्म सम्पद्यते' इति विशेषोक्तेश्चैतं सेतुं प्रत्यन्यत्तीर्त्वेत्यन्यथोपपत्तेः ॥ १ ॥**

**भा.बो.—** भोगप्रतिपादकैतत्पादान्तर्गताधिकरणपूर्वपक्षसिद्धान्तन्यायाः अनुव्याख्यायां सङ्ग्रहणोक्ताः ।

अतिक्रमोक्तिः कृतिरर्थलाभः परा गतिः पारगतिस्तदोकः ।
समस्तकार्यं वशिता च विश्वसम्भावनायुक्तयस्त्वन्यपक्षे ।
सामान्यरूपं प्रतिभानमुक्तिराश्चर्यता कृत्रिमताऽस्तदोषः ।
विशेषक्लृप्तिः कृतनिनिश्रमश्च माहात्म्यमित्येव सुनिर्णयार्थाः ॥ इति ॥

ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ॥ इत्यत्रार्चिराद्यतिक्रमोक्त्या ब्रह्मणो गम्यत्वोक्त्या च ज्ञानी किं ब्रह्मातिक्रम्य भोगान् भुङ्क्ते अथ तत्समीप एवेति



सन्देहे अतिक्रम्यैवेति पूर्वः पक्षः । समीप एवेति सिद्धान्तः । तत्र 'अतिक्रमोक्तिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चैतं सेतुमिति ॥ अतिक्रमेत्यतः पूर्वं ब्रह्मेत्युपस्कर्तव्यम् । ब्रह्मणोऽप्यतिक्रमे गम्येनान्येन भवितव्यमित्याशयेन गच्छतीत्युक्तम् । ननु श्रुतौ समानकर्तृकक्रिया-प्रदर्शनार्थं भवतीति श्रूयते । अत एवेदं गच्छतीति वक्ष्यति । एवं चैतं सेतुमिति ब्रह्मणोऽप्यतिक्रमोक्तेर्न तद्गम्यमिति नेति भावः । (अयं च न्यायः 'अविहाय' इत्यनेन ब्रह्मणोऽतिक्रमाभावोक्त्या सूचितः ।) तद्धेतुत्वेन 'सामान्यरूपम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ तरतीति ॥ तीर्त्वेत्यस्यार्थतो ग्रहणमिदम् । कथमनेन सामान्यप्रतीतिरित्यत आह ॥ ब्रह्म तीर्त्वेति ॥ तर्ह्यनिर्णय इत्यत आह ॥ इमामिति ॥ एतं सेतुं प्रतीति ॥ 'सेतुश्चापि विधारणात् ।

सितमस्मिन् जगत्सर्वमिति सेतुरितीरितः ।
एतं सेतुं प्रति पुमानन्यत्तीर्त्वा ह्यदोषवान् ॥

इत्युक्तेश्चेति भावः । एवं चैतं सेतुमिति श्रुतेः सामान्यरूपत्वादेतं सेतुं प्रति अन्यत्तीर्त्वेत्यर्थोपपत्तेर्युक्तं तस्य गम्यत्वमिति भावः । (अयं च न्यायः 'शब्दात्' इत्यनेन 'इमां घोराम्' इति श्रुतिग्राहकेण एतं सेतुं तीर्त्वा इदं गच्छतीति वचनाभावेन सामान्यरूपत्वादिमां घोरामिति श्रुत्यनुसारेण एतं सेतुं प्रत्युतान्यत्तीर्त्वेत्यर्थोपपत्तेरिति सूचनेन सूचितः ।) ॥ १ ॥

## मुक्ताधिकरणम् IV-4-2

**न्या.वि.— न च कृतिमत्वादमुक्त एवोच्यते । स तत्र पर्येतीत्यादौ स्वेन रूपेणाभिनिष्पद्यत इति मुक्तस्य स्पष्टं प्रतिभातत्त्वात् श्रुतौ । स तत्र पर्येतीति श्रुत्यैक्यप्रतीतेश्चैवंभूतस्यापि प्रकरणत्वं प्रकल्प्य श्रुतिबाधाङ्गीकारे सा श्रुतिरप्येवं विभज्य किं योजयितुं न शक्यत इति श्रुतेरेवाभावप्रसङ्गः । सत्यं ज्ञानमित्यादावपि सत्यमित्यस्यान्नमित्यनेनान्वय इत्यादिप्रसङ्गात् ॥ २ ॥**

भा.बो.— ॐ मुक्तः प्रतिज्ञानात् ॐ ॥ इत्यत्र 'स तत्र पर्येति' इत्यादिनाऽस्य क्रियाप्रतीतेः श्रुत्युक्तेरुभयथापि सम्भवात् किं मुक्तो न वेति सन्देहे न मुक्त इति पूर्वः पक्षः । मुक्त इति सिद्धान्तः । तत्र 'कृतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च कृतिमत्वादिति ॥ कृतिरत्र क्रिया ग्राह्या । पर्येतीति श्रुत्यानुगुण्यात् । अत एव तत्वप्रकाशिकायां 'स तत्र पर्येतीत्यादिनाऽस्य क्रियाप्रतीतेः' इत्युक्तम् । न च कृतिमत्वेऽपि मुक्तत्वं किं न स्यादिति वाच्यम् । न हि क्रियावत्त्वं कृतकृत्यस्य मुक्तस्योपपद्यत इति मुक्तत्वे क्रियावत्त्वमेव न स्यादिति भावः । एवं च कृतिमत्वाच्छ्रुत्युक्तस्यामुक्तत्वेन मुक्तस्य भोगाऽसम्भव इति नेति भावः । (अयं च न्यायः 'तत्र पर्येति' इति श्रुत्युक्तस्य मुक्तत्वस्य विधायकेन मुक्त इत्यनेन स तत्र पर्येतीति क्रियावत्त्वविधानादमुक्त एव सर्वत्रोच्यत इति सूचनेन सूचितः ।) तद्धेतुत्वेन 'प्रतिभानम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ स्वेन रूपेणेति ॥ इति श्रुतावित्यन्वयः । यद्वेति पूर्ववाक्येन । श्रुतौ- स तत्र पर्येतीत्यस्यामित्यर्थः । ननु स एष सम्प्रसूतोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति निर्गुणब्रह्मोपासकस्य स्वरूपाविर्भावाभिवायकमिदं प्रकरणान्तरम् । स तत्र पर्येतीत्यत्र तु पूर्वोक्तसगुणप्रतिपादकदहरविद्योपासको भोगवत्त्वेनोच्यते । स चाऽमुक्त एव । तथा परं ज्योतिरित्यस्य स तत्र पर्येतीत्यस्माद्भिन्नप्रकरणत्वात्कथमनेन वाक्येन तद्वाक्योक्तभोगवतः स्पष्टतया प्रतिभानमित्यत आह ॥ स तत्रेति ॥ स तत्र पर्येतीत्यस्य परं ज्योतिरिति पूर्वश्रुत्यैक्यस्यैकविषयत्वस्य प्रतीतेरित्यर्थः । 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति' इत्यानुपूर्वीविशिष्टवाक्ये स इति तच्छब्देन स्वेन रूपेणाभिनिष्पद्यत इत्युक्ताविर्भूतस्वरूपमुक्तस्यैव परामर्शः । न तु दूरोक्तदहरविद्योपासकस्य । अव्यवहितपरामर्शसम्भवे व्यवहितपरामर्शकल्पकाभावादिति भावः । प्रतीतपरित्यागेनाऽन्यथाकल्पने बाधकमाह ॥ एवंभूतस्यापीति ॥ एकवाक्यतया प्रतीतस्यापि प्रकरणत्वं भिन्नप्रकरणत्वम् । श्रुतिबाधः स तत्रेत्यस्य मुक्तपरत्वापहारः । सा श्रुतिः परं ज्योतिरिति श्रुतिः । विभज्यपरं ज्योतिस्तिष्ठतीत्यादिरूपेण । श्रुतेरेव एकस्मिन्नर्थे



प्रमाणतया एकवाक्यतापन्नश्रुतेरेवेत्यर्थः । ततश्चाव्यवहितत्वेनैकवाक्यतया प्रतीतस्यापि ज्ञापकं विना भिन्नप्रकरणत्वकल्पने एकवाक्यतया सम्प्रतिपन्नस्य परं ज्योतिरुपसम्पद्येत्यस्यापि तिष्ठतीत्यादिपदाध्याहारेण भिन्नप्रकरणत्वं कल्पयितुं शक्यत इति श्रुतौ किञ्चिदप्येकार्थतयैकं वाक्यं एकं प्रकरणमिति न स्यादिति भावः ।

ननु 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतीनां सत्यादिपदानां ब्रह्मपदेनैकार्थप्रतिपादकतया सामानाधिकरण्यरूपान्वय सम्भवेनैकवाक्यतापन्नानां विद्यमानत्वात्कथमेकवाक्यतापन्नश्रुतेरेवाभावप्रसङ्ग इत्यत आह ॥ सत्यमिति ॥ न केवलं सा श्रुतिरेव विभज्य योजयितुं शक्यते किं तु सत्यं ज्ञानमित्यत्रापि । एवं व्यवहिताङ्गीकारेण योजना कर्तुं शक्यत इत्यपेरर्थः । अनेन स तत्रेत्यस्य सन्निहितमुक्तपरत्वत्यागेन व्यवहितसगुणोपासकस्य जीवन्मुक्तिप्रतिपादकत्वाङ्गीकारे चातिप्रसङ्ग उक्तो भवति । तथा हि । अन्नमयादिप्रकरणस्य सत्यं ज्ञानमिति मन्त्रवर्णोक्तप्रवचनरूपत्वेन सत्यमित्यस्य 'येऽन्नं ब्रह्मोपासते' इत्युक्तान्नमित्यनेनैकार्थप्रतिपादकत्वेन सामानाधिकरण्यरूपान्वयः स्यात् । आदिपदेन ज्ञानमित्यस्य, मन इत्यनेन चाऽनन्तमित्यस्य, आनन्दमित्यनेनोक्तरीत्या सामानाधिकरण्यरूपान्वयः स्यात् । न चेदं तस्येष्टम् । सत्यं ज्ञानमिति मन्त्रस्याखण्डार्थनिष्ठतया ब्रह्मपरत्वेनान्नमयादिप्रकरणानां च कोशपरत्वेन भिन्नप्रकरणत्वाङ्गीकारादिति पररीत्यैवेदमापादनं द्रष्टव्यम् । सिद्धान्ते त्वेकप्रकरणत्वस्याऽचार्यैरेव 'मात्रवर्णिकमेव च गीयते' इति सूत्रार्थतयोपपादितत्वादिति । एवं च स तत्र पर्येतीति श्रुत्युक्तस्य स्पष्टं मुक्तत्वप्रतिभानाद्युक्तो मुक्तस्य भोग इति भावः । (अयं च न्यायः 'प्रतिज्ञानात्' इत्यनेन सूचितः ।) ॥ २ ॥

## आत्माधिकरणम् IV-4-3

न्या.वि. — न च परंज्योतिःशब्देनादित्यज्योतिरङ्गीकारे, 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः' इत्यादिनैकार्थतेति प्रयोजनम् ।

**'अथ किमुच्यते परंज्योतिरित्यात्मैव परं ज्योतिः । स हि परमो द्योतते जीवाच्चाजीवाच्च तस्मादाहुः परं ज्योतिरिति तमेवैष जीवोऽभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति तस्यैव परंज्योतिष्ट्वोक्तेः । सावकाशलिङ्गान्निरवकाशश्रुतेरेव बलवत्त्वात् ॥ ३ ॥**

भा.बो. — ॐ आत्मा प्रकरणात् ॐ ॥ इत्यत्र परं ज्योतिरुपसम्पद्य स्वेनेति श्रुत्युक्तज्योतिःशब्दवाच्यत्वाविशेषात्किं विष्णुरादित्यो वेति सन्देहे आदित्य इति पूर्वः पक्षः । विष्णुरिति सिद्धान्तः । तत्र 'अर्थलाभः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च परञ्ज्योतिरिति ॥ एकार्थतेति ॥ स तेजसीति श्रुतिसमाख्यानादादित्याख्यं परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते प्रारब्धकर्मणा मुच्यत इत्यर्थस्य परं ज्योतिरिति वाक्यस्य वक्तुं शक्यत्वादिति भावः । एवं च परं ज्योतिःशब्दस्यादित्यपरत्वाङ्गीकारे स तेजसीति श्रुत्यैकवाक्यत्वरूपार्थलाभान्न मुक्तस्य ब्रह्मसमीपे भोग इति नेति भावः । (अयं च न्यायो भाष्यानुसारेण सावधारणेन हेत्यनेन परं ज्योतिःशब्देन सूर्य एवोच्यत इति सूचनेन सूचितः ।) तद्धेतुत्वेन 'उक्तिः' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ अथेति ॥ परं ज्योतिःशब्दवाच्यत्वं कुत इत्यत उक्तम् ॥ स हीति । द्योतते प्रकाशते । ज्योतिःशब्दस्यापि प्रकाशार्थत्वदिति भावः । जीवात्- ब्रह्मभवादेः, अजीवात्- श्रीतत्वात्, जडप्रकृत्यादेश्च परम इत्यनेन सम्बन्धः । निगमयति- तस्मादिति । यद्वा हि- यस्मात्तस्मात्परं ज्योतिरित्याहुः इत्यन्वयः । परंज्योतिरिति परंज्योतिःशब्दवाच्यमात्मानमित्यर्थः । तमात्मानम् । तस्यैवेति श्रुतावात्मैवेत्यवधारणादिति भावः । तर्ह्येकार्थतेति लिङ्गस्य का गतिरित्यत आह ॥ सावकाशेति ॥ लिङ्गात्समाख्यालक्षणादित्यर्थः । तस्य सावकाशत्वं नाम- परं जयोतिरिति वाक्यस्य स तेजसीति वाक्यसमानार्थत्वाङ्गीकारेऽपि स तेजसीति वाक्यस्यानुपपत्त्यभावः । उभयोरभिन्नार्थत्वसम्भवात् श्रुतेरेवेत्येवकारेण जात्यापि बलवत्त्वमाचष्टे । एवं च परंज्योतिःशब्देन ब्रह्मण एवोक्तेर्ब्रह्म प्राप्यैव भोगान् भुङ्क्ते इति भावः । (अयं च न्यायः 'प्रकरणात्'



इत्यनेनान्यप्रकारेणेन्यस्याप्युक्तिसम्भवान्न प्रकरणमात्रेण निर्णय इति निरवकाशा परंज्योतिःश्रुतिरपि विवक्षिता । तथा च परंज्योतिःशब्देन परमात्मन एवोक्तत्वान्न सूर्यः परंज्योतिःशब्देनोक्त इति सूचनेन सूचितः ।) ॥ ३ ॥

## अविभागाधिकरणम् IV-4-4

**न्या.वि.— न च परमगतित्वादीश्वराऽभुक्ता अपि भोगा मुक्तौ भवन्ति । ईश्वरस्य स्वत एव पूर्णानन्दत्वादभोगस्यापि सम्भवादिति वाच्यम् ।**

**पूर्णानन्दः पूर्णभुक्पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः ।**
**(पूर्णैश्वर्या) आश्चर्यत्वाद्भगवान्वासुदेवो विरुद्धशक्तिर्न च दोषस्पृगीशः ॥**

**इति श्रुत्याश्चर्यतयैव ब्रह्मण उभयोक्तेः । सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्त्वात् ॥ ४ ॥**

भा.बो.— ॐ अविभागेन दृष्टत्वात् ॐ ॥ इत्यत्रोभयथापि सम्भवात्सायुज्यभाग्भिः किं परमात्मभुक्ता एव भोगा भुज्यन्ते उत तदभुक्ता इति सन्देहे तदभुक्ता इति पूर्वः पक्षः । परमात्मभुक्ता एवेति सिद्धान्तः । तत्र 'परा गतिः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च परमगतित्वादिति ॥ परमगतित्वस्याप्रयोजकत्वपरिहारार्थमुक्तं ईश्वरस्येति । परमात्मभुक्ता एव मुक्तौ भुज्यन्त इति नियमे ईश्वरस्य नित्यपूर्णानन्दत्वेन कदाचिदभोगस्यापि सम्भवे तदा सञ्जातभोगेच्छानामपि मुक्तानां भोगाभावप्रसङ्गेन मोक्षस्यापुरुषार्थत्वापत्त्या परमगतित्वमेव न स्यादिति भावः । एवं च मोक्षस्य परमगतित्वान्मुक्तेन परमात्माभुक्ता एव भोगा भुज्यन्त इति न तस्य सर्वभोक्तृत्वमिति नेति भावः । (अयं च न्यायः सूत्रस्यापूर्णत्वात्पूर्वसूत्रादनुवृत्तेन मुक्तो विभागेन भोगान् भुङ्क्ते इति सम्बद्धेन मुक्त इत्यनेन मुक्तेः परमगतित्वमिति सूचितः ।) तद्धेतुत्वेन 'आश्चर्यता' इत्युक्तसिद्धान्तन्यायं श्रुत्युदाहरणपूर्वकं विवृणोति ॥ पूर्णानन्द इति ॥ उभयोक्तेः- पूर्णानन्दत्वपूर्णभुक्त्वरूपोभयोक्तेरित्यर्थः । तथा च ब्रह्मणः पूर्णानन्दत्वेऽपि पूर्णभुगिति पूर्णभोगस्यापि

श्रवणात्कदापि तस्याभोगाभावेन सञ्जातभोगेच्छानां भोगस्यैव सम्भवेन युक्तं परमात्मभुक्तभोगभोक्तृत्वं मुक्तानामिति भावः । ननु परमगतित्वयुक्तेस्तर्कसहितत्वेन प्रबलत्वात्कथमुपपत्तिमात्रात्सिद्धान्तनिर्णय इत्यत आह- सावकाशेति। परमगतित्वस्य मुक्तानामीश्वराभुक्तभोगभोक्तृत्वाभावेऽपि आवृत्तिशून्यत्वादिनोपपत्तेरित्यर्थः ॥ श्रुतियुक्तेति ॥ तथा बहुत्वेनापि प्राबल्यमिति भावः । एवं च ब्रह्मण आश्चर्यतयैव पूर्णानन्दत्वेऽपि पूर्णभोगश्रवणाद्युक्तं मुक्तानां भगवद्भुक्तभोगभोक्तृत्वमिति भावः । (अयं च न्यायो न्यायविवरणानुसारेण विरुद्धशक्तिरित्याश्चर्यतया पूर्णानन्दस्यापि पूर्णभोगस्य दृष्टत्वादित्यर्थकेन 'दृष्टत्वात्' इत्यनेन सूचितः ।) ॥ ४ ॥

## ब्राह्माधिकरणम् (चितिमााधिकरणम्) IV-4-5

**न्या.वि.— न च पारङ्गतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वात्तस्य देहस्यानपगमात् । "अथ विमुक्तस्य चिन्मात्र एव देहो भवति । चिन्मात्राणि करणानि तैरीशानुगृहीतैर्भोगान् भुङ्क्ते" इति श्रुतेः ॥५॥**

**भा.बो.—** ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या मुक्तानां भोगो युक्तो न वेति सन्देहे न युक्त इति पूर्वः पक्षः । युक्त इति सिद्धान्तः । तत्र 'पारगतिः' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च पारङ्गतत्वादिति ॥ पारेत्यतः पूर्वं संसारेति द्रष्टव्यम् । देहोऽपीत्यपिशब्दः जडदेहाभावसमुच्चये कैमुत्ये वा । न चाप्रयोजको हेतुः । देहवत्त्वे मुक्तत्वस्यैवायोगादिति भावः । न च मुक्तस्य देहाभावेऽपि न दोष इति वाच्यम् । भोगासम्भवे पुरुषार्थत्वमेव न स्यादिति । एवं च संसारपारगतत्वेन मुक्तस्य शरीराभावेन भोगासम्भवादपुरुषार्थत्वं मुक्तेरिति नेति भावः । (अयं च न्यायः 'एवमप्युपन्यासात्' इत्यनेन, 'स एष एतस्मान्मर्त्यात्' इति मुक्तत्वप्रतिपादकश्रुतिसूचनेन सूचितः ।) तद्धेतुत्वेन 'अकृत्रिमता' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ अकृत्रिमत्वादिति ॥ देहस्यचिन्मात्रस्येत्यर्थः । देहस्येत्यस्य पूर्वत्रोत्तरत्र च सम्बन्धः । अयं भावः । चिन्मात्रस्य जीवस्वरूपस्याकृत्रिमत्वात् ।



कृत्रिमदेहस्यैव संसारापादकत्वादकृत्रिमचिन्मात्रदेहाङ्गीकारेऽपि न संसारपारगतत्वरूपमुक्तत्वानुपपत्तिरिति । मुक्तस्य चिन्मात्रदेहादिसद्भावे श्रुतिमाह- अथेति । फलसम्बन्धः स्फुटः । (अयं च न्यायः 'तदात्मकत्वात्' इत्यनेन चिन्मात्रदेहस्य मुक्तस्वरूपत्वेनाकृत्रिमत्वात् चिन्मात्रदेहेन भोगः सम्भवतीति सूचनेन सूचितः ।) ॥ ५ ॥

## संकल्पाधिकरणम् IV-4-6

**न्या.वि.— न च भगवदोकसि स्थितत्वान्मुक्तस्य तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनं वाच्यम् । निर्दोषत्वात्तदोकसो मुक्तस्य च सङ्कल्पादेवेति श्रुत्यनुसारेणोपपत्तेः ॥ ६ ॥**

**भा.बो.—** ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ॥ इत्यत्र लोकदृष्टत्वलौकिकत्वाभ्यां मुक्तभोगः किं तत्तदुपायसाध्यसाधनसाध्य उत सङ्कल्पमात्रसाध्य इति सन्देहे तत्तदुपायसाध्यसाधनसाध्य इति पूर्वः पक्षः । सङ्कल्पमात्रसाध्य इति सिद्धान्तः । तत्र 'तदोकः' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च भगवदोकसीति ॥ तस्यापि भगवदोकसोऽपि । ओकस्त्वस्याप्रयोजकत्वशङ्कानिरासार्थमुक्तं ओकस्त्वसाम्येनेति । भूम्याद्योकसेत्यर्थः । अन्यथा लोकविरोधापातादिति भावः । भगवदोकस एवंविधत्वेऽपि मुक्तभोगस्य तत्तदुपायसाध्यसाधनसाध्यत्वे किमायातमित्यत उक्तं ॥ भगवदोकसि स्थितत्वान्मुक्तस्येति ॥ तत्तदुपायसाध्यं भोगसाधनं यस्य मुक्तस्येति विग्रहः । एवं च मुक्तेरपि संसारसमानधर्मत्वादपुरुषार्थत्वमिति नेति भावः । (अयं च न्यायः भगवदोकस ओकस्त्वसाम्यान्मुक्तिगतस्य भोगोऽप्रयत्नापेक्ष इति विपक्षव्यावर्तकेन चशब्देन सूचितः । तदुक्तं तत्वप्रकाशिकायाम् 'चशब्दो विपक्षनिवृत्त्यर्थ(व्यावर्तक)तया व्याख्यातः' इति ।) तद्धेतुत्वेन 'अस्तदोषः' इत्युक्तसिद्धान्तन्यायं अपेक्षितांशपूरणेन विवृणोति ॥ निर्दोषत्वादिति ॥ तदोकसो- भगवदोकसः । तथा च भगवदोकस्त्वसाम्येऽपि भगवदोकसो लोकविरोधस्यैवायुक्तत्वान्मुक्तौ भोगस्य सङ्कल्पमात्रसाध्यत्वाङ्गीकारे न

लोकविरोधो बाधक इति भावः । बाधकाभावमात्रेण नार्थसिद्धिरित्यतः साधकमाह ॥ सङ्कल्पादेवेति ॥ स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीति श्रुत्युक्तानुसारेण सङ्कल्पमात्रसाध्यभोगवत्त्वस्योपपत्तेरित्यर्थः। एवं च भगवदोकसो निर्दोषत्वान्मुक्तभोगस्य सङ्कल्पमात्रसाध्यत्वमिति युक्तं तस्य पुरुषार्थत्वमिति भावः । (अयं च न्यायः 'सङ्कल्पादेव' इत्यनेन भगवदोकसः सदोषत्वे तत्प्राप्तस्य भुक्तस्य सङ्कल्पादेव कामितप्राप्तिर्न सम्भवतीति सूचनेन सूचितः ।) ॥ ६ ॥

## अनन्याधिकरणम् IV-4-7

**न्या.वि.— न च परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते । निर्दोषत्वादेव मुक्तस्येश्वरस्य तत्रस्थानां मुक्तान्तराणां च राजदोषवद्दोषासम्भवाद्यथायोग्यमेव स्वीकारोपपत्तेः ।**

**मुक्तानां पतयो देवा देवानां च प्रजापतिः ।**
**तस्य विष्णुर्न चैवेदं पारावर्यं विनश्यति ॥ इति श्रुतेः ॥७॥**

भा.बो.— ॐ अत एव चानन्याधिपतिः ॐ ॥ इत्यत्रोभयथापि सम्भवान्मुक्तः क्लृप्तपतिभ्योऽन्यपतियुक्तो न वेति सन्देहे मुक्तस्याधमा अपि पतयः सन्तीति पूर्वः पक्षः । न सन्तीति सिद्धान्तः । तत्र 'तदोकः' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च परगृहगतत्वादिति ॥ अप्रयोजकत्वशङ्कापरिहारार्थमुक्तं ॥ राजगृहगतस्येवेति ॥ अन्यथा लोकविरोधः स्यादिति भावः । एवं च तदोकसि स्थितत्वान्मुक्तावधमा अपि पतयः सन्तीति मुक्तेः संसारसमानधर्मत्वादपुरुषार्थत्वमिति भावः । (अयं च न्यायः राजगृहगतस्येव भगवदोकोगतस्यापि मुक्तस्य स्वाधमनियम्यत्वमिति विपक्षव्यावर्तकेन चशब्देन सूचितः ।) तद्धेतुत्वेन 'अस्तदोषः' इत्युक्तमेव सिद्धान्तन्यायं विवृणोति ॥ निर्दोषत्वादेवेति ॥ मुक्तस्य नियम्यस्य । ईश्वरस्य प्रयोजकस्य । मुक्तान्तराणां प्रयोज्यानां च । राजेति तद्गृहं गतस्य प्रतिहारादीनां



चोपलक्षणम् । राजगृहगतस्य स्वाधमनियम्यत्वं राजादीनां दोषवत्त्वाद्युक्तम् । अत्र भगवदोकोगतमुक्तस्य सर्वनियामकेश्वरस्य मुक्तान्तराणां च सत्यसङ्कल्पत्वेन निरस्ताज्ञानविरुद्धकामादिदोषवत्त्वादेव यथायोग्यमेवाधमोत्तमभावानतिक्रमेणैव नियम्यनियामकभावस्वीकारोपपत्तेरिति भावः । ननु निर्दोषत्वे प्रमाणमाह- मुक्तानामिति । एवं च भगवदोकोगतत्वेऽपि मुक्तस्य निर्दोषत्वादधमनियम्यत्वाभावाद्युक्तं मुक्तेः पुरुषार्थत्वमिति भावः । (अयं च न्यायः 'अत एव' इत्यनेन सत्यसङ्कल्पत्वादेव स्वाधमनियम्यत्वं नेति वदता ईश्वरादेः सदोषत्वे सत्यसङ्कल्पत्वमेव न स्यादिति सूचनेन सूचितः ।) ॥ ७ ॥

## अभावाधिकरणम् IV-4-8

**न्या.वि. — न च देहभावे तत्कार्यदुःखादिस्तदभावे भोगासम्भव इति दोषः ।**

**'देहाभावाच्च भावाच्च निर्भोगित्वं च दुःखिताम् ।**
**यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यतः ॥'**
**इति श्रुत्यैव विशेषक्लृप्तेः ॥ ८ ॥**

भा.बो.— ॐ अभावं बादरिराह ह्येवम् ॐ ॥ इत्यत्र वादिविप्रतिपत्त्या मुक्तानां भोगो युज्यते न वेति सन्देहे नेति पूर्वः पक्षः । युज्यत इति सिद्धान्तः । तत्र 'समस्तकार्यम्' इत्युक्तपूर्वपक्षन्यायं विवृण्वन् प्रतिक्षिपति ॥ न च देहभाव इति ॥ देहिनो दुःखादिनियमदर्शनादिति भावः । अभिमानसाहित्येनेत्यपि द्रष्टव्यम् । तेन न सुप्त्यादौ व्यभिचारः । न च देहवत्त्वमप्रयोजकम् । 'न ह वै (स) शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्यनुगृहीतत्वात् । तर्हि मास्तु देहः इत्यत आह ॥ तदभाव इति ॥ देहरहितस्य भोगादर्शनादिति भावः । न च चिच्छरीरब्रह्मदेहाभ्यां भोगः समर्थित एवेति वाच्यम् । चिच्छरीरस्य सुप्त्यादौ विद्यमानस्यापि भोगायतनत्वादर्शनात् । ब्राह्मेण देहेन सायुज्यभाजां भगवत्प्रवेशदशायामेव गृहवदुपपत्तावपि तदन्येषामनुपपत्तेरित्यधिकाशङ्काया प्रत्यवस्थानादिति भावः । एवं च मुक्तस्य देहाभावे भोगासम्भवाद्देहसद्भावे तत्प्रयुक्तसमस्तकार्यप्राप्त्या मोक्षे दुःखासम्भिन्नसुखाप्राप्त्याऽपुरुषार्थत्वमिति नेति

भावः । (अयं च न्यायः 'प्रदीपवदावेशः' इत्यनेन यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्रत्यं तैलमेव भुङ्क्ते न तु काष्ण्र्यादि तद्वन्मुक्तस्य देहसम्बन्धेऽपि सुखमेव भुङ्क्ते न दुःखमिति दुःखाद्यभावप्राप्तिं समर्थयता सूचितः ।) तद्धेतुत्वेन 'विशेषक्लृप्तिः' इत्युक्तसिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ देहाभावाच्चेति ॥ आद्यद्वितीयचशब्दावितरेतरसमुच्चये । प्रलयादाविति शेषः । दुःखितां चेति चशब्दसम्बन्धः । देहाभावाच्चेत्यादेर्निर्भोगित्वमित्यादिना यथाक्रमं सम्बन्धः । मुक्तस्य निर्भोगित्वं दुःखित्वं च न यात्येवेत्येवार्थकचतुर्थच-शब्दसम्बन्धः । मुक्तानां देहसद्भावेन निर्भोगित्वासम्भवेऽपि दुःखं स्यादित्यत आह ॥ मुक्तानामिति ॥ वशिता वश्यप्रकृतितेत्यर्थः । तथा च मुक्तस्य वश्यप्रकृतित्वेन प्रकृतिवशत्वाभावाद्वश्यवह्न्यादिपुरुषस्य तद्योगजन्यदुःखा-भाववन्मुक्तस्य ब्राह्मदेहाङ्गीकारेऽपि दुःखाभावोपपत्तिरित्यर्थः । एवं च श्रुत्यैव विशेषक्लृप्तेर्युक्तं मोक्षस्य पुरुषार्थत्वमिति भावः । (अयं च न्यायः 'विकल्पाम्नानात्' इत्यनेन 'तथा हि दर्शयति' इत्यनेन च 'अथाऽऽनन्दी ह्येवैष भवति' इत्यादिश्रुत्या सुखमात्रानुभवित्वरूपविशेषस्य क्लृप्तत्वादिति वदता सूचितः ।) ॥ ८ ॥

## जगद्व्यापाराधिकरणम् IV-4-9

न्या.वि. — न च सङ्कल्पादेव समस्तसम्भवात्सृष्ट्यादि-समस्तकार्यसम्भवः । व्यापारो जगतो विष्णोर्मुक्तानां तु स्वभोगगः ।

न हि स्वर्णं शुद्धमपि वह्निकार्यकरं भवेत् ।
अयोग्यशक्तितस्त्वेव नाधिकानन्दसम्भवः ।
न हि कश्चित्सुशक्तोऽपि चकाराचेतनं चितिम् ।
न च कामस्तथा भूयात्ततः स्यात्सत्यकामिता ॥
इति श्रुत्या विशेषक्लृप्तेरेव ।



मुक्तानां न जगद्यत्नस्तथापि विबुधाः सदा ।
मुक्तानां तु नियन्तारस्तेषां ब्रह्माऽस्य वै हरिः ॥
इति च विशेषक्लृप्तिः ॥ ९ ॥

भा.बो.— ॐ जगद्व्यापारवर्जम् ॐ ॥ इत्यत्र मुक्तानां सत्यसङ्कल्पेन जगत्सृष्ट्यादेरीश्वरधर्मत्वोक्त्या च मुक्ताः किं जगत्सृष्ट्यादिव्यापारानाप्नुवन्ति न वेति सन्देहे आप्नुवन्तीति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'समस्तकार्यम्' इत्युक्तमेव पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति । ॥ न च सङ्कल्पादेवेति ॥ मुक्तस्येति शेषः । सत्यसङ्कल्पत्वेन कामितसमस्तप्राप्तिसम्भ-वात्सृष्ट्यादिसमस्तव्यापाराणां मुक्तकाम्यत्वात्सृष्ट्यादिसमस्तकार्यसम्भव इत्यर्थः । न चाप्रयोजको हेतुः । 'सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्' इति श्रुतेः । सृष्ट्यादिव्यापारस्य मुक्तकाम्यत्वात्कामिताप्राप्तौ मुक्तस्य सत्यकामत्वमेव न स्यादिति बाधकसत्वादिति भावः । एवं च मुक्तानां सत्यसङ्कल्पत्वेन जगत्सृष्ट्यादिसमस्तव्यापारप्राप्तेः न युक्तं लक्षणसूत्रमिति नेति भावः । (अयं च न्यायः 'जगद्व्यापारवर्जम्' इति प्रतिषेधेन 'प्रत्यक्षोपदेशात्' इत्यनेन चेशगतजगद्व्यापाराद्यैश्वर्याणां सर्वदेवतापूज्यत्वादीनां समस्तानां कार्याणां च सङ्कल्पादेव सम्भवतीति सूचनेन सूचितः ।)

तद्धेतुत्वेन 'विशेषक्लृप्तिः' इत्युक्तमेव सिद्धान्तन्यायं प्रमाणोदाहरणपूर्वकं विवृणोति ॥ व्यापार इति ॥ जगत इति सम्बन्धे षष्ठी । सम्बन्धश्च विष्णोर्व्यापारेण जगतो विषयविषयिभावः । स्वभोगगः स्वभोगविषय एवेति सावधारणम् । व्यापार इत्यनुवर्तते । ननु मुक्तस्याज्ञानाद्यपगमेन शुद्धत्वाभिव्यक्तज्ञानत्वादिना जगद्व्यापारः किं न स्यादित्यत आह ॥ न हि स्वर्णमिति ॥ वह्निकार्यं प्रकाशदाहादिकम् । अयोग्यशक्तित इति पूर्वोत्तराभ्यां सम्बध्यते । अयोग्यशक्तित एव तद्योग्यतारहितत्वादेव न तु प्रतिबन्धादि-सद्भावादित्यर्थः । अधिकानन्दसम्भवस्त्विति तुशब्दसम्बन्धः । जगद्व्यापार-स्याप्युपलक्षणम् । अयोग्यकार्यस्य शक्त्यविषयत्वे दृष्टान्तमाह ॥ न हीति ॥ चितिं चेतनम् । तर्हि सत्यकामत्वहानिः स्यादित्यत आह ॥ न च कामस्त्विति

॥ नन्वस्मिन्नधिकरणे 'जगद्व्यापारवर्जम्' इति सूत्रेण सृष्ट्यादिव्यापारव्यतिरिक्त-स्वावरनियामकत्वं सिद्धान्तत्वेनोक्तम् । तत्र सृष्ट्यादिव्यापारप्राप्तिरूपसिद्धान्तांश-स्योक्तरीत्या विशेषक्लृप्त्यालाभेऽपि स्वावरनियामकत्वप्राप्तौ का युक्तिरित्यतस्तत्रापि विशेषक्लृप्तिमेव तादृशप्रमाणोदाहरणपूर्वकं विवृणोति ॥ मुक्तानामिति ॥ यद्यपीति शेषः । एवं च श्रुत्यैव विशेषक्लृप्तेर्मुक्तस्य जगद्व्यापाराभावाद्युक्तं लक्षणसूत्रमिति भावः । (अयं च न्यायः 'आधिकारिकमण्डलस्थोक्तेः' इत्यनेन 'तथा हि दर्शयति' इत्यनेन चेश्वरगतजगद्व्यापारव्यतिरिक्तस्वयोग्यकामानुभवितृत्वं स्वावरनियामकत्वं महाचमस्यशब्दोक्तचतुर्मुखस्यैव सर्वदेवाभिपूज्यत्वमित्येवंरूपस्य विशेषस्य श्रुतिक्लृप्तस्यैव ग्राह्यत्वादिति वदता सूचितः ।) ॥ ९ ॥

## स्थित्यधिकरणम् IV-4-10

**न्या.वि.— न च वशित्वान्मुक्तस्यापि वृद्धिः । कृतकृत्यत्वेन निःश्रमत्वादुपासनादावभ्यासपाटवान्निर्दोषत्वात्स्नेहाधिक्याच्च तस्यैव परमसुखरूपत्वेन फलरूपत्वात् ।**

**अभ्यासपाटवात्स्नेहादश्रमत्त्वादुपासना ।**
**भक्तिश्च सुखरूपैव मुक्तानां न तु साधनम् ॥**

**इति श्रुतिः ॥ १० ॥**

भा.बो.— ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ॥ इत्यत्र लोकदर्शनालौकिकत्वाभ्यां मुक्त आनन्दादिवृद्धिह्रासवान्न वेति सन्देहे वृद्ध्यादिमानिति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'वशिता' इत्युक्त पूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न च वशित्वादिति ॥ वृद्धिः आनन्दादेः । मुक्तस्य वशित्वात्कामिताशेषप्राप्तेरानन्दादिवृद्धेरिष्टत्वे-नाकामनानुपपत्तेर्युक्ता सुखाभिवृद्धिरिति भावः । किं च 'एतत्साम गायन्नास्ते' इत्यादिना मुक्तस्याप्युपासनाश्रवणात्सुखादिवृद्धिरेष्टव्या । अन्यथा तद्वैयर्थ्यादिति । एवं च वशित्वेन मुक्तस्यापि वृध्यादिसद्भावात्संसारसमानधर्मत्वेन



मुक्तेरपुरुषार्थत्वमिति नेति भावः । (अयं च न्यायः 'स्थितिमाह' इत्यनेन यथावस्थित एव मुक्तस्तिष्ठति न वृद्धिह्रासवानिति सूचनेन सूचितः ।) तद्धेतुत्वेन 'कृतनिःश्रमश्च' इत्युक्तसिद्धान्तन्यायं विवक्षितांशपूरणेन विवृणोति ॥ कृतकृत्यत्वेनेति ॥ मुक्तस्येति शेषः । अयं भावः । वशित्वेनापाद्यमाना वृद्धिः किं योग्यस्योतायोग्यस्य । नाद्यः । कृतकृत्यत्वेन योग्यस्य प्राप्तत्वेन निश्रमत्वात्तद्विषयकश्रमाभावात् । न द्वितीयः । कृतकृत्यत्वेन मुक्तत्वेन 'न चायोग्यं मुक्तिगोऽपि प्राप्नुयान्न च कामयेत्' इति मुक्तस्यायोग्यकामनानिषेधेन निश्रमत्वादयोग्यफलरागादिदोषरहितत्वात् । तथा च वशित्वमप्रयोजकमिति । अनेन अनुव्याख्याने कृतशब्देन कृतकृत्यत्वं चशब्देन उपासनादावभ्यास-पाटवादीत्युच्यत इति विवृतं भवति ।

नन्वेवं सत्युपासनादिकारणं न स्यादित्येतस्यान्यथासिद्धिप्रतिपादनपरतयापि कृतनिःश्रम इत्युक्तन्यायं विवृणोति ॥ कृतकृत्यत्वेनेति ॥ उपासनादावित्यत्रापि सम्बध्यते । कृतेत्यतः पूर्वं मुक्तस्येति, फलरूपत्वादित्यतः परं तदुपासनं न साधनमित्यपि पूरणीयम् । कृतकृत्यत्वेन मुक्तत्वेनोपासनादिविषये निःश्रमत्वाच्छ्रमादिदोषरहितत्वादसाधनरूपमप्युपासनादि मुक्तेन क्रियत इत्यर्थः । अत्रैव समुचितयुक्तिमाह ॥ उपासनादाविति ॥ मुक्तस्य श्रमाभावे कार्यान्तराकरणेनोपासनादिकरणे किं निमित्तमित्यत उक्तम् ॥ अभ्यासेति ॥ तर्हि संसारकालाभ्यस्तं निषिद्धमपि कुर्यादित्यत उक्तम् ॥ निर्दोषत्वादिति ॥ तथाप्युपासनादेर्विष्णुविषयत्वे किं निमित्तमित्यत उक्तम् ॥ स्नेहाधिक्याच्चेति ॥ विष्णाविति शेषः । एवमपि निष्प्रयोजनमुपासनादिकं किमर्थं क्रियत इत्यत उक्तम् ॥ तस्यैवेत्यादि ॥ तत्र प्रमाणमाह ॥ अभ्यासपाटवादिति ॥ एवं च कृतनिःश्रमत्वेन मुक्तानां वृध्याद्यभावाद्युक्तं मोक्षस्य पुरुषार्थत्वमिति भावः । (अयं च न्यायोऽनुमानपदेन वृध्यादौ कारणाभावरूपानुमानोक्त्या मुक्तेन स्वयोग्यस्य प्राप्तत्वात्कृतकृत्यत्वेन निर्दोषत्वात् फलरागादिदोषस्य कारणाभावाद-योग्यप्राप्त्याऽपि वृद्धिर्नेति सूचितः ।) ॥ १० ॥ श्रीः ॥

## अनावृत्यधिकरणम् IV-4-11

न्या.वि.— न चानन्तत्वात्कालस्य त्रयोदशी पञ्चदशीवत्कदाचित्समस्तस्यापि सम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति वाच्यम्। सत्यकामत्वादिमाहात्म्यात् ।

अशेषकामसत्यत्वान्मुक्तानां न पुनर्भवः ।
यस्मात्स कामयेदेव नित्यमात्मापुनर्भवम् ॥

इति च श्रुतिः ॥ ११ ॥

इत्यनन्तमहान्यायमीमांसापारवारिधेः ।
उत्तारणात्यशक्त्यैव व्याकुलीकृतचेतसाम् ॥
मन्दानामुपकाराय महतां चोच्छ्रितात्मनाम् ।
तद्विशेषपरिज्ञानप्रदीप्तार्काभचेतसाम् ॥
विशेषगाढे मनसि नितरामुपकारकः ।
न्यायप्लवो मयाऽकारि सङ्क्षेपात्प्रमिताक्षरैः ॥
विस्तरोऽप्ययमेव स्यात्तद्विशेषातिवेदिनाम् ।
व्याख्यानुव्याख्ययोरेव विस्तारो यदुदीरितः ॥
अनल्पचेतसां पुंसामलं विज्ञानसिद्धये ।
तन्न्यायोद्धरणे शक्ता अपि ह्येतेन सुस्थिरम् ॥
न्यायानुगं मनः कुर्युरिति सङ्ग्रहलालसाः ।
को नामाशेषविद्योरुसागरोन्मथनोद्धृतम् ॥
साक्षाद्विद्याधिराजेन न्यायामृतमनुत्तमम् ।
अशेषतोऽधिगच्छेत वन्द्यो वृन्दारकोऽपि सन् ॥
एवं सुदुर्लभेऽप्यद्धा महान्यायपरामृते ।
केचनाधिक्रियन्तेऽत्र तत्प्रसादानुरञ्जिताः ॥
ब्रह्माद्या अमृते यद्वत्सागरोन्मथनोद्धृते ।
अहं तु तत्प्रसादैकमहास्पदबलोद्धतः ॥



न्यायामृतार्णवमिममवगाह्य विभज्य च ।
संक्षेपविस्तराभ्यां च चकार व्याकृतिं कृतिम् ॥
तत्प्रसादमृते कस्य शक्तिः संसारसागरे ।
मग्नस्य चेतनस्य स्यात्तत्कृतानुकृतौ क्वचित् ॥
नित्यानन्दामृतस्यन्दि तत्कटाक्षैधितस्य तु ।
का नु शक्तिर्भवेन्नैव ततः कोऽत्रातिविस्मयः ॥
विद्याऽविद्ये सुखं दुःखमशक्तिः शक्तिरेव च ।
उत्पत्तिस्थितिनाशाश्च विशेषाश्च परेऽखिलाः ॥
चेतनाचेतनस्यास्य समस्तस्य यदिच्छया ।
स मम स्वकृतेनैव प्रीयतां पुरुषोत्तमः ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥
नमोऽज(ब्ज)भवभूर्यक्षपुरःसरसुराश्रयः ।
नारायणारणं मह्यं मापते प्रेयसां प्रिय ॥

॥ इति श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
चतुर्थाध्यायस्य चतुर्थः पादः ॥

श्रीमन्न्यायविवरणं सम्पूर्णम् ॥

भा.बो.— ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ ॥ इत्यत्रोभयथापि सम्भवात्किं मुक्तः पुनरावर्तते न वेति सन्देहे । पुनरावर्तत इति पूर्वः पक्षः । नेति सिद्धान्तः । तत्र 'विश्वसम्भावना' इत्युक्तपूर्वपक्षन्यायं तत्साध्यप्रदर्शनपूर्वकं विवृण्वन् प्रतिक्षिपति ॥ न चानन्तत्वादिति ॥ अनन्तत्वादिति पञ्चमी सप्तम्यर्थे । अनन्तत्वेऽपीत्यपिशब्दसम्बन्धः । इदानीमपरिदृश्यमाना मुक्तपुनरावृत्तिः कदा स्यादित्यत उक्तम् ॥ अनन्तत्वात्कालस्येति ॥ समस्तस्यापीति ॥ कालस्येत्यनुवर्तते । समाप्तेरिति शेषः । तत्र दृष्टान्तमाह ॥ त्रयोदशीति ॥

त्रयोदशी पञ्चदशीति भावप्रधानो निर्देशः । अयमर्थः । यद्यपि स्वर्गादिगतानां युगमन्वन्तरादिवासित्वेन पुनरावृत्तिसम्भवेऽपि मुक्तानां समस्तकालवासित्वेन न पुनरावृत्तिसम्भवः तथापि भारतयुद्धे त्रयोदश्या एव पञ्चदशीत्वनिर्देशात्तत्र तिथित्रयस्य युगपत्समाप्तिवदनन्तत्वेऽपि कालस्य समस्तस्यापि कदाचिद्युगपत्समाप्तिसम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति । एवं च विश्वस्य समस्तस्य कालस्य समाप्तिसम्भावनया मुक्तस्य पुनरावृत्त्याशङ्केति न वाच्यमिति भावः । (अयं च न्यायः 'अनावृत्तिः' इत्यनेन मुक्तानामावृत्त्यभावं समर्थयता कालस्यानन्तत्वाद्भारतयुद्धे त्रयोदश्याः पञ्चदशीत्वस्यासम्भावितस्य कदाचित्सम्भवान्मुक्तस्यावृत्तिरिति सूचितः ।) तद्धेतुत्वेन 'माहात्म्यम्' इत्युक्तसिद्धान्तन्यायं विवृणोति ॥ सत्यकामत्वादीति ॥ आदिपदेन सर्वकामावाप्तिः । ननु सत्यकामत्वादिमाहात्म्येऽपि मुक्तस्य कुतो न पुनरावृत्त्याशङ्केत्यप्रयोजकत्वशङ्कापरिहारपूर्वकमुक्तार्थप्रतिपादकं प्रमाणमाह ॥ अशेषेति ॥ अशेषेत्यतः पूर्वं स्वयोग्येत्युपस्कर्तव्यम् । कामानां सत्यत्वं नाम प्राप्तव्यार्थमात्रविषयत्वनियमः । मुक्तानामित्यस्योभयत्रापि सम्बन्धः । ननु मुक्तानामशेषकामसत्यत्वेऽपि अपुनर्भवकामनाभावेन पुनर्भवसम्भवादप्रयोजको हेतुरित्यत उक्तम् ॥ यस्मादिति ॥ स मुक्तवर्गः नित्यं कामयेदेव न तु कदाचिन्न कामयेत् । दुःखासम्भिन्नस्वरूपसुखानुभवस्य शुभरूपत्वात् । न हि कश्चिच्छुभात्पुनरावृत्तिकामोऽस्तीति । यदुक्तं समस्तस्यापि कालस्य कदाचित्समाप्तिसम्भव इति । तद्व्याहतत्वादुपेक्षणीयमेवेति न दूषितम् । एवं च मुक्तानां सत्यकामत्वादिमाहात्म्यात्पुनरावृत्त्यभावेन युक्तं मोक्षस्य पुरुषार्थत्वमिति भावः ॥ ११ ॥ श्रीः ॥

इदानीं स्वकृतग्रन्थे तन्मूलभूतन्यायग्रथनात्मकसूत्ररूपमीमांसाशास्त्रेऽपि शिष्याणां बहुमानातिशयोत्पादनार्थं स्वकृतग्रन्थस्यानन्यसाध्यत्वरूपमत एव व्याख्येयमीमांसाशास्त्रस्य दुरवगाह्यत्वादिरूपं माहात्म्यं वर्णयन् स्वग्रन्थस्य प्रयोजनमाह ॥ इत्यनन्तेत्यादिना । इतिशब्दः प्रकारार्थः आद्यार्थश्च । अनन्तत्वं संख्यया । महत्त्वं व्याप्त्यादिमत्वेन । न्यायप्रतिपादकमीमांसावारिधेरपारत्वं दुरवगाह्यत्वं बह्वर्थत्वेन । अत एवोत्तारणे व्याख्यानादिरूपेऽत्यशक्तिः ।



एवकारेण व्याकुलीकृतचेतस्त्वस्य शब्ददोषादिदर्शननिमित्तकत्वं व्यावर्तयति । उत्तारणेऽत्यशक्तिरेव कुत इत्यत उक्तम् ॥ मन्दानामिति ॥ तर्हि ज्ञान्युपादेयता न स्यादित्यत आह ॥ महतामिति ॥ उक्तसमुच्चयार्थश्चशब्दः । उच्छ्रितात्मनां बहुविषयज्ञानसाधनमानसानाम् । तेन न्यायप्लवेन जातेन विशेषज्ञानेन मध्याह्नसूर्यसदृशचेतसाम् । मनसि मीमांसाऽपारवारिधौ विशेषगाढे सति । महतामित्यस्योपकारक इत्यनेनापि सम्बन्धः । विशेषज्ञानहेतुत्वान्नितरामित्युक्तम् । न्यायप्लवो न्यायमालारूपः । अर्थसङ्क्षेपस्य बह्वक्षरैरपि सम्भवात्प्रमिताक्षरैरित्युक्तम् । प्रमिताक्षरत्वं त्वल्पाक्षरोपेतैकपदादेरेव पूर्वोत्तरपक्षन्यायप्रतिपादकत्वमनेकाधिकरणसम्बन्धिन्यायप्रतिपादकत्वं च द्रष्टव्यम् ।

ननु यदि न्यायमालारूपग्रन्थेनैव विशेषपरिज्ञानं तर्हि न्यायविवरणं व्यर्थमित्याशङ्क्य परिहरति ॥ विस्तरोऽपीत्यादीना ॥ अपि यद्यपि । कथं तद्विशेषातिवेदनमित्यत उक्तम् ॥ व्याख्येति ॥ भाष्यानुव्याख्यानयोरेव विस्तरो न्यायप्रपञ्चनरूपो यस्मात्तस्मात्ताभ्यां विशेषातिवेदनमिति पूर्वेण सम्बन्धः । तथाप्यनल्पचेतसां पुंसामलमतिशयेन विशेषज्ञानसिद्ध्ये न्यायविवरणरूपो विस्तरः कृत इति शेषः । अनेनाल्पचेतसां विस्तराभावे ज्ञानमेव न स्यादिति तत्करणस्यावश्यकत्वं सूचितम् । ननु यदि व्याख्याऽनुव्याख्ययोरेव विस्तर उदीरितस्तर्हि ताभ्यामेव ज्ञानसम्भवान्न्यायमालारूपसङ्ग्रह एव व्यर्थो दूरे तद्विवरणमित्यत आह ॥ तन्न्यायेति ॥ येऽल्पचेतसः । न केवलं सूचितन्यायोद्धरणेऽशक्ताः किं तु तयोर्व्याख्याऽनुव्याख्ययोरुक्तानां न्यायानामुद्धरणेऽप्यशक्ता एते मनो न्यायानुगं न कुर्युः । सङ्क्षेपविस्तररूपग्रन्थद्वयेन मनो न न्यायानुगं कुर्युः । तथा येऽनल्पचेतसः तन्न्यायोद्धरणे शक्ता अपि सङ्ग्रहलालसा एते मनो न्यायानुगं सुस्थिरं न कुर्युः । एते न सुस्थिरं कुर्युः । हि यस्मात्तस्मात्सङ्ग्रहविस्तररूपग्रन्थद्वयं कृतमित्यर्थः । ननु कचित्तन्न्यायोद्धरणे शक्तास्तर्हि तेनैव सूचितन्यायोद्धारेण सङ्ग्रहः कर्तुं शक्यत इत्यत आह ॥ को नामेति ॥ अशेषविद्या उरुसागरा इव । साक्षान्मुख्यतः । न्यायामृतं न्यायप्रतिपादकसूत्रात्मकम् । मोक्षहेतुत्वादमृतवत् । अशेषतः । स्वसङ्गृहीतन्यायप्रतिपादकत्वादिना । अन्यथोक्त्यभावे । कैमुत्यद्योतनार्थं

वृन्दारकोऽपीत्युक्तम् । एवं तर्हि मीमांसाशास्त्रं निरधिकारिकं स्यादित्यत आह ॥ एवमिति ॥ अद्धा निश्चयेन । केचन ब्रह्माद्या इत्येतदत्रापि सम्बध्यते । ननु यदि ब्रह्माद्या एवाधिक्रियन्ते तर्हि स्वेन कथं सङ्क्षेपविस्तरौ कृतावित्यत आह ॥ अहं त्विति ॥ अनेन स्वस्य मुख्यवाय्ववतारत्वरूपविशेषं द्योतयति । भगवत्प्रसादरूपमुख्याश्र(य)वणबलेनाभिवृद्धः । सङ्क्षेपेण कृतन्यायप्लवं विस्तरेण व्याकृतिं न्यायविवरणं चेत्यर्थः । ननु ग्रन्थकरणे वाक्यार्थज्ञानकरणपाटवादिना भवितव्यम् । ईश्वरप्रसादस्य तु क्वोपयोग इत्यतो ज्ञानादेरीश्वरप्रसादसाध्यत्वेऽन्वयव्यतिरेकावाह॥ तत्प्रसादमिति ॥ कारणताग्रहे व्यतिरेकस्य प्राधान्यादादौ तदुक्तिः । का शक्तिर्न भवेत्सर्वापि भवेदित्यर्थः । न केवलं ग्रन्थकरणे शक्तेरेव भगवदधीनत्वं किं तु सर्वस्यापीति वदन्ननेन ग्रन्थेन भगवत्प्रीतिमाशास्ते ॥ विद्येत्यादिना ॥ परे नियमनाद्याः । 'न ऋते त्वत्क्रियते' इति श्रुतेरिति भावः । तदेवोपपादितं विद्येत्यादिना । विष्णुज्ञानवत्स्वज्ञानस्याप्यधिकारिणां मोक्षहेतुत्वात्स्वरूपप्रदर्शनपूर्वकं स्वग्रन्थप्रतिपाद्यमाह ॥ यस्येति ॥ इदं पद्यं टीकाकारैरेव तत्र तत्र व्याख्यातम् । देवतानमनेन ग्रन्थः समापनीयो न तु स्वस्तवनेनेत्याशयेनाह ॥ नम इति ॥ प्रेयसां सकाशादिति शेषः । अरणमित्यपि सम्बोधनम् । अरणं भवेति शेषो वा ।

**सम्पूर्णविज्ञानसुखादियुक्तो दोषोज्झितः सर्वसुमानमेयः ।**
**ब्रह्मादिसज्जीवगतिः परेशो नारायणः प्रीतियुतो मयि स्यात् ॥**
**तत्वप्रकाशिकासंस्थो मयाऽनुग्रहतो हरेः ।**
**सन्न्यायविवृतेर्भावो बालबोधार्थमुद्धृतः ॥**

ॐ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थचरणप्रदर्शिततत्वप्रकाशिकागतन्यायविवरणभावोद्धारे चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥